प्यारी मंगतायार

मेरी याद के रूप में

पी. कणकम्

60. 4. 56

॥ श्री लक्ष्मीगणपतये नमः ॥

श्रीमदन्नम्भट्ट विरचिततर्कसंग्रहदीपिकाव्याख्यानरूपम्
कृत्स्नमूलग्रन्थसहितम् पारिभाषिकपदार्थसंग्रहयुतम्
स्वकीय याटिप्पण्यामपलङ्कृतम्

# दीपिकासर्वस्वम्

श्री वेमूर्युपाख्य रामब्रह्मसुधीन्द्रगुरुवरपदपङ्कजसेवासमधिगतविज्ञानेन
तेनालि संस्कृत विद्याशालायांतर्कालङ्कारशास्त्राध्यापकेन कृष्णा
तटिनी समीपवर्तिवेमूरुग्रामवास्तव्येन कुरुगण्ट्युपाख्य
सूर्यनारायण शास्त्रि द्वितीयतनयेन तर्कसंग्रह
सर्वस्व पञ्चलक्षणीसर्वस्वकृता
कुरुगंटि श्रीरामशास्त्रिणा
न्यायशास्त्रव्युत्पित्सूनामुपकाराय विरचितम् ।

अमृताञ्जनान्ध्रपत्रिकादिप्रकाशकानां मद्रनगरवास्तव्यानां
विश्वदातृबिरुदाङ्कित देशोद्धारक
काशीनाथुन्युपाख्य नागेश्वर राय महोदयानां
धनसाहाय्येन

मद्रपुरी विराजमान
हिन्दी प्रचार मुद्राशालायां
मुद्रापितं सत् विजयते तमाम्

विभवनाम संवत्सरः



अस्य मूल्यं सार्ध रूप्यकद्वयम् 2-8-0 प्रापणव्ययः पृथक
Concession not shown regarding the price of the books.

मुखविलासः—

कुरुगंटि श्रीराम शास्त्री,

तर्क पंडितः

तेनालि पोस्ट गुण्टूर डिस्ट्रिक्ट,

मद्रास प्रेसिडेन्सी.

संस्कृतान्ध्रांग्लभाषास्वन्यतमया भाषया त दन्यतमया लिप्या च विषयः स्वकीयग्रामनामादिकं (जिल्ला तालूका प्रभृति) विलेखनीयम् ॥

अङ्कन्तु. आन्ध्रलिप्या आंग्ललिप्या वा लेखनीयम् ॥

*N. B. All Correspondence in English, Telugu or Sanskrit, the Superscription in English or Telugu only*

**Foreign price for Copy 6 Shillings**

*Addess*

Kuruganti Sreeramasastry,

*Tarka Pandit.*

Tenali (P O ) Guntur District,

***Madras Presidency, South India.***

महाशयाः !

**तर्कसङ्ग्रह सर्वस्वम्**—श्रीमदन्नम्भट्टविरचिततर्कसङ्ग्रहव्याख्यान रूपं, दशोत्तरशताधिकपृष्ठमुद्रितपारिभाषिकपदार्थसङ्ग्रहसहितम्, निजटिप्पणीमूलग्रन्थाभ्यामुपशोभितम्, षष्ठ्युत्तरशतद्वयाधिकपृष्ठमुद्रितस्यास्यमूल्यम्, रु. २–०–० रूप्यकद्वयम्

**पञ्चलक्षणी सर्वस्वम्**—मथुरानाथीयपञ्चलक्षणी व्याख्यानरूपम्, एतदुपयुक्तपारिभाषिकपदार्थसङ्ग्रहस्वीयटिप्पणीमूलग्रन्थैरुपशोभितम्, पञ्चाशदुत्तरशताधिकपृष्ठमुद्रितस्यास्यमूल्यम् रु. १-४-० पादरूप्यकम्। सर्वेषां प्रापणव्ययः पृथक्।

**दीपिका सर्वस्वम्**—श्रीमदन्नम्भट्टविरचिततर्कसङ्ग्रहदीपिकाव्याख्यानरूपम्, एतदुपयोगिपारिभाषिकपदार्थसङ्ग्रहस्वकीयटिप्पणीमूलग्रन्थैरुपशोभितम्. पञ्चाशदुत्तरशतत्रयाधिकपृष्ठमुद्रितस्यास्यमूल्यम् (२–८–०) सार्धरूप्यकद्वयम्।

**मुक्तावली सर्वस्वम्**—श्रीमद्विश्वनाथपञ्चानन भट्टाचार्यविरचितमुक्तावलीव्याख्यानरूपम्।

**सामान्यनिरुक्तिसर्वस्वम्**— गदाधरीयहेत्वाभाससामान्यनिरुक्तिव्याख्यानरूपम्।

**धर्मनिर्णयसर्वस्वम्**—धर्मशास्त्रीयविषयप्रतिपादितम्।

**अलङ्कारनिर्णयसर्वस्वम्**—अलङ्कारशास्त्रीयविषयप्रतिपादकम्।

**मीमांसाविषयसर्वस्वम्**—पूर्वोत्तर मीमांसाविषयप्रतिपादकम्। एते पञ्चग्रन्थाः इतःपरं प्रकटीकरिष्यन्ते।

इते, कुरुगण्टि श्री रामशास्त्री तेनाली।

मुखविलासः—

कुरुगंटि श्रीराम शास्त्री,

तर्क पंडितः

तेनालि पोस्ट गुण्टूर डिस्ट्रिक्ट,

मद्रास प्रेसिडेन्सी.

संस्कृतान्ध्रांग्लभाषास्वन्यतमया भाषया त दन्यतमया लिप्या च विषयः स्वकीयग्रामनामादिकं (जिल्ला तालूका प्रभृति) विलेखनीयम् ॥

अड्रसु. आन्ध्रलिप्या आंग्ललिप्या वा लेखनीयम् ॥

*N. B. All Correspondence in English, Telugu or Sanskrit, the Superscription in English or Telugu only*

Foreign price for Copy 6 Shillings

*Addess*

Kuruganti Sreeramasastry,

*Tarka Pandit.*

Tenali (P O) Guntur District,

***Madras Presidency, South India.***

महाशयाः !

**तर्कसङ्ग्रह सर्वस्वम्**—श्रीमदन्नम्भट्टविरचिततर्कसङ्ग्रहव्याख्यान रूपं, दशोत्तरशताधिकपृष्ठमुद्रितपारिभाषिकपदार्थसङ्ग्रहयुतम्, निजटिप्पणीमूलग्रन्थाभ्यामुपशोभितम्, पञ्चचुत्तरशतद्वयाधिकपृष्ठमुद्रितस्यास्यमूल्यम्, रु. २—०—० रूप्यकद्वयम्

**पञ्चलक्षणी सर्वस्वम्**—मथुरानाथीयपञ्चलक्षणी व्याख्यानरूपम्, एतदुपयुक्तपारिभाषिकपदार्थसङ्ग्रहस्वीयटिप्पणीमूलग्रन्थैरुपशोभितम, पञ्चाशदुत्तरशताधिकपृष्ठमुद्रितस्यास्यमूल्यम् रु. १-४-० पादरूप्यकम्। सर्वेषां प्राणव्यय पृथक्।

**दीपिका सर्वस्वम्**—श्रीमदन्नम्भट्टविरचिततर्कसङ्ग्रहदीपिकाव्याख्यानरूपम्, एतदुपयोगिपारिभाषिकपदार्थसङ्ग्रहस्वकीयटिप्पणीमूलग्रन्थैरुपशोभितम्. पञ्चाशदुत्तरशतत्रयाधिकपृष्ठमुद्रितस्यामूल्यम् (२—८—०) सार्धरूप्यकद्वयम्।

**मुक्तावलीसर्वस्वम्**—श्रीमद्विश्वनाथपञ्चानन भट्टाचार्यविरचितमुक्तावलीव्याख्यानरूपम्।

**सामान्यनिरुक्तिसर्वस्वम्**— गदाधरीयहेत्वाभाससामान्यनिरुक्तिव्याख्यानरूपम्।

**धर्मनिर्णयसर्वस्वम्**—धर्मशास्त्रीयविषयप्रतिपादितम्।

**अलङ्कारनिर्णयसर्वस्वम्**—अलङ्कारशास्त्रीयविषयप्रतिपादकम्।

**मीमांसाविषयसर्वस्वम्**—पूर्वोत्तर मीमांसाविषयप्रतिपादकम्। एते पञ्चग्रन्थाः इतःपरं प्रकटीकरिष्यन्ते।

**इति, कुरुगण्टि श्री रामशास्त्री तेनाली।**

मुखविलासः—


कुरुगंटि श्रीराम शास्त्री,

तर्क पंडितः

तेनालि पोस्ट गुण्टूर डिस्ट्रिक्ट.

मद्रास प्रेसिडेन्सी.


संस्कृतान्ध्रांग्लभाषास्वन्यतमया भाषया त दन्यतमया लिप्या च विषयः स्वकीयग्रामनामादिकं (जिल्हा तालूका प्रभृति) विलेखनीयम ॥

अड्रसु. आन्ध्रलिप्या आंग्ललिप्या वा लेखनीयम् ॥

*N. B. All Correspondence in English, Telugu or Sanskrit, the Superscription in English or Telugu only*

**Foreign price for Copy 6 Shillings**

*Address*


Kuruganti Sreeramasastry,

*Tarka Pandit.*

Tenali (P O) Guntur District,

***Madras Presidency, South India.***

महाशयाः !

**तर्कसङ्ग्रह सर्वस्वम्**—श्रीमदन्नम्भट्टविरचिततर्कसङ्ग्रहव्याख्यान रूपं, दशोत्तरशताधिकपृष्ठमुद्रितपारिभाषिकपदार्थसङ्ग्रहसहयुतम्, निजटिप्पणीमूलग्रन्थाभ्यामुपशोभितम्, पञ्चोत्तरशतद्वयाधिकपृष्ठमुद्रितस्यास्यमूल्यम्, रु. २-०-० रूप्यकद्वयम्

**पञ्चलक्षणी सर्वस्वम्**—मथुरानाथीयपञ्चलक्षणी व्याख्यानरूपम्, एतदुपयुक्तपारिभाषिकपदार्थसङ्ग्रहस्वीयटिप्पणीमूलग्रन्थैरुपशोभितम्, पञ्चाशदुत्तरशताधिकपृष्ठमुद्रितस्यास्यमूल्यम् रु. १-४-० सपादरूप्यकम्। सर्वेषां प्रा.णव्यय पृथक्।

**दीपिका सर्वस्वम्**—श्रीमदन्नम्भट्टविरचिततर्कसङ्ग्रहदीपिका व्याख्यानरूपम्, एतदुपयोगिपारिभाषिकपदार्थसङ्ग्रहस्वकीयटिप्पणीमूलग्रन्थैरुपशोभितम्, पञ्चाशदुत्तरशतत्रयाधिकपृष्ठमुद्रितस्यास्यमूल्यम् (२-८-०) सार्धरूप्यकद्वयम्।

**मुक्तावलीसर्वस्वम्**—श्रीमद्विश्वनाथपञ्चानन भट्टाचार्यविरचितमुक्तावलीव्याख्यानरूपम्।

**सामान्यनिरुक्तिसर्वस्वम्**—गदाधरीयहेत्वाभाससामान्यनिरुक्तिव्याख्यानरूपम्।

**धर्मनिर्णयसर्वस्वम्**—धर्मशास्त्रीयविषयप्रतिपादितम्।

**अलङ्कारनिर्णयसर्वस्वम्**—अलङ्कारशास्त्रीयविषयप्रतिपादकम्।

**मीमांसाविषयसर्वस्वम्**—पूर्वोत्तर मीमांसाविषयप्रतिपादकम्। एते पञ्चग्रन्थाः इतःपरं प्रकटीकरिष्यन्ते।

**इति, कुरुगण्टि श्री रामशास्त्री तेनाली।**

मिजयोस्तु श्रीरस्तु शुभमस्तु

*आर्या :*

विदितमेव खलु श्रीमान् सज्जनवरेण्यः सन्ततहृदयधृतशंभु-मूर्तिः काशिनाथुन्युपाख्यः नागेश्वररायनामाऽग्रजन्मा मद्रपुरीमलंकरोतीति। प्रख्यातमेव खलु "मातृदेवोभव" त्युपनिषः प्रमाणयन् यथावद्भारतमातरं शुश्रूषत इति।

यदीयौदार्यश्रवणावलोकनाभ्यामितिहासप्रथिताश्चिरविश्रुताः कर्णादयोपि न स्मर्यन्ते। किम्बहुना, यस्मै गान्धिमहात्म प्रभृतिभिः श्लाघ्यचरितैः परोपकृतिनिरतैः परमया मुदा विश्व-दातेति बिरुदमन्वर्थमनितरसाधारणं प्रादायि। प्रथितमेव खलु यस्मै देशवासिभिः सर्वैः सर्वदा सर्वथापि तदीयमहोपकारफलमनु-भवद्भिः सानन्दैः "देशोद्धारक" इति बिरुदमपि प्रदत्तमिति।

किञ्च, अनुभूयतएव खलु यदीयान्ध्रपत्रिकया भारत्याच अत्यन्त सरससारस्वतसमुल्लसन्त्या बहुविषयिण्या योषितः पुरुषाश्च आबालवृद्धमैहिकामुष्मिकविषयकं विज्ञानं संपाद्यात्मनः कृतार्थतां मन्वानाः निरतिशयं हर्षं प्राप्नुवंतीति।

अपिच, यदीयामृताञ्जनेन अमृततुल्येनौषधराजेन प्राणिनो निजावेदनाः परिहायाऽमन्दमानन्दमनुभवन्ति। किञ्च, विजय-वाड (बेजवाड) पुरे यदीय कन्यापरिणयवेलायां सरसमंगीत-साहित्यसारस्यमनुभूय श्रोत्रं तत्रत्यमसाधारणं कल्याणमण्डप-प्रासादाधिवैभवमुद्वीक्ष्य चक्षुः सुगंधिवस्तुजातमाघ्राय घ्राणं सरस

सकल भोज्यपदार्थजातमुपभुज्य रसनं, कुसुमचन्दनादि संपर्केण त्वगिन्द्रियञ्च सर्वस्यापि जनस्य सार्थकं बभूव। तादृशस्य सहजकरुणाशालिनः निर्व्याजशोभस्य परोपकृतिविनियुक्तजीवितस्य सकलविद्याभिमानिनः सद्गुणनिकराकरस्य धीरोदात्तलक्षणलक्षितस्य समदृष्टिलक्षणलक्ष्यभूतस्य महीमण्डलमण्डनायमानस्य लोकाराध्यस्थाम्य नागेश्वरनायमहोदयस्य विजयवाडपुरे सुपरिपक्व भाग्यायत्तेन मन्दर्शनेन चिरदिदृक्षोर्मम चक्षुः सार्थकं बभूव। तदनु मदीयामेतद्ग्रन्थमुद्रणसाहाय्यप्रार्थनां मन्मुखादवगच्छन्नेव विद्यापक्षपाती विबुधजन कल्पतरु ममत्मनोरथपूरणप्रतिज्ञया याचनास्वभावसङ्कुचितं मदन्तरङ्ग मदः प्रस्फुटीचकार। एतादृशस्य महाशयस्य निजदर्शनमात्रपूर्यमाणजनाभिलषितस्य औदार्यादिसद्गुणगणं वर्णयितुं न मादृशस्य वाङ्मनसप्रभवेत्तमिति वस्तुवादएवायमुच्यते, नातिशयोक्तिः। अत एनं महोदयं सान्वय सर्वदा सर्वदः सर्वमङ्गलाजानिः पायादित्याशासे।

इति ग्रन्थकर्ता

कुरुगण्टि श्रीराम शास्त्री,

तेनालि.

कलियुग गताब्दाः ५०२९.

हूणशक गताब्दाः 1928.

विभवनाम संवत्सरः



# विषयानुक्रमणिका ।

## ※ प्रत्यक्ष परिच्छेदे ※

## * अनुमान परिच्छेदे *

विषय संख्या | पृष्ठ संख्या



## * शब्द परिच्छेदे *

1928. हूणशकगताब्दाः

श्रीशिवाय नमः ।

# दीपिकासर्वस्वे ।



## प्रत्यक्षपरिच्छेद प्रारम्भः ।

श्लो ।। वेमूर्युपाख्यरामब्रह्मसुधीन्द्रं गुरुं शिवं ध्यात्वा ।
श्रीरामशास्त्रिणाद्य, क्रियतेऽसौ दीपिकाव्याख्या ।।

* श्रीमदन्नम्भट्टविरचिततर्कसंग्रहदीपिकाख्यमूलग्रन्थप्रारम्भ *

मू * विश्वेश्वरं साम्बमूर्तिम्, प्रणिपत्य गिरां गुरुम् ।
टीकां शिशुहितां कुर्वे, तर्कसङ्ग्रहदीपिकाम् ।।

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकमिष्टदेवतानमस्कारात्मकं मङ्गळं शिष्यशिक्षायै ग्रन्थतोनिबध्नंश्चिकीर्षितं प्रतिजानीते * निधायेति *

व्या * प्रारिप्सितस्य ग्रन्थस्य निरन्तरायपरिसमाप्त्यर्थं समाचरित विश्वेश्वरप्रणामाद्यात्मक मङ्गळं शिष्यशिक्षायै ग्रन्थतो निबध्नंश्चिकीर्षित प्रतिजानीते * विश्वेश्वरमिति * विश्वनिरूपितनियामकतावदभिन्न (पार्वत्यालिङ्गितशरीरवदभिन्न) शिवकर्मक

(शिवविषयक) स्वोत्कृष्टत्वप्रकारकज्ञानानुकूलव्यापारोत्तरकालीना विद्यानिरूपितोपदेशकतावद्गुरु (बृहस्पति) कर्मकानिरुक्तप्रणिपातोत्तरकालीना बालसमवेतसुखपूर्वकबोधप्रयोजकाभिन्नतर्कसंग्रहदीपिकाख्याऽभिन्नव्याख्याविषयिणी वर्तमानकालिकी या कृतिः तादृशकृतिमानहमस्मीति अखण्डशाब्दबोध ॥ प्रत्येकपदार्थस्तु सुगम । गिरां गुरुमित्यस्य विद्योपदेशकार्थकत्वेन विश्वेश्वरेऽपि तत्पद विशेषणीकर्तुं शक्यते। गिरं गुरुमिति पाठे तु वाणीं विद्यागुरुञ्च प्रणिपत्येत्यर्थो ग्राह्य ॥

[अथ मत्कृतिविषयो भूयादितीच्छा चिकीर्षा । ग्रन्थघटकत्वस्य समाप्तिपदार्थैकदेशचरमवर्णे विघ्नध्वंसपूर्वकत्वस्य चरमवर्णध्वंसेचान्वय । मङ्गलस्य निर्विघ्नकत्वधात्वर्थैकदेशज्ञाने अनुमितिप्रयोजकत्वस्य तदेकदेशशिखोपविशेषणत्वेन ग्रन्थघटकत्वस्य तदेकदेशशब्दे च अन्वयो ज्ञेय ॥ शिक्षानामानुमिति, तत्प्रकारश्च, ग्रन्थाः मङ्गलोत्तरकालावच्छिन्नारम्भविषया कृतमङ्गलगुरुकर्तृकत्वात् तर्कसङ्ग्रहादिवदिति ॥ अथवा, ज्ञानाधीनेच्छा शिक्षापदार्थः, ज्ञान अस्मद्गुरुभिर्मङ्गलं कृतमिति ज्ञानम, तदधीनेच्छा अस्माभिरपि मङ्गलं कर्तव्यमितीच्छा ॥ यद्वा, इच्छाऽधीनेच्छा शिक्षापदार्थः। आद्या ग्रन्थादौ मङ्गलं कुर्यादिति गुरोरिच्छा, द्वितीया अस्माभिरपि मङ्गलं कर्तव्यमिति शिष्येच्छा भवति ॥ स्वोत्कृष्टत्वप्रकारकज्ञानानुकूलव्यापार प्रणिपात ॥ समाप्तिप्रतिबन्धकदुरितविशेषो विघ्नः । चरमवर्णध्वंसस्समाप्तिः, वर्णे चरमत्वञ्च स्वघटितग्रन्थघटकवर्णप्रागभावसमानकालिक यद्यत् स्वं तद्भिन्नत्वरूपं ज्ञेयम्। वेदोक्तत्वज्ञानेन वेदविहितकर्मकारी शिष्टः ॥]

मङ्गळाचरणतन्निबन्धनयोः फलं दर्शयति * चिकीर्षितस्येत्यादिना * कृतिविषयत्वप्रकारकेच्छानिरूपितविषयतावदभिन्नग्रन्थघटकीभूतविघ्नध्वंसपूर्वकपरिसमाप्तिप्रयोजकाभिन्नं शिष्टसमवेताचार (कृति) लिङ्गकानुमितिविषयीभूत (विधेयीभूत) वेदबोधितकर्तव्यतावदभिन्नेष्टदेवताकर्मकनमस्काराभिन्नमङ्गळविशेष्यकशिष्यसमवेतानुमितिप्रयोजकाभिन्न ग्रन्थघटकीभूतज्ञानजनकशब्दघटकवर्णाभिव्यञ्जकेरणोपविलेखनरूप यत् निबन्धनं तत्समानकालिकी या कृतिविषयत्वप्रकारकेच्छानिरूपितविषयताश्रयग्रन्थविषयिणी या प्रतिज्ञा (अव्यवहितोत्तरकालीनकृतिसाध्यत्वप्रकारकज्ञानानुकूलनिधायतान्यायाभिन्नव्यापारोऽत्र प्रतिज्ञा) तदनुकूलकृतिमानहमस्मीति वाक्यार्थबोध । प्रत्येकपदार्थस्तु सुगमइति न प्रदर्शित ॥

मू * ननु मङ्गळस्य समाप्तिसाधनत्वं नास्ति, मङ्गळे कृतेऽपि किरणावळ्यादौ समाप्त्यदर्शनात् मङ्गळाभावेपि कादम्बर्यादौ समाप्तिदर्शनाच्च अन्वयव्यतिरेकाभ्यां व्यभिचार इतिचेन्न । किरणावळ्यादौ विघ्नबाहुळ्यात्समाप्त्यभावः, कादम्बर्यादौ ग्रन्थाद्बहिरेव मङ्गळं कृतं अतो न व्यभिचारः ॥

व्या * ननु मङ्गळस्य समाप्तिसाधनत्वं सिद्धञ्चेत्समाप्तिकामस्य मङ्गळाचरणं युज्यते, तदेव न सम्भवतीत्याशङ्कते * नन्विति * व्यभिचारादिति * अत्र किरणावळ्याद्यन्तर्भावेण (कारणसत्त्वेपि कार्यानुत्पत्तिरूपान्वयव्यभिचार) अन्वयव्यभिचारः दृश्यते । कादम्बर्याद्यन्तर्भावेण (कारणाभावेपि कार्योत्पत्तिरूपव्यतिरेकव्यभिचारः) व्यतिरेकव्यभिचारः दृश्यते (एतद्व्यभिचार-

द्वयघटककार्यकारणपदे तत्त्वेनाभिमतपरे ग्राह्ये. नातः वस्तुतस्तयो कार्यत्वकारणत्वयोरभावेपि क्षतिः ।) तथाच एतदन्वयव्यतिरेक-व्यभिचारनिश्चयद्वयस्य समाप्तिं प्रति मङ्गलस्य कारणताग्राहकमन्वयव्यतिरेकसहचारनिश्चयद्वयं प्रति प्रतिबन्धकत्वेन मङ्गलविशेष्यकतत्कारणताप्रकारकग्रहासम्भवेन समाप्त्यर्थं मङ्गलाचरणं न कार्यमिति पूर्वपक्षवाक्याभिप्रायः * अतो न व्यभिचारइति * विघ्नान्यूनसंख्याकमङ्गलस्य बलवत्तरमङ्गलस्य वा विघ्नध्वंसद्वारा समाप्तिसाधनत्वाङ्गीकारेण तादृशस्य मङ्गलस्य किरणावल्यादावभावेन नान्वयव्यभिचारप्रसक्तिः. अस्मिन् जन्मनि ग्रन्थकर्तुर्नास्तिकत्वेपि जन्मान्तरीयस्याचरितमङ्गलमेव स्वजन्यविघ्नध्वंसवत्तासम्बन्धेन कादम्बर्यादिकर्तृषु विद्यमानं सत् तत्रैव स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्तासम्बन्धेन जायमानसमाप्तिं प्रति कारणं भवतीति न व्यतिरेकव्यभिचारप्रसक्तिरपीति सिद्धान्तग्रन्थाशयः ॥

ज्ञानशब्दक्रियात्मकमङ्गलत्रयस्य समाप्तिं प्रति कार्यकारणभावप्रकार इत्थम्. यथा, स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्तासम्बन्धेन जायमानसमाप्तित्वावच्छिन्नं प्रति समवायसम्बन्धेन ज्ञानात्मकमङ्गलस्य कारणत्वम्, द्वयोरात्मान्तर्भावेण सामानाधिकरण्यम् ॥ स्वरूपसम्बन्धेन जायमानसमाप्तित्वावच्छिन्नं प्रति समवायेन शब्दात्मकमङ्गलस्य कारणत्वं ग्राह्यम् । द्वयोराकाशान्तर्भावेण सामानाधिकरण्यं ग्राह्यम् । ध्वंसप्रागभावयोः स्वप्रतियोगिसमवायिदेशवृत्तित्वनियमानुसारेण चरमवर्णध्वंसरूपसमाप्तिः स्वरूपेणाकाशे वर्तते ॥ स्वप्रतियोगिचरमवर्णानुकूलकृत्य (मद) वच्छेदकतासम्बन्धेन जायमानसमाप्ति-

त्वावच्छिन्नं प्रति समवायेन क्रियात्मकमङ्गळस्य कारणत्वं ग्राह्यम्, द्वयोरशरीरान्तर्भावेण सामानाधिकरण्यं ग्राह्यम् ॥ स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्तासम्बन्धेन जायमानसमाप्तित्वावच्छिन्नं प्रति स्वजन्यविघ्नध्वंसवत्तासम्बन्धेन सर्वेषां मङ्गळानां कारणत्वं ग्राह्यम। (सर्वत्रापि स्वपदं समाप्तिपरं) अत्र कार्यकारणयोरात्मान्तर्भावेण सामानाधिकरण्यं ग्राह्यम् ॥

**मू ॥ * ननु मङ्गळस्य कर्तव्यत्वे किं प्रमाणमितिचेन्न, शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात्। तथाहि, मङ्गळं वेदबोधितकर्तव्यताकम् अलौकिकाविगीतशिष्टाचारविषयत्वात् दर्शादिवत्। भोजनादौ व्यभिचारवारणायालौकिकेति। रात्रिश्राद्धादौ व्यभिचारवारणायाविगीतेति। शिष्टपदं स्पष्टार्थम्, "नकुर्यान्निष्फलं कर्मेति, जलताडनादेरपि निषिद्धत्वात्" ॥**

व्या * मङ्गळस्य वेदबोधितकर्तव्यताकत्वं साधयितुमाशङ्कते * नन्विति * अनुमितश्रुतेरेवेति * नन्वत्रानुमानेन मङ्गळे वेदबोधितकर्तव्यताकत्वस्यैव साध्यत्वेन शिष्टाचारानुमितत्वस्य वेदबोधितकर्तव्यताकत्वे सम्भवेऽपि शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वादित्यादिना श्रुतौ शिष्टाचारानुमितत्वकथनमसङ्गतमितिचेन्न, अनुमितेः पूर्वमसिद्धस्य विधेयकोटिप्रविष्टस्यापि विधेयत्वमङ्गीकर्तव्यमित्याशयेन विधेयकोटिप्रविष्टाया श्रुतेरपि विधेयत्वाङ्गीकारेण तथाकथनस्य समुचितत्वात्। नच पर्वतोवह्निमानित्यनुमितौ वह्नित्वस्यापि विधेयकोटिप्रविष्टत्वेन वह्नित्वमनुमितमित्यादिव्यवहारः कुतो नस्यादिति वाच्यम्, वह्नित्वस्यानुमितेः पूर्वमेव प्रत्यक्षा-

दिना सिद्धत्वेन तादृशशङ्काया अनवकाशात् ॥ अन्येतु, स्वबोधित-कर्तव्यताकत्वसम्बन्धेन श्रुतेरेव वक्ष्यमाणानुमानेन साध्यत्वमङ्गी-क्रियते, अतश्शिष्टाचारानुमितश्रुतेरेवेति वाक्यं समञ्जसमेवेति वदन्ति ॥ अत्रैवकारोऽप्यर्थकः, नातो मंगळं कर्तव्य समाप्ति-फलकत्वादित्याद्यनुमानरूपप्रमाणान्तरसत्वेपि क्षतिः *

तथाहीति * अलौकिकाविर्गीतशिष्टाचारविषयत्वादित्यस्य अलौकिकत्वे सति अविर्गीतत्वे सति शिष्टाचारविषयत्वादित्यर्थ. । अलौकिकत्वञ्च विधिमन्तरा रागादिप्राप्तं यत् तद्भिन्नत्वं अवि-गीतत्वञ्च धर्मशास्त्रानिषिद्धत्वम् । शिष्टत्वञ्च वेदोक्तत्वज्ञानेन वेदविहितकर्मकारित्वम् । (अत्र तृतीयान्ताभावे वस्तुतो वेद-विहिताहिंसाकर्तरि बौद्धेऽतिव्याप्तिः) आचारो नाम कृतिः । तद्विषयत्वञ्च तद्विधेयतारूपं ग्राह्यम् । क्रमेण हेतु घटकदळ-प्रयोजनमाह * भोजनादाविति * (भोजनादिकन्तु वेदबोधित-कर्तव्यताकं धर्मशास्त्रनिषिद्धमपि न भवति), किन्तु रागादित. प्राप्तम्) वेदबोधित कर्तव्यताकत्वाभाववति भोजनादौ धर्मशास्त्रा-निषिद्धत्वशिष्टाचारविषयत्वयोस्सत्वात् व्यभिचारः अतः अलौ-किकत्वदळम्, तन्निवेशे भोजनादेः रागतःप्राप्तत्वेन रागतः प्राप्त-भिन्नत्वाभावात् न व्यभिचारः । "न नक्तम्श्राद्धं कुर्वीतेत्यनेन रात्रिश्राद्धस्य निषिद्धत्वेन वेदबोधितकर्तव्यताकत्वाभाववति (प्रामादिके रात्रिश्राद्धे) रात्रिश्राद्धेपि अलौकिकत्वशिष्टाचारवि-

**मङ्गल कर्तव्यं सफलत्वात्, मङ्गलं सफलं अविगीतशि-ष्टाचारविषयत्वात् दर्शादिवत्, मङ्गलं समाप्तिफलकं समाप्त्यन्याफल-कत्वे सति सफलत्वात् (समाप्तिरूपदृष्टफलकत्वे सम्भवे मङ्गलस्य अदृष्ट-स्वर्गादिफलकल्पनाया अन्याय्यत्वात् ।**

षयन्वयोस्सत्वाद्व्यभिचारः ; अतः अविगीततत्वदळम्, तन्निवेशेतु पूर्वोक्तरीत्या रात्रिश्राद्धस्य "रात्रिश्राद्धं न कुर्वीतेति धर्मशास्त्रेण निषिद्धत्वेन अविगीतत्वाभावान्नव्यभिचारः । वेदबोधितकर्तव्यताकत्वाभाववतः अशिष्टाचारविषयस्य जलताडनादेः "नकुर्यान्निष्फलंकर्मेति धर्मशास्त्रेण निषिद्धतयाऽविगीतत्वदळेनैव तत्र दोषवारणात् शिष्टपदस्य दोषवारकतया सार्थक्यं न सम्भवतीत्याशयेनाह ग्रन्थकारः * शिष्टपदं स्पष्टार्थमिति ॥

( स्वर्गादिफले कृतिनिरूपितोद्देश्यताख्या यागे विधेयताख्या यागोपकरणेषूपादानताख्या च विषयता वर्तते ) वेदबोधितकर्तव्यताकत्वाभाववति स्वर्गादिफलेपि अलौकिकत्वाविगीतत्वकृतिनिरूपितोद्देश्यताख्यविषयत्वानां सत्वाद्व्यभिचारवारणाय कृतिनिरूपितविधेयताख्याविषयत्वस्य हेतुत्वमङ्गीकार्यम् (सभामभिमुद्दिश्य मङ्गळस्य विधीयमानत्वेन मङ्गळे विधेयत्वाख्याविषयताऽक्षता) ननु शिष्टाचारस्य विषयतासम्बन्धेन हेतुत्वस्वीकारेणैव सामञ्जस्ये तद्विषयत्वस्य स्वरूपसम्बन्धेन हेतुत्वानुधावनमनर्थकं गौरवग्रस्तञ्चेति वाच्यम्, विषयतया आचारस्य हेतुतास्वीकारे तत्सम्बन्धस्य वृत्त्यनियामकत्वेन तादृशसम्बन्धघटितव्याप्यव्यापकभावस्याप्रसिद्धत्वेन तेन सम्बन्धेन हेतुत्वमप्रसिद्धमिति तद्विषयत्वस्य स्वरूपेण हेतुत्वानुसरणम्, तथात्वे स्वरूपसम्बन्धस्य वृत्तिनियामकतया तद्घटितव्याप्यव्यापकभावस्सुप्रसिद्धइति न कापि क्षतिः ॥

केचन, अलौकिकत्वं फलनिरूपितव्यापारसम्बन्धानवच्छिन्नकारणताश्रयीभूतं यद्यत् तत्तद्भिन्नत्वम्, भोजनादेः मध्ये व्यापारसम्बन्धं विनैव तृप्तिरूपफलजनकत्वेन तद्भिन्नत्वाभावान्नतत्रा-

तिप्रसङ्ग । अविगीतत्वञ्च बलवदनिष्टाननुबन्धित्वमिति च वदन्ति ॥

इति मङ्गळवादः



**मू * तर्क्यन्ते प्रतिपाद्यन्त इति तर्काः द्रव्यादिपदार्थाः, तेषां सङ्ग्रहः संक्षेपेण स्वरूपकथनं क्रियत इत्यर्थः । कस्मै प्रयोजनायेत्यत आह * सुखबोधायेति * सुखेनानायासेन बोधः पदार्थतत्त्वज्ञानं तस्मा इत्यर्थः । ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वोऽयं ग्रन्थः क्रियतइत्यत आह * बालाना-मिति * तेषामतिविस्तृतत्वात्तत्र बालानां बोधो न जायत-इत्यर्थः । ग्रहणधारणपटुर्बालः नतु स्तनन्धयः । किंकृत्य क्रियत इत्यत आह * निधायेति, विश्वेशं जगन्नियन्तारं, हृदि निधाय नितरां स्थापयित्वा, सदा तद्ध्यानपरो भूत्वेत्यर्थः । गुरूणां विद्यागुरूणां, वन्दनं नमस्कारम्, विदाय कृत्वेत्यर्थः ।**

व्या * तर्कपदस्यायथार्थानुभवान्तर्गततर्कार्थकत्वभ्रम वार-यति * तर्क्यन्तइति - सङ्ग्रहपदस्योपादानरूपसङ्ग्रहार्थकत्वभ्रमं वारयति * संक्षेपेणेत्यादिना (बहुतरार्थबोधकत्यूनसंख्याकशब्द-सन्दर्भ सङ्ग्रह ) एतत्पद्यसूचितमनुबन्धिचतुष्टयं मदीयतर्क-सङ्ग्रहसर्वस्वे एतद्व्याख्यानावसरे निरूपितम् * ग्रहणधारणेति * उक्तस्यार्थस्य ग्रहणे गृहीतस्यार्थस्य धारणे च ये पटवस्ते बाला इत्यर्थः (अधीतकाव्यकोशादिमत्त्वेसत्यनधीतन्यायशास्त्रवत्त्वे सति न्यायव्युत्पित्सुत्वमत्र बालत्व ज्ञेयम् )

मू * पदार्थान्विभजते * द्रव्येति * पदस्यार्थः पदार्थ-इति व्युत्पत्त्याऽभिधेयत्वं पदार्थसामान्यलक्षणं लभ्यते ॥ ननु विभागादेव सप्तत्वे सिद्धे पुनस्सप्तपदग्रहणं व्यर्थमिति-चेन्न, अधिकसंख्याव्यवच्छेदार्थकत्वात्। नन्वतिरिक्तः पदार्थः प्रमितोवा नवा, नाद्यः, प्रमितस्य निषेधायोगात् । न द्वितीयः, प्रतियोगिप्रमितिं विना निषेधानुपपत्तेः इतिचेन्न । पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्यवच्छेदार्थकत्वात् । ननु सप्तान्यतमत्वं सप्तभिन्नभिन्नत्वमिति वक्तव्यम्, सप्तभिन्न-स्यैवाप्रसिद्धत्वात्कथं सप्तान्यतमत्वव्याप्तिनिश्चय इतिचेन्न, द्रव्यादिसप्तान्यतमत्वं नाम द्रव्यादिभेदसप्तकाभाववत्त्वम्, अतो दोषविरहात् । एवमग्रेपि द्रष्टव्यम् ॥

व्या * पदार्थान्विभजतइति (पदार्थविशेष्यकपरस्परविरुद्ध-सामान्यधर्मव्याप्यविशेषधर्मप्रकारकज्ञानानुकूलद्रव्येत्याद्यभिन्नव्या-पारानुकूलकृतिमानन्नम्भट्ट इति वाक्यार्थबोधः) पदस्यार्थः पदार्थ इति व्युत्पत्त्या पदसम्बन्ध्यभिधाविषयत्वलाभेपि अत्र पदसम्बन्धित्वांशस्य व्यावर्तकत्वाभावेन अभिधाविषयत्वमात्रस्यैव सामान्यलक्षणत्वमभिधत्ते ग्रन्थकारः * अभिधेयत्वमित्यादिना * विभागादेवेति * पदार्थत्वव्याप्यधर्मपुरस्कारेण द्रव्यादिधर्मिप्रति-पादनादेव (विभागवाक्यघटकपदार्थपरिगणनात्) इत्यर्थः * अधिकसंख्याव्यवच्छेदार्थकत्वादिति * सप्तपदार्थातिरिक्तपदार्थ-निषेधार्थकत्वादित्यर्थः । मिद्रयांमोद्भ्याम् व्याघातम् दर्शयाते * नाद्यइति * वस्तुतोऽतिरिक्तपदार्थो यदि प्रमितः तदा तस्य निषेधो न सम्भवति, यदि स न प्रमितः तदा अभावबुद्धि प्रति

प्रतियोगिज्ञानस्य कारणत्वमिति न्यायेन प्रतियोगिज्ञानाभावेऽभाव-बुद्धिर्नजायत इति समुदायार्थः * पदार्थत्वमिति * असति बाधके उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदके विधेयव्याप्यत्व-भानमावश्यकमिति नियमानुसारेण पदार्थत्वरूपोद्देश्यतावच्छेदके द्रव्यादिसप्तान्यतमत्वरूपविधेयव्याप्यत्वमभिधत्ते * सप्तान्यतमत्व-व्याप्यमित्यादिना *

ननु सर्वस्मिन्नपि जगति द्रव्यादिसप्तान्यतमत्वस्यैव विद्यमा-नत्वेन तादृशान्यतमत्वाभाववतः पदार्थस्याप्रसिद्ध्या तदभाववद्-वृत्तित्वरूपतदन्यतमत्वव्याप्यत्व पदार्थत्वे कथ सङ्गच्छत इति-चेन्न। तादृशव्याप्यत्वस्यात्रासम्भवेपि स्वव्यापकतत्कत्वरूपव्याप्यत्व-स्यात्र सम्भवेनाप्रसिद्ध्यभावात् (स्वपदमुद्देश्यतावच्छेदकपरं, तत्पद विधेयपरम्) तथाच पदार्थत्वव्यापकद्रव्यादिसप्तान्यतमत्व-कत्वरूपव्याप्यत्वस्य समन्वयप्रकार इत्थम्, तथाहि, पदार्थत्वाधिक-रण घटादिक तद्वृत्तिः योत्यन्ताभाव. नहि द्रव्यादिसप्तान्य-तमत्वाभाव, तस्य तत्त्र सत्त्वात्, किन्तु पटत्वाद्यभावः, तत्प्र-तियोगि पटत्वादिकं, तदप्रतियोगि द्रव्यादिसप्तान्यतमत्व, तत्कत्व (तत्कालीनत्वम्) पदार्थत्वे वर्तते इति * सप्तभिन्न-भिन्नत्वमिति * द्रव्यादयो ये सप्त पदार्थाः प्रत्येक तत्तद्भेद-कूटविशिष्टभिन्नत्वमित्यर्थो वक्तव्यः, यथाश्रुत एको न द्वाविति प्रतीत्या समुदायरूपसप्तभिन्नत्वस्य प्रत्येक घटादिपदार्थे प्रसिद्धत्वेन सप्तभिन्नस्याप्रसिद्ध्येति मूलग्रन्थस्यासङ्गत्यापत्तेः * द्रव्यादिभेदसप्तकाभाववत्त्वमिति * सर्वस्यापि पदार्थस्य द्रव्यादि-सप्तकान्तर्गतत्वेन कुत्रापि पदार्थे द्रव्यभेदगुणभेदकर्मभेदादिरूपा-णां सप्तानां भेदानामविद्यमानतया तादृशभेदसप्तकाभाववत्त्वं

"एकसत्त्वे द्वयं नास्तीति, प्रतीत्या सर्वत्रापिप्रत्येकपदार्थे सम्भव-तीति नान्यतमत्वाप्रसिद्धिशङ्केति ग्रन्थकर्तुराशयः *

एवमग्रेपि द्रष्टव्यमिति * उत्तरत्र नवादिपदानामपि अतिरिक्त-द्रव्यादिव्यवच्छेदार्थकत्वं द्रव्यत्वादीनां पृथिवीत्वादिनवाद्यन्यत-मव्याप्यत्वञ्च पूर्ववद्बोध्यमित्याशयेनैव एवमग्रेपीति ग्रन्थावतारः, नतु तदन्यतमत्वाप्रसिद्धिशङ्कातत्समाधानादिकमपि पूर्वोक्तरीत्या ग्राह्यमित्याशयेन, तथात्वे, नवद्रव्याणि चतुर्विंशतिर्गुणाः पञ्च-कर्माणीत्यादौ तत्तत्समुदायभिन्नानां द्रव्यगुणकर्मादीनां प्रसि-द्धत्वेन तत्तदन्यतमत्वाप्रसिद्ध्याद्यसम्भवेन तादृशार्थपरस्य मूलग्रन्थ-स्यासगत्यापत्तेरिति ध्येयम् ॥

ननु शक्तिपदार्थस्याष्टमस्य सत्त्वात्सप्तैव पदार्था इति कथन-मसङ्गतम्, तथाहि, स्वरूपसम्बन्धेन जायमानदाहत्वावच्छिन्नं प्रति संयोगसम्बन्धेन वह्नेः कारणत्वमङ्गीकृतम् (पूर्वरूपनाशो रूपान्तरोत्पत्तिर्वा दाहः) तथाच चन्द्रकान्तमणिसमवधाने संयो-गेन वह्निसत्त्वेपि दाहानुदयेन मण्यभावे दाहोदयेन च यत्सत्त्वे यद-नुत्पत्तिः यदभावे यदुत्पत्तिरिति कार्यकारणभावविघटकान्वयव्य-तिरेकव्यभिचारप्रसङ्गेन तद्वारणाय दाहं प्रति शक्तिमत्त्वेन (दा-हानुकूलशक्तिमत्त्वेन) वह्नेः कारणत्वस्याङ्गीकर्तव्यतया शक्त्यङ्गी-करणमन्तरा तादृशकार्यकारणभावस्यानुपपन्नत्वेन शक्तिरूपोऽति-रिक्तः पदार्थो नियतमभ्युपेयः (मीमांसकमतानुसारेणायं पूर्वपक्षः) (एतन्मते मणिनिष्ठं दाहप्रतिबन्धकत्वञ्च कारणतावच्छेदकधर्म-विघटकत्वरूपम्) (शक्तेरतिरिक्तत्वसाधकोऽनुमानप्रयोग इत्थम्, शक्तिः न द्रव्यात्मिका गुणात्मिका कर्मात्मिका वा गुणादिवृत्ति-त्वात्, शक्तिः न सामान्याद्यन्यतमरूपा उत्पत्तिमत्त्वे सति विना-

शित्वात् इति) इतिचेन्न । दाहत्वावच्छिन्नं प्रति मणेः प्रतिबन्धकत्वस्य तदभावस्य तत्कारणत्वस्य च स्वीकारेणैव सामञ्जस्ये चन्द्रकान्तमणिसमवधानदशासु अनन्तपूर्वकालिकशक्तिनाश जनिष्यमाणानन्तशक्तिप्रागभावानाञ्च कल्पने मण्यसमवधानदशासु अनन्तशक्तिकल्पनस्यचावश्यकतया तन्मते महागौरवप्रसङ्गः (एतन्मते मणिनिष्ठं प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वरूपमेव) नच सूर्यकान्तमणिसहितचन्द्रकान्तसमवधाने वह्निना दाहोदयेन चन्द्रकान्तस्य तत्प्रतिबन्धकत्वं न सम्भवतीति वाच्यम् । सूर्यकान्तमणिरूपोत्तेजकाभावविशिष्टचन्द्रकान्तमणेरेव दाहप्रतिबन्धकत्वाङ्गीकारान्नानुपपत्तिः (अत्र सूर्यकान्तमणिनिष्ठोत्तेजकत्वञ्च प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वरूपं ग्राह्यम् )

ननु सादृश्यस्यातिरिक्तस्य सद्भावात्कथं सप्तैवेति (सादृश्यस्यातिरिक्तत्वसाधकोऽनुमानप्रकार इत्थम्. सादृश्यं षड्भावानन्तर्भूत सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वात्. यथा गोत्वं नित्यं तथाऽश्वत्वमपीति प्रतीत्या सामान्येपि सादृश्यस्याबाधितत्वात् । सादृश्यं नाभावरूपं सत्त्वेन प्रतीयमानत्वात्इति) इतिचेन्न, सादृश्यस्य तद्भिन्नत्वविशिष्टतद्गतभूयोधर्मवत्त्वरूपत्वेनैवाङ्गीकृतत्वेन नातिरिक्तपदार्थाङ्गीकारप्रसक्तिः । एवमतिरिक्तत्वेन प्रतीयमानानां पदार्थाना अन्येषां कारणत्वप्रभृतीनां सप्तपदार्थेष्वेवान्तर्भावप्रकारः सर्वायतर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे निरूपित.

**मू * द्रव्यं विभजते * तत्रेति * तत्र द्रव्यादिमध्ये । द्रव्याणि नवैवेत्यन्वयः । कानि तानीत्यत आह ***

पृथिवीति * ननु तमसो दशमद्रव्यस्य विद्यमानत्वात्कथं नव द्रव्याणीति, तथाहि, नीलं तमश्चलतीति प्रतीतिबलान्नीलरूपाधारतयाक्रियाऽऽधारतया च तमसो द्रव्यत्वं तावत्सिद्धम्। तत्र तमसो नाकाशादिपञ्चकेन्तर्भावः रूपवत्त्वात्। अतएव न वायौ स्पर्शाभावात्सदागतिमत्त्वाभावाच्च । नापि तेजसि भास्वररूपाभावादुष्णस्पर्शाभावाच्च । नापि जले शीतस्पर्शाभावान्नीलरूपवत्वाच्च । नापि पृथिव्यां गन्धाभावात् स्पर्शरहितत्वाच्च । तस्मात्तमो दशमद्रव्यमितिचेन्न । तमसस्तेजोऽभावरूपत्वात्, तथाहि, तमो न रूपिद्रव्यं आलोकासहकृतचक्षुर्ग्राह्यत्वात् आलोकाभाववत्, रूपिचाक्षुषप्रमायामालोकस्य कारणत्वात् । तस्मात्प्रौढप्रकाशकतेजस्सामान्याभावस्तमः । तत्र नीलं तमश्चलतीति प्रत्ययो भ्रमः । अतो नव द्रव्याणीति सिद्धम् ॥

व्या * द्रव्यं विभजतइत्यत्र वाक्यार्थबोधप्रकारः पूर्ववत् । मीमांसकमतं दूषयति * नन्विति * तमसो दशमद्रव्यस्येत्यनेन वाक्येन तमः दशमद्रव्यं नवद्रव्यानन्तर्भूतत्वे सति द्रव्यत्वात्, यन्नैव तन्नैवं यथा पृथिवीत्यनुमानं सूचितम् । पूर्वानुमानघटकद्रव्यत्वरूपविशेष्यासिद्धिं वारयति * नीलं तमश्चलतीत्यादिना * अनुमानप्रयोगस्तु. तमो द्रव्य समवायेन नीलरूपाश्रयत्वात् क्रियाश्रयत्वाद्वेति । नवद्रव्यानन्तर्भूतत्वरूपविशेषणासिद्धिं वारयति * तत्रतमस इत्यादिना * अनेन वाक्येन तमः आकाशादिपञ्चकानन्तर्भूतम् समवायेन रूपवत्त्वादित्यनुमानं

प्रदर्शितम् । अतएव न वायावित्यादिना तमः वायुभिन्नं रूप-वत्त्वादित्यनुमानं प्रदर्शितम् । समवायेन वायुभेदसाधकं रूप-स्वरूप हेतुमुक्त्वा स्वरूपेण तत्साधकं हेतुमाह * स्पर्शाभावा-दिति * तमो वायुभिन्नं स्पर्शाभावादित्यनुमानप्रकारः । स्पर्शा-भावरूपविषमव्याप्तहेतुमुक्त्वा समव्याप्तहेतुमाह * सदागति-मत्त्वाभावादिति (हेतुव्यापकसाध्याव्यापकहेतुत्व विषमव्याप्त-हेतुत्वम्, हेतुव्यापकसाध्यव्यापकहेतुत्व समव्याप्तहेतुत्व ग्राह्यम्) अनुमानप्रकार.. तमो वायुभिन्नं सदागतिमत्त्वा-भावादिति (सदागतिर्नाम विजातीया क्रिया) अत्र स्पर्शाभावसदा-गतिमत्त्वाभावयोः निरवच्छिन्नस्वरूपसम्बन्धेन हेतुत्वं वाच्यम्. अन्यथा वायुभेदाभाववति वायौ उत्पत्तिकालावच्छेदेन तयो-स्सत्त्वाद्व्यभिचारापत्तेः । तमस्तेजोभिन्न भास्वररूपाभावादुष्ण-स्पर्शाभावाद्वेत्यनुमानं दर्शयति * नापि तेजसीति (अत्र हेतु-द्वयस्यापि समव्याप्ततया न निरुक्तरीत्या हेतुद्वयोपादानस्य साफल्य, किन्तु हेतुद्वयेनापि तेजोभेदसाधन सम्भवतीति सूचनायैव) तमो जलभिन्न शीतस्पर्शाभावान्नीलरूपवत्त्वाद्वेत्यनु-मानं दर्शयति * नापिजलेइति (अत्राद्यो हेतुस्समव्याप्तः द्वितीयो विषमव्याप्त इत्यवधेयम) तमः पृथिवीभिन्न गन्धाभावात् स्पर्शरहितत्वाद्वेत्यनुमानं दर्शयति * नापि पृथिव्यामिति (अत्राद्य-स्समव्याप्तः, द्वितीयो विषमव्याप्त) सर्वत्रापि गुणाभावानां निर-वच्छिन्नस्वरूपसम्बन्धेनैव हेतुत्वं ज्ञेयम्, अन्यथा निरुक्तविधया व्यभिचारसम्भवः * उपसहरति * तस्मादिति * नवद्रव्येष्व-नन्तर्भावात् दशमद्रव्यत्वं तमसस्सिद्धमेति पूर्वपक्षाशयः *

तेजोऽभावरूपत्वादिति * प्रौढप्रकाशकतेजस्सामान्याभाव -

रूपत्वादित्यर्थः । तमसो गुणाश्रयत्वद्रव्यत्वे खण्डयति * तमो न रूपिद्रव्यमिति * अत्र रूपिद्रव्यभेदरूपसाध्याभाववति घटादावपि चक्षुर्ग्राह्यत्वसत्त्वाद्व्यभिचारवारणाय आलोकासहकृतत्वदळं चक्षुषि निवेश्यते । तन्निवेशे रूपिद्रव्यचाक्षुषे आलोकसहकृतस्यैव चक्षुषः कारणत्वेन हेतोस्तत्राभावान्नव्यभिचारः । अत्र चक्षुर्ग्राह्यत्वञ्च चक्षुर्जन्यलौकिकप्रत्यक्षविषयत्वं ग्राह्यम्, अन्यथा रूपिद्रव्यभेदाभाववति घटादौ तमोवान्घट इति ज्ञानलक्षणप्रत्यासत्तिजन्ये चक्षुरिन्द्रियजन्ये च (अलौकिके) प्रत्यक्षे विषयत्वस्य सत्त्वाद्व्यभिचारापत्तेः । तेजोविशेषस्यालोकस्याभाव दृष्टान्तयति * आलोकाभाववदिति * अत्र पक्षे हेतुरस्तु साध्यं मास्त्वत्यप्रयोजकशङ्कानिवृत्त्यर्थमवतारयति * रूपिचाक्षुषप्रमायामिति * रूपवत्त्वेन द्रव्यविषयकचाक्षुषप्रमायामित्यर्थः । यदि रूपिद्रव्यभेदो नस्यात् तदा आलोकासहकृतचक्षुर्ग्राह्यत्व न स्यात्, रूपिचाक्षुषप्रमात्वावच्छिन्नप्रत्यालोकस्य कारणत्वात् इति कार्यकारणभावभङ्गापादकतर्कं सूचयत्यनेन वाक्येन ग्रन्थकारः । आलोकस्यासत्त्वेपि रूपवत्त्वेनान्धकारविषयकचाक्षुषभ्रमोत्पत्त्या व्यतिरेकव्यभिचारवारणाय प्रमापदोपादानम् । रूपिद्रव्यचाक्षुषे आलोकचक्षुस्संयोगमहत्वानां कारणत्वानङ्गीकारेऽनुपपत्तयः मदीयतर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे निरूपिताः ॥

तमसोऽतिरिक्तत्वेऽनन्ततदवयवतत्प्रागभावतद्ध्वंसादिकल्पने गौरवं स्यादिति तस्य तेजोऽभावरूपतां स्थिरीकरोति * प्रौढप्रकाशकेति * प्रौढप्रकाशकत्वञ्च त्र्यणुकादिभिन्नत्वे सति उद्भूतरूपवत्त्वे सति अनभिभूतरूपवत्त्वम्, एतच्च तेजसो विशेषणम्, तथाच

त्र्यणुकभिन्नं उद्भूतानभिभूतरूपवत् महत्यत्तेजः तादृशतेजस्सामान्याभावस्तमइति फलितम्। तेजस्सामान्याभावस्यैव तमस्त्वाङ्गीकारे सुवर्णादिमति तमोविशिष्टदेशे सुवर्णात्मकतेजसो विद्यमानत्वेन तेजस्सामान्याभावस्याविद्यमानत्वेन तत्रापि तमोऽभावप्रसङ्गः, अतोऽनभिभूतरूपवत्त्वदळनिवेशः, तन्निवेशेतु सुवर्णस्यपार्थिवरूपाभिभूतरूपवत्त्वेन तादृशसामान्याभावस्य तत्राक्षतत्वेन न निरुक्तानुपपत्तिः। उद्भूतरूपवत्त्वानिवेशे चक्षुस्संयुक्त तमोवति देशे अनभिभूतरूपवतश्चक्षुस्स्वरूपस्य तेजसः तत्र सत्त्वेन तादृशाभावस्य तत्रासत्त्वेन तत्र तमोव्यवहारानुपपत्तिः। तन्निवेशे तु चक्षुषः उद्भूतरूपवत्त्वाभावेन तादृशाभावस्य तत्राक्षततया नानुपपत्ति। त्र्यणुकादिभिन्नत्वमहत्त्वयोरनिवेशे तेजस्त्र्यणुकतत्परमाण्वादिमत्यन्धकारविशिष्टदेशेऽपि उद्भूतानभिभूतरूपवतस्त्र्यणुकपरमाण्वादितेजसो विद्यमानतया तादृशाभावस्यासत्त्वेन तत्र तमोव्यवहारानुपपत्तिः। तन्निवेशे तत्त्र्यणुकादिमति तमोवद्देशे त्र्यणुकादिभिन्नमहत्त्वविशिष्टतेजस्सामान्याभावस्याक्षततया नानुपपत्तिः। (वस्तुविशिष्टवस्तुत्वमभिभूतत्वम् इत्यनुगमः। वैशिष्ट्यञ्च स्वतादात्म्य स्वविशिष्टपदार्थग्रहप्रयुक्तग्रहीयविषयत्वाभाववत्त्वोभयसम्बन्धेन। स्ववैशिष्ट्यञ्च पदार्थे स्वसजातीयत्वस्वभिन्नत्वोभयसम्बन्धेन ग्राह्यम) प्रौढप्रकाशकत्वञ्च स्वसंयुक्तयावत्पदार्थावभासकत्वम्, अतो नानुपपत्तिरिति केचन वदन्ति॥ ननु तमसोऽभावरूपत्वेऽभावे रूपकर्मणोरभावेन तत्र रूपकर्मत्ता प्रतीत्योः कथमुपपत्तिरित्याशङ्कायामाह * तत्र नीलमिति * ननु विनिगमनाविरहात्तेजस एव तमोऽभावरूपत्वमस्त्वितिचेन्न, सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरस्य कस्यचित् कल्पनीयतया गौरवेण

तेजसोऽभावरूपत्वासम्भवात् ॥

**मू * द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा द्रव्यसामान्यलक्षणम् *.**

व्या * लक्षणमन्तरा मोक्षसाधनीभूतपदार्थतत्त्वज्ञानं नोत्पद्यतइत्याशङ्कायामाह * द्रव्यत्वेति * कार्यस्य संयोगस्य विभागस्य वा समवायिकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटनिरूपितदण्डनिष्ठकारणतावत् इत्यनुमानेन द्रव्यत्वस्य जातित्वे लाघवमिति लाघवज्ञानसहकृतेन तत्कारणताया अन्यूनानातप्रसक्ता द्रव्यत्वरूपा जातिस्सिद्ध्यतीति बोध्यम् । एवञ्च सामान्यलक्षणकथनेन न्यूनता परिहृतेति बोध्यम् । अन्यासां गुणत्वादिजातीनां बहूनां सिद्धिप्रकारः मदीयतर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे जातिसिद्धिविचारे द्रष्टव्यः ।

द्रव्यस्य द्रव्यत्वलक्षणस्य व्यावहारिकत्वेनतस्य स्वेतरभेदानुमापकत्वरूपं व्यावर्तकत्वं न सम्भवतीति व्यावर्तकं लक्षणमाह * गुणवत्त्वं वेति * द्रव्यत्वस्य द्रव्यलक्षणत्वे लक्षणलक्ष्यतावच्छेदकयोरैक्येन व्यावर्तकत्व न सम्भवति, तथाहि, लक्षणेन लक्ष्ये स्वेतरभेदानुमापकेन भवितव्यम्, तथाच द्रव्यं इतरभिन्नं द्रव्यत्वादितीतरभेदसाधने इतरभेदव्याप्यद्रव्यत्ववद्द्रव्यमिति परामर्शे इतरभेदव्याप्यत्वस्य द्रव्यत्वे भाने तुल्यवित्तिवेद्यतया (समानज्ञानविषयत्वेन) द्रव्यत्वव्यापकत्वस्यापीतरभेदे भासमानतया साध्ये पक्षतावच्छेदकव्यापकत्वनिश्चयस्य पक्षस्साध्यवानित्यनुमिति प्रति सिद्धिविधया प्रतिबन्धकत्वेन परामर्शकालएव सिद्धेस्सत्त्वेन अनुमितिप्रतिबन्धाद्व्यावर्तकत्वस्य द्रव्यत्वेऽभावेन व्यावहारिकत्व-

मेवास्य सम्भवतीति बोध्यम्। गुणस्य द्रव्यलक्षणत्वे द्रव्यं इतरभिन्नं गुणादितिरीत्या व्यावर्तकत्वं सम्भवति, तथाहि, अत्र लक्षण-लक्ष्यतावच्छेदकयोः गुणद्रव्यत्वयोः परस्परविभिन्नतया इतरभेदव्याप्यगुणवद्द्रव्यमिति परामर्शकाले तुल्यवित्तिवेद्यतया भानाङ्गीकारेपि गुणव्यापकत्वस्यैवेतरभेदे लभ्यत्वेन उद्देश्यतावच्छेदकव्यापकत्वप्रकारकसाध्यविशेष्यकनिश्चयस्य प्रतिबन्धकस्य तदाऽभावेन द्रव्यमितरभिन्नमित्यनुमितेरव्याहततया गुणवत्त्वलक्षणस्य व्यावर्तकत्वमुपपद्यतएव ॥

**मू * लक्ष्यैकदेशावृत्तित्वमव्याप्तिः, यथा गोः कपिलत्वम् ॥**

व्या * उत्तरत्र दूषणत्रयरहितधर्मस्य लक्षणत्वस्य वक्ष्यमाणतया अभावबुद्धिं प्रति प्रतियोगिज्ञानस्य कारणत्वेन दूषणत्रयज्ञानमन्तरा तद्रहितत्वज्ञानासम्भवेन प्रथमं दूषणत्रयं निरूपयति * लक्ष्यैकदेशावृत्तित्वमिति * तच्च लक्ष्यतावच्छेदकाश्रये क्वचिल्लक्ष्ये लक्षणासत्त्वम्, तच्च लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्, (इदं अव्याप्तिस्वरूपं अव्याप्तलक्षणञ्च भवति) गोः कपिलरूपं लक्षणमुक्तञ्चेत्तत्र कपिलरूपे लक्षणसमन्वयः। तथाहि, लक्ष्या गौः, लक्ष्यतावच्छेदकं गोत्वम्, तदधिकरणं कपिलगौः, तद्वृत्तित्वं कपिलरूपे वर्तते। एवं लक्ष्यतावच्छेदकाधिकरणं श्वेतगौः, तद्वृत्तिर्योत्यन्ताभावः कपिलरूपाभावः, तत्प्रतियोगित्वञ्च कपिलरूपे वर्तते इति ॥ लक्ष्यतावच्छेदकसमानाधिकरणत्वमात्रोक्तौ अतिव्याप्तेऽतिव्याप्तिः, तथाहि, गोः शृङ्गित्वं लक्षणमुक्तञ्चेत्तत्र शृङ्गित्वे

लक्ष्यतावच्छेदकाधिकरणगोवृत्तित्वस्य सत्त्वादिति । विशेष्यदळनिवेशे तु लक्ष्यतावच्छेदकाधिकरणं गौः, तद्वृत्तिः योऽत्यन्ताभाव इत्युक्तौ नहि शृङ्गित्वाभावः, किन्तु पटत्वाद्यभावः, तत्प्रतियोगित्वस्य शृङ्गित्वेऽभावान्नातिव्याप्तिः ॥

लक्ष्यतावच्छेदकसामानाधिकरण्यदळानिवेशेऽसम्भविन्यतिव्याप्तिः, तथाहि, गोरेकशफवत्त्वं लक्षणमुक्तञ्चेत्तत्र एकशफवत्त्वे लक्ष्यतावच्छेदकाधिकरणगोवृत्त्यैकशफवत्त्वात्यन्ताभावप्रतियोगित्वस्य तत्र सत्त्वादिति । लक्ष्यतावच्छेदकसामानाधिकरण्यनिवेशे तु एकशफवत्त्वे लक्ष्यतावच्छेदकाधिकरणगोवृत्तित्वस्यासत्त्वान्नातिव्याप्तिः ॥ लक्ष्यतावच्छेदकसामानाधिकरण्यघटकलक्ष्यतावच्छेदकनिष्ठाधेयतायां लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वं विशेषणं देयम्, अन्यथा कालिकसम्बन्धेन लक्ष्यतावच्छेदकाधिकरणाश्ववृत्तित्वस्य विशेष्यदळस्यचैकशफवत्त्वे सत्त्वादतिव्याप्तेः । तन्निवेशे तु येन सम्बन्धेन लक्ष्ये लक्ष्यतावच्छेदकं वर्तते तस्य सम्बन्धस्य लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धतया प्रकृते लक्ष्यतावच्छेदकतावच्छेदकसमवायेन लक्ष्यतावच्छेदकाधिकरणत्वस्याश्वेऽभावान्नातिव्याप्तिः ॥ विशेषणदळघटकलक्ष्यतावच्छेदकाधिकरणनिरूपितवृत्तितायां लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम्, अन्यथा लक्ष्यतावच्छेदकाधिकरणनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितामादायासम्भविन्येकशफवत्त्वेऽतिव्याप्तेः । तन्निवेशेतु गोनिरूपितलक्षणतावच्छेदकसमवेतत्वसम्बन्धावच्छिन्नवृत्तितायास्तत्राभावान्नातिव्याप्तिः॥

विशेष्यदळघटकलक्ष्यतावच्छेदकनिष्ठाधेयतायामपि लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम्, अन्यथा

कालिकसम्बन्धेन लक्ष्यतावच्छेदकाधिकरणघटादिनिष्ठात्यन्ताभावप्रतियोगित्वस्य विशेषणदळस्य च सत्त्वादतिव्याप्ते शृङ्गित्वेऽतिव्याप्तेः। तन्निवेशे तु तेन सम्बन्धेन लक्ष्यतावच्छेदकाधिकरणत्वस्य घटादावभावान्नातिव्याप्तिः॥ नन्वेवमपि लक्ष्यतावच्छेदकाधिकरणगोनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितावदभावप्रतियोगित्वविशेषणदळयोरतिव्याप्ते शृङ्गित्वे सत्त्वादतिव्याप्तिरितिचेन्न, विशेष्यदळघटकवृत्तितायां स्वरूपसम्बन्धावच्छिन्नत्वस्य विशेषणीयत्वात्। नचैवमपि गोः कपिलरूपाभावस्य लक्षणत्वेऽव्याप्ते कपिलरूपाभावेऽव्याप्त्यापत्तेः, कपिलरूपाभावाभावस्य लक्ष्यतावच्छेदकाधिकरणे स्वरूपसम्बन्धेनासत्त्वादितिवाच्यम्, तादृशवृत्तितायास्स्वरूपसमवायान्यतरसम्बन्धावच्छिन्नत्वेन विशेषणीयत्वात्, कपिलरूपाभावाभावस्य गवि तदन्यतरान्तर्गतसमवायेन सत्त्वान्नाव्याप्तिः॥

नच तथापि पर्वतस्य धूमाभावादेर्लक्षणत्वेलक्ष्यतावच्छेदकाधिकरणे पर्वते निरुक्तान्यतरसम्बन्धेन धूमाभावाभावस्यासत्त्वादव्याप्ते धूमाभावेऽव्याप्तिरिति वाच्यम्। विशेष्यदलघटकवृत्तितायाः स्वप्रतियोगिसत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वेन विवक्षितत्वात्, भावलक्षणकस्थले तादृशसम्बन्धः स्वरूपएव भवति, अभावलक्षणकस्थले स सम्बन्धस्समवायादिरेवेति ध्येयम् (स्वप्रतियोगिसत्ताग्रहविरोधिताघटकत्वञ्च स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकत्वंग्राह्यम्) लक्ष्यतावच्छेदकसमानाधिकरणाभावप्रतियोगितायां लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वं विशेषणीयम्, अन्यथा

लक्ष्यतावच्छेदकसमानाधिकरणस्य संयोगादिना शृङ्गित्वाभावस्य प्रतियोगित्वेनातिव्याप्ते शृङ्गित्वेऽतिव्याप्तेः ॥ अतएव शृङ्गित्व-भेदीयप्रतियोगितामादाय शृङ्गित्वेतिव्याप्त्यभावेन अत्यन्ताभाव-त्वेनाभावनिवेशाभावेपि न क्षतिः ॥

**मू * अलक्ष्ये लक्षणस्य वर्तनमतिव्याप्तिः । यथा गो-श्शृंङ्गित्वम् ॥**

व्या * अलक्ष्ये लक्षणस्य वर्तनं नाम लक्ष्यतावच्छेदकसमा-नाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताक-भेदसामानाधिकरण्यम् । समन्वयस्तु, लक्ष्यतावच्छेदकाधिकरण-गोवृत्तित्वं शृङ्गित्वे वर्तते, लक्ष्यतावच्छेदकावच्छिन्ना प्रतियोगिता गोत्वावच्छिन्ना प्रतियोगिता, तन्निरूपको यो भेदः गोभेदः, तदधिकरणं महिषादिः, तद्वृत्तित्वञ्च शृङ्गित्वे वर्ततइति । लक्ष्यता-वच्छेदकसामानाधिकरण्यमात्रोक्तावव्याप्तेऽतिव्याप्तेः । विशेष्य-दळनिवेशेतु कपिला गौरिति प्रतीत्या गव्येव कपिलरूपस्याङ्गी-कृतत्वेन तादृशभेदाधिकरणमहिषादौ तस्याभावान्नातिव्याप्तिः । विशेष्यदळमात्रोपादाने तादृशभेदाधिकरणाश्वादावेकशफत्स्य-सत्त्वात्तत्रातिव्याप्तेः । विशेषणदळनिवेशे तु लक्ष्यतावच्छेदकाधि-करणगोवृत्तित्वस्य तत्राभावान्नातिव्याप्तिः ॥ अत्रापि लक्ष्यता-वच्छेदकनिष्ठाधेयतायां लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छि-न्नत्वं विशेषणं देयम्, अन्यथा कालिकसम्बन्धेन लक्ष्यतावच्छेद-काधिकरणत्वमादायासम्भविन्यतिव्याप्तेः । लक्ष्यतावच्छेदकाधि-करणनिरूपितवृत्तितायांलक्षणता( घटक )वच्छेदकसम्बन्धावच्छि-न्नत्वं विशेषणं देयम्, अन्यथा लक्ष्यतावच्छेदकाधि-करणनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितामादायासम्भविन्यति-

व्याप्तेः ॥ तादृशभेदनिष्ठाधेयतायां स्वरूपसम्बन्धावच्छिन्नत्वं विशेषणीयम्, अन्यथा कालिकेन तादृशभेदाधिकरणकपिलगोवृत्तित्वमादायाव्याप्तेऽतिव्याप्तेः ॥ तादृशभेदाधिकरणनिरूपितवृत्तितायां लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वदलं निवेशनीयम्, अन्यथा लक्ष्यभेदाधिकरणमहिषादिनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितामादाय कपिलरूपेऽव्याप्तेतिव्याप्तिः ॥ अभावत्वेन भेदनिवेशे तु लक्ष्यात्यन्ताभावमादायाव्याप्तेऽतिव्याप्तिः ॥

**मू * लक्ष्यमात्रावृत्तित्वमसम्भवः । यथा, गोरेकशफवत्त्वम् ॥**

व्या * असम्भवस्वरूपं दर्शयति * लक्ष्यमात्रेति * लक्ष्यमात्रावृत्तित्वञ्च (लक्ष्यनिरूपितवृत्तित्वसामान्याभाववत्त्वम्). लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्, तच्च लक्ष्यतावच्छेदकाधिकरणवृत्त्यत्यन्ताभावाप्रतियोग्यभावप्रतियोगित्वम्, गोरेकशफवत्त्वे लक्षणेऽभिहिते तत्र लक्षणसमन्वयः, तथाहि, लक्ष्यतावच्छेदकं गोत्वम्, तदधिकरणं गौः, तद्वृत्तिर्योऽत्यन्ताभावः नहि एकशफवत्त्वाभावाभावः, किन्तु एकशफवत्त्वाभावः, तत्प्रतियोगि एकशफवत्त्वम्, तदप्रतियोगी योऽभावः एकशफवत्त्वाभावः, तत्प्रतियोगित्वं एकशफवत्त्वे वर्तते इति । अत्राभावे लक्ष्यतावच्छेदकव्यापकत्वमनिवेश्य तत्सामानाधिकरण्यनिवेशे अव्याप्ते कपिलरूपे लक्ष्यतावच्छेदकाधिकरणत्वेनगोनिष्ठात्यन्ताभावप्रतियोगितामादायातिव्याप्तिः, तद्व्यापकत्वनिवेशेतु कपिलगवान्तर्भावेण व्यापकत्वव्यभिचारान्नातिव्याप्तिः ॥

अत्र लक्ष्यतावच्छेदकनिष्ठाधेयतायां लक्ष्यतावच्छेदकतावच्छे-

दकसम्बन्धावच्छिन्नत्वं विशेषणं देयम्, अन्यथा कालिकसम्बन्धेन लक्ष्यतावच्छेदकाधिकरणेऽश्वादावेकशफवत्त्वाभावस्यासत्त्वेन तत्र व्यापकत्वाप्रसिद्ध्याऽसम्भवापत्तेः। लक्ष्यतावच्छेदकाधिकरणनिरूपितवृत्तितायां स्वरूपसम्बन्धावच्छिन्नत्व (स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वं) विशेषणं देयम्, अन्यथा लक्ष्यतावच्छेदकाधिकरणे गवि कालिकसम्बन्धेन वर्तमानस्य एकशफवत्त्वाभावाभावस्य प्रतियोगित्वेनैकशफवत्त्वाभावस्यासम्भवापत्तेः। लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगितायां लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वं विशेषणं देयम्, अन्यथा संयोगादिसम्बन्धेन शृङ्गित्वं नास्तीत्यभावस्य लक्ष्यतावच्छेदकव्याप-

अनुगमप्रकारः, गोरेकशफवत्त्वलक्षणमसम्भवीत्युच्यते, तन्नघटते, शते पञ्चाशन्न्यायेन शफद्वयविशिष्टगव्येकशफवत्त्वस्यान्यनपायात्, अतश्शफे एकत्वं परिष्करणीयम्, तच्च शफविशिष्टशफान्यत्वम्, शफे शफवैशिष्ट्यञ्च स्वतादात्म्यस्वविशिष्टपादावयवत्वोभयसम्बन्धेन (अत्र शफविशिष्टशफो गोशफएव) पादे स्ववैशिष्ट्यञ्च स्वसमवेतत्वस्वभिन्नसमवेतत्वोभयसम्बन्धेन (अत्र स्वविशिष्टपादोगोपादएव। स्वभिन्नं शफान्तरं गवीयमेव) शफविशिष्टशफान्यत्वन्तु अश्वशफएव सम्भवतीति नानुपपत्तिः॥ यद्वा, शफे एकत्वञ्च शफविशिष्टशफान्यत्वम्, शफे शफवैशिष्ट्यञ्च स्वभिन्नत्वस्वसमवेतपादसमवायित्वोभयसम्बन्धेन ग्राह्यम्, अत्रापि शफविशिष्टशफो गोशफएव। स्वभिन्नत्वमात्रस्य सम्बन्धत्वे अश्वशफेपि गोशफवत्त्वस्य निरुक्तसम्बन्धेन सत्त्वादनुपपत्तिः। द्वितीयसम्बन्धमात्रोपादाने अश्वशफे परीश्वशफविशिष्टत्वस्य तेन सम्बन्धेन सत्त्वादनुपपत्तिर्ग्राह्य। यदि नखलोमादीनां संयुक्तद्रव्यत्वेव दिनकरेणाङ्गीकृतेत्युच्येततदा प्रथमानुगमे समवेतत्वस्थाने संयुक्तत्व द्वितीयानुगमे स्वसमवेतपादसमवायित्व सम्बन्धस्थाने स्वसंयुक्तपादसंयुक्तत्वमितिच निवेशनीयम्॥

कत्वेन शृङ्गित्वादौ एवंरीत्यागन्धवत्त्वादिसल्लक्षणेषु चातिव्याप्त्यापत्तेः । तथाच लक्ष्यतावच्छेदकनिष्ठलक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तितावदत्यन्ताभावाप्रतियोग्यभावनिरूपितलक्षणतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वम असम्भवः ( असम्भविनो लक्षणम् ) इति निष्कर्षः ॥

यथाश्रुतयोः लक्ष्यैकदेशावृत्तित्वालक्ष्यवृत्तित्वरूपयोः अव्याप्त्यतिव्याप्तलक्षणयोः एकशफवत्त्वरूपासम्भविन्यतिव्याप्तत्वेन एतादृशगुरुतरलक्षणारम्भः कृतइति केचन वदन्ति ॥ वस्तुतस्तु तयोर्लक्षणयोः असम्भविसाधारण्येपि "दुष्टसंकरेपि दोषासङ्करइति, न्यायेन तयोरेकत्र समावेशेपि दोषयोर्भिन्नतया न क्षतिः ॥ लक्ष्यमात्रावृत्तित्वरूपासम्भविलक्षणस्य तु अन्यत्रानतिप्रसक्तत्वेपि अत्रत्यमात्रपदस्य व्यापकत्वार्थकत्वमिति सूचयितुं असम्भविनोप्येतादृशं गुरुतरलक्षणमङ्गीकृतमिति केचन वदन्ति । अन्येतु लक्ष्यमात्रावृत्तित्वमित्यसम्भविलक्षणे मात्रपदस्य कार्त्स्न्यार्थकतायाः स्वीकृतायां लक्ष्यनिरूपितवृत्तित्वसामान्याभावलाभस्सम्भवति, तथाच द्रव्यस्यगुणत्वविशिष्टसत्तावत्त्वं लक्षणमुक्तंचेत् तादृशसत्तारूपासंभाविनिविशेष्यवृत्तिपदार्थप्रतियोगिकविशिष्टानुयोगिकाभावस्याप्रसिद्धतया तादृशलक्षणासंभवेन अव्याप्तिप्रसङ्गेनलक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वमिति गुरुतरलक्षणस्यारम्भ इति वदन्ति । ( गुणत्वविशिष्टसत्तायाः सत्ताविशेष्यम्, तद्वृत्तिपदार्थः लक्ष्यनिरूपितवृत्तित्वम्, तत्प्रतियोगिकत्व तादृशसामान्याभावेऽक्षतम् ) स्भविनोप्येतादृशं गुरुतरलक्षणमङ्गीकृतमितिकेचनवदंति ॥

**मू * एतद्दूषणत्रयरहितो धर्मो लक्षणम्, यथा गोः सास्नादिमत्त्वम् । सएवासाधारणधर्म इत्युच्यते ॥**

व्या * एतद्दूषणत्रयरहित इति * उक्तदोषाभावत्रयविशिष्ट इत्यर्थः । त्रित्वस्याभाव एवान्वयः, नतु दोषेष्वभावप्रतियोगिषु एवंचेत् एकसत्त्वे द्वयं नास्तीति प्रतीत्या अतिव्याप्त्याद्येकदोषवत्यपि निरुक्तदोषत्रयाभाववत्त्वस्य सत्त्वात्तस्यापि लक्षणत्वापत्तिः । असाधारणधर्मदूषणत्रयरहितधर्मपदयोः पर्यायपदत्वमभिधत्ते ग्रन्थकारः * स एवेति *

**मू * लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम् ॥**

व्या * यथाश्रुतशब्दलभ्यलक्ष्यालक्ष्यवृत्तित्वरूपसाधारण्याभावरूपस्यासाधारणत्वस्य अव्याप्त्यसम्भवग्रस्तयोरपि सत्त्वादन्यादृशमसाधारणत्वच परिष्करोति * लक्ष्यतावच्छेदकसमनियतत्वमिति * लक्ष्यतावच्छेदकसमनियतत्वंच लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वम् । लक्ष्यतावच्छेदकव्यापकत्वच लक्ष्यतावच्छेदकाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वम् । लक्ष्यतावच्छेदकव्याप्यत्वच लक्ष्यतावच्छेदकाभाववदवृत्तित्वम् । गोः सास्नादिमत्त्वं लक्षणमुक्तचेत् तत्र सास्नादिमत्त्वरूपलक्षणे लक्षणसमन्वयः, तथाहि, अत्र लक्ष्या गौः, लक्ष्यतावच्छेदकं गोत्वम्, तदधिकरणं गौः, तद्वृत्तिर्योऽत्यन्ताभावः नहि सास्नादिमत्त्वात्यन्ताभावः, सास्नादिमत्त्वस्यैव तत्र सत्त्वात्, कितु पटाद्यभावः, तत्प्रतियोगित्वं पटादौ वर्तते, तदप्रतियोगित्वं सास्नादिमत्त्वे वर्तते । लक्ष्यतावच्छेदकाभावः गोत्वाभावः, तदधिकरणं महिषादिः, तद्वृत्तित्वं शृङ्गित्वे वर्तते, तदवृत्तित्वं सास्नादिमत्त्वे वर्तत इति समन्वयः ॥

लक्ष्यतावच्छेदकव्यापकत्वमात्रोक्तौ अतिव्याप्तेः शृङ्गित्वादावपि लक्ष्यतावच्छेदकगोत्वव्यापकत्वस्य सत्त्वादतिव्याप्तिः । तद्व्याप्यत्वनि-

वेशे तु शृङ्गित्वे लक्ष्यतावच्छेदकगोत्वाभाववन्महिषादिवृत्तित्वस्यैव सत्त्वेन नातिव्याप्तिः ॥ लक्ष्यतावच्छेदकव्याप्यत्वानिवेशे तु अव्याप्तिः कपिलरूपे असम्भविनि गगनादौ च लक्ष्यतावच्छेदकाभाववन्महिषादिनिरूपितवृत्तित्वाभावस्य सत्त्वादतिव्याप्तिः (असम्भविन्येकशफवत्त्वे तादृशव्याप्यत्वासम्भवेन न तत्रातिव्याप्तिरुक्ता) तद्व्यापकत्वनिवेशे तु लक्ष्यतावच्छेदकाधिकरणे श्वेतगवि कपिलरूपस्याभावेन गगनस्यावृत्तिपदार्थतया लक्ष्यतावच्छेदकाधिकरणे कुत्राप्यवृत्तित्वेन च नातिव्याप्ति ॥ लक्ष्यतावच्छेदकव्यापकत्वघटकप्रतियोगितायां वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वे निवेशनीये, अन्यथा, पूर्वक्षणवृत्तित्वविशिष्टसास्नादिलक्षणाभाव सास्नादिलक्षणघटत्वोभयाभाव चादायासम्भवापत्तेः । व्याप्यत्वघटकलक्ष्यतावच्छेदकनिष्ठप्रतियोगिताया लक्ष्यतावच्छेदकतावच्छेदकधर्मातिरिक्तधर्मानवच्छिन्नत्वं विशेषणीयम्, अन्यथा, लक्ष्यतावच्छेदकघटत्वोभयाभावमादायासम्भवापत्तेः ॥

अत्र व्याप्यत्वघटकवृत्तित्वाभावः तादृशवृत्तित्वसामान्याभावो वाच्यः, अन्यथा, अलक्ष्ये शृङ्गित्वे तादृशवृत्तित्वघटत्वोभयाभावमादायातिव्याप्तेः । तन्निवेशे तु तदुभयाभावीयप्रतियोगितायाः तादृशवृत्तित्वत्वातिरिक्तोभयत्वरूपधर्मावच्छिन्नतया निरुक्ताभावे तादृशवृत्तित्वत्वातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावत्वरूपत - त्सामान्याभावत्वस्याभावान्नातिव्याप्तिः ॥ अत्र व्याप्यत्वं लक्ष्यतावच्छेदकाभाववन्निरूपितवृत्तितानवच्छेदकधर्मवत्त्वरूपं परिष्करणीयम्, अन्यथा, द्रव्यस्य गुणकर्मान्यत्वविशिष्टसत्ताया लक्षणत्वे (अत्र सत्तायां गुणकर्मान्यत्ववैशिष्ट्यं स्वरूपसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन बोध्यम्, अन्यथा, तस्य गुणादावप्य-

धिकरणत्वप्रसङ्गः) "गुणे गुणकर्मान्यत्वविशिष्टसत्ता" इति, प्रतीत्या लक्ष्यतावच्छेदकाभाववद्गुणादिनिरूपितवृत्तित्वस्यैव लक्षणे सत्त्वेनाव्याप्तेः । तथा परिष्कारे तु "गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति, प्रतीत्यभावेन गुणनिरूपितवृत्तितावच्छेदकत्वस्य विशिष्टसत्तात्वेऽसम्भवेन तदनवच्छेदकत्वस्य तत्र सत्त्वान्नाव्याप्तिः समन्वयश्च। (गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतौ गुणनिरूपितसत्तात्वावच्छिन्नवृत्तित्व तादृशसत्तायां भासते, गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति प्रतीतौ तु गुणकर्मान्यत्ववैशिष्ट्यसत्तात्वरूपधर्मद्वयावच्छिन्नाधेयतानिरूपिताधिकरणतायाः गुणकर्मान्यत्वाधिकरणत्वसत्ताधिकरणत्वरूपाधिकरणताद्वयस्य वा भानमङ्गीक्रियत इति ग्राह्यम् ॥

व्यापकत्वदळे लक्ष्यतावच्छेदकनिष्ठाधेयतायां लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वं विशेषण देयम्, अन्यथा, कालिकादिसम्बन्धेन लक्ष्यतावच्छेदकाधिकरणे घटादौ सास्नाद्यभावस्य सत्त्वेनासम्भवापत्तेः ॥ लक्ष्यतावच्छेदकाधिकरणवृत्तित्वं स्वरूपसम्बन्धावच्छिन्नत्वेन स्वप्रतियोगिसत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वेन वा विवक्षणीयम्, अन्यथा, लक्ष्यतावच्छेदकाधिकरणेऽपि कालिकादिसम्बन्धेन लक्षणाभावस्य सत्त्वादसम्भवापत्तेः ॥ व्यापकत्वघटकात्यन्ताभावनिरूपितप्रतियोगितायां लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वं विशेषणं देयम्, अन्यथा, लक्ष्येऽपि स्वरूपसम्बन्धेन सम्बन्धान्तरावच्छिन्नप्रतियोगिताकलक्षणाभावस्य सत्त्वादसम्भवापत्तेः । व्याप्यत्वघटकलक्ष्यतावच्छेदकानिष्ठप्रतियोगितायां लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वं विशेषणं देयम्, अन्यथा, व्यधिकरणसम्बन्धावच्छिन्नलक्ष्यतावच्छेदक-

निष्ठप्रतियोगिताकाभावाधिकरणीभूतलक्ष्यवृत्तित्वस्यैव लक्षणे सत्त्वेनासम्भवापत्तेः । लक्ष्यतावच्छेदकाभावनिष्ठाधेयतायां स्वरूपसम्बन्धावच्छिन्नत्व विशेषणं देयम्, अन्यथा, कालिकसम्बन्धेन लक्ष्यतावच्छेदकाभावाधिकरणीभूतलक्ष्यवृत्तित्वस्यैव लक्षणे सत्त्वादसम्भवापत्तेः ॥ लक्ष्यतावच्छेदकाभाववन्निरूपितवृत्तितायां लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वं विशेषण देयम्, अन्यथा, लक्ष्यतावच्छेदकाभाववद्घटादिनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितामादायासम्भवापत्तेः ॥

अथवा, तादृशविशिष्टाभावोभयाभावादिकमादायासम्भववारणाय लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वरूपं लक्ष्यतावच्छेदकव्यापकत्वं परिष्करणीयम्, वैशिष्ट्योभयत्वादेः तादृशाभावप्रतियोगितावच्छेदकत्वेऽपि तदनवच्छेदक लक्षणतावच्छेदकं धर्ममुपादाय लक्षणसमन्वयसम्भवात्। नच तादृशप्रतियोगितानवच्छेदक प्रमेयत्वादिकमादाय लक्ष्यतावच्छेदकव्याप्यकपिलरूपादावतिव्याप्तिरिति वाच्यम्, लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकः लक्ष्यतावच्छेदकाभाववद्वृत्तितानवच्छेदकश्च यो धर्मः तद्वत्त्वस्य विवक्षितत्वात्, प्रमेयत्वादेः तद्व्याप्यतावच्छेदकत्वाभावेन न तत्रातिप्रसङ्गः, लक्ष्यतावच्छेदकव्यापकतावच्छेदकं तद्व्याप्यतावच्छेदक लक्षणतावच्छेदकं धर्ममादाय सर्वत्र लक्षणसमन्वयो ग्राह्यः ॥

इदमत्रावधेयम्, अतिव्याप्त्यादिदोषत्रयं असाधारणत्वस्य विघटकं भवति । तथाहि, अतिव्याप्तिस्तु तल्लक्षणे लक्ष्यतावच्छेदकव्याप्यत्वं विघटयति । यथा, शृङ्गित्वरूपातिव्याप्तं गोत्वव्याप्यत्वाभाववद्भवति, अव्याप्त्यसम्भवौ पुनः लक्षणे लक्ष्यतावच्छेदकव्यापकत्वं विघटयतः,

• यथा, कपिलरूपवत्त्वरूपाव्याप्तं एकशफवत्त्वरूपासम्भवि च लक्ष्य-तावच्छेदकगोत्वव्यापकत्वाभाववद्भवति । एतेषां दूषकताबीजं तु, लक्षणेनेतरभेदसाधनेऽतिव्याप्तं लक्षणं व्यभिचारि भवति, यथा, गौः इतरभिन्ना शृङ्गित्वादित्यत्र शृङ्गित्वं इतरभेदाभाववन्महिषादिवृत्ति भवति । अव्याप्तं तु भागासिद्धं भवति, यथा गौः इतर-भिन्ना कपिलरूपवत्त्वादित्यत्र लक्ष्यतावच्छेदकाश्रये श्वेतगवि कपि-लरूपाभावेन कपिलरूपवत्त्वलक्षणं भागासिद्धं भवति (पक्षताव-च्छेदकसामानाधिकरण्येन हेत्वभावः, हेतौ पक्षतावच्छेदकसमा-नाधिकरणात्यन्ताभावप्रतियोगित्वं भागासिद्धिः) असम्भवि लक्ष-णन्तु स्वरूपासिद्धं भवति, यथा, गौः इतरभिन्ना एकशफवत्त्वादि-त्यत्र गोसामान्ये एकशफवत्त्वाभावादेकशफवत्त्वं स्वरूपासिद्धं भवति (हेत्वभाववान् पक्षः, हेतौ पक्षतावच्छेदकव्यापकीभूता-भावप्रतियोगित्वं स्वरूपासिद्धिः) ॥

**मू * व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चा-तिव्याप्तिवारणाय तद्भिन्नत्वं धर्मविशेषणं देयम्, व्यवहार-स्यापि लक्षणप्रयोजनत्वे तत् न देयम्, व्यावृत्तेरपि व्यव-हारसाधनत्वात् ॥**

---

नीलकण्ठपण्डितकृतः लक्षणलक्षणोक्तविचारः प्रदर्श्यते, ननु किमिदं नाम लक्षणलक्षणलक्ष्यतावच्छेदकं व्यावर्तकत्वम्, न तावत्सामान्यतो भेदानुमापकत्वम्, व्यावृत्त्यभिधेयत्वादेरपि यत्किंचिदुभयत्वावच्छिन्न-प्रतियोगिताकभेदानुमापकतया तत्र अतिव्याप्तिकथनासङ्गतेः, सर्वेषामपि व्यतिरेकिधर्माणां यत्किंचिद्व्यावर्तकतयाऽसाधारण्यादिघटकव्यापकत्वा-दिवैयर्थ्यापाताच्च । नापि विशिष्य तत्तद्धर्मावच्छिन्नेतरभेदानुमापकत्वम्, तथासति गोत्वावच्छिन्नेतरभेदानुमापकस्य सास्नादिमत्त्वस्य गोत्वसमनि-

व्या * लक्षणस्य व्यावृत्तिरेव प्रयोजनमिति मते व्यावर्तकलक्षणस्यैव निरुक्तलक्षणलक्षणलक्ष्यतया व्यावहारिकलक्षणस्य तदलक्ष्यतया तत्रातिव्याप्तिरित्याशङ्क्य परिहरति * व्यावर्तकस्येति * इतरभेदविधेयकानुमितिजनकतावच्छेदकाविषयताविशेषाश्रयत्वं व्यावर्तकत्वम्, अनुमितिं प्रति परामर्शस्य कारणतया परामर्शनिरूपितहेतुविषयतायाः तज्जनकतावच्छेदकत्वं निर्विवादम् (विषयतापर्यन्तानिवेशनाभावे ज्ञायमानलिङ्गस्यानुमितिकरणत्वानङ्गीकारपक्षे इतरभेदविधेयकानुमितिजनकत्वरूपव्यावर्तकत्वस्य हेतावसम्भवो ग्राह्यः) एवकारो व्यावहारिकव्यवच्छेदार्थः। व्यावर्तकस्य सास्नादेः, लक्षणत्वे गवादिलक्षणत्वे, उक्तलक्षणलक्षणलक्ष्यत्वे इति यावत्। अथवा, लक्ष्यतावच्छेदकसमनियतत्वरूपलक्षणस्य व्यावर्तकलक्षणस्य लक्षणत्वे इति वार्थः। * व्यावृत्ताविति * गवादीनां गवादीतरभेदवत्त्वस्य लक्षणत्वे तत्र लक्ष्यतावच्छेदकसमनैयत्य सम्भवती-

यतत्वं लक्षणमित्येवंरीत्या विशिष्य तत्तल्लक्षणस्य वक्तव्यतया गोत्वादिरूपलक्ष्यतावच्छेदकसमनियतत्वस्य गोत्वावच्छिन्नेतरभेदादिरूपव्यावृत्तावतिव्याप्तेरसम्भवेऽपि अभिधेयत्वादावतिव्याप्त्यलग्नकतापत्तेः, गोत्वादिसमनियतत्वस्य तत्रासत्त्वादिति चेत्, मैवम्, यतः सास्नादिमत्त्वं पक्षीकृत्य गोत्वावच्छिन्नेतरभेदानुमापकत्वे साध्ये विशेषव्याप्तावन्वयदृष्टान्तालाभेन यद्यद्धर्मसमनियतं तत्तदवच्छिन्नव्यावर्तकमिति रीत्या सामान्यमुखेन व्याप्तेरभ्युपगन्तव्यतया तत्र सिद्धसाधनाप्रसिद्धिभ्यामव्यावर्तकयोः व्यावृत्त्यभिधेयत्वयोः तत्तद्धर्मसमनैयत्यरूपप्रकृतहेतोः तत्तुल्यस्य वा हेतोः सत्त्वेन प्रकृतसाध्यस्य तत्तुल्यस्य वा साध्यास्य सत्त्वेन व्यभिचारस्स्यात्, अतः तद्दोषवारणाय तत्तद्धर्मावच्छिन्नेतरभेदरूपव्यावृत्तिभिन्नत्वं अभिधेयत्वादिभिन्नत्वं च लक्षणे निवेशनीयमित्यभिप्रायकोऽयं ग्रन्थ इति न पूर्वोक्तदोषावसर इति ॥

त्यतिव्याप्तिः । तथाहि, लक्ष्यतावच्छेदकं गोत्वम्, तदधिकरणं गौः, तद्वृत्तिर्योऽत्यन्ताभावः नहि गवादीतरभेदाभावः, परन्तु पटाद्यभावः, तत्प्रतियोगित्वं पटादौ, तदप्रतियोगित्वं गवादीतरभेदे वर्तते । एवं लक्ष्यतावच्छेदकाभावः गोत्वाभावः, तदधिकरणं महिषादिः, तद्वृत्तित्वं महिषादीतरभेदे, तदवृत्तित्वं गवादीतरभेदे वर्तते इति । (व्यावृत्तेः परामर्शकाल एव साध्यसिद्धिसम्पादकतया अनुमिति-प्रतिबन्धान्न व्यावर्तकत्वम्, यथा, गौः इतरभिन्ना इतरभेदा-दित्यत्र इतरभेदव्याप्येतरभेदवती गौः इति परामर्शकाल एव गवि इतरभेदात्मकसाध्यस्य सिद्धत्वेन साध्यसिद्धया नानुमित्युत्पत्तिः)

साध्यसंशयस्य पक्षतात्वमङ्गीकुर्वतां प्राचां मते परामर्शकाल एव व्यावृत्तिहेतोस्सिद्धिसम्पादकतया अनुमितिप्रतिबन्धेन व्याव-र्तकत्वासम्भवेन तस्यालक्ष्यतया तत्रातिव्याप्तिसम्भवेऽपि सिषाधयि-षाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वमङ्गीकुर्वतां नवीनानां मते सिद्धिकालेऽपि सिषाधयिषाबलेनानुमितेरुत्पद्यमानतया तदाव्यावृत्ते-रपि व्यावर्तकत्वेन लक्ष्यतया तत्र नातिव्याप्तिरित्याशयेन स्थला-न्तरेऽतिव्याप्तिमभिधत्ते * अभिधेयत्वादाविति * पदार्थेतरभे-दस्याप्रसिद्ध्या मतद्वयेऽप्यभिधेयत्वादीनां व्यावर्तकत्वासम्भवेन व्या-वहारिकत्वं निर्विवादम् ( व्यावहारिकत्वंच व्यवहारप्रयोजकत्वम्, सच व्यवहारोऽत्र पदार्थाअभिधेया इति ) पदार्थानामाभिधेयत्वा-देर्लक्षणत्वे तत्र लक्ष्यतावच्छेदकपदार्थत्वसमनैयत्यस्य सत्त्वेनाति-व्याप्तिः । तथाहि, लक्ष्यतावच्छेदकं पदार्थत्वं, तदधिकरणं घटादिः, तद्वृत्तिर्योअत्यन्ताभावः नह्यभिधेयत्वाद्यभावः, किन्तु पटाद्यभावः, तत्प्रतियोगित्वं पटादौ, तदप्रतियोगित्वं अभिधेयत्वादौ वर्तते । अत्र लक्ष्यतावच्छेदकीभूतपदार्थत्वाभावस्याप्रसिद्धत्वेन तदभाववद-

वृत्तित्वरूपव्याप्यत्वासम्भवेऽपि केवलान्वयिलक्ष्यतावच्छेदककस्थलानुसारेण निवेशनीयस्य लक्षणव्यापकलक्ष्यतावच्छेदक (कत्व) सामानाधिकरण्यरूपं व्याप्यत्वं अभिधेयत्वे सम्भवत्येव, तथाहि, प्रकृते लक्षणमभिधेयत्वम्, तदधिकरणं घटादिः, तद्वृत्तिर्योऽत्यन्ताभावः नहि पदार्थत्वाभावः, किन्तु पटत्वाद्यभावः, तदप्रतियोगि यल्लक्ष्यतावच्छेदकं पदार्थत्वम्, तदधिकरणघटादिवृत्तित्वमभिधेयत्वे सम्भवतीति ॥

ननु (गवादिलक्षणेषु) गोत्वादिव्यावहारिकलक्षणेष्वव्याप्तिव्याप्तिसम्भवे अभिधेयत्वादिपर्यन्तानुसरणे किं बीजमिति चेन्न, सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्ववादिमते गोत्वादीनां व्यावर्तकत्वेन लक्ष्यत्वं सम्भवति, व्यावृत्तिरूपसाध्याप्रसिद्ध्या प्राचीननवीनमतद्वयेऽपि अभिधेयत्वादेर्व्यावर्तकत्वासम्भवेन सर्वथा व्यावहारिके तस्मिन् अलक्ष्ये अतिप्रसङ्गस्सङ्गमनायाभिधेयत्वादिपर्यन्तानुसरणस्य युक्तत्वात्। नच प्राचीनमते गोत्वादिव्यावहारिकेऽतिव्याप्तिर्दुर्वारेति वाच्यम्, तन्मते तस्य व्यावृत्ति (स्थानीयत्वात्) तुल्यत्वात्। अथवा, एकधर्मावच्छिन्नप्रकारतानिरूपितैकधर्मावच्छिन्नविशेष्यताशालिन्योरेव अनुमितिसिद्ध्योः प्रतिबध्यप्रतिबन्धकभावाङ्गीकारे तुल्यवित्तिवेद्यतयाभावानङ्गीकारे च व्यावृत्तेरिव गोत्वादीनां व्यावर्तकत्वासम्भवस्य दुर्निरूपतया गोत्वादावतिव्याप्तिकथनासङ्गतिर्ग्राह्या। (सर्वस्मिन्नपि मते व्यावृत्तेर्व्यावर्तकत्वाभावो निर्विवादः, गोत्वादेर्निरुक्तरीत्या व्यावर्तकत्व कथञ्चिन्निरूपयितुं शक्यते) ननु व्यावृत्त्यभिधेयत्वादिभिन्नत्वनिवेशेऽपि गोत्वादावतिव्याप्तिर्दुर्वारा, तत्र तदुभयभेदस्य सत्त्वादितिचेन्न, विशिष्टसिद्ध्यभावस्य पक्षतात्ववादिमते तस्यापि व्यावर्तकत्वेन लक्ष्यत्वात् ॥

"व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इति, वचनानुसारेण लक्षणस्य व्यवहारोऽपि प्रयोजनमिति मते व्यावहारिकलक्षणस्यापि लक्षणलक्षणलक्ष्यतया तत्र लक्षणसङ्गमनं न दोषमावहतीत्याह * व्यवहारस्यापीति * तन्नदेयमिति * तत् व्यावृत्तिभिन्नत्वमभिधेयत्वादिभिन्नत्वं च । व्यावृत्तेरपीत्यत्रापिना अभिधेयत्वादिपरिग्रहः ॥

**मू * ननु गुणवत्त्वं न द्रव्यलक्षणम्, आद्यक्षणावच्छिन्नघटे उत्पन्नविनष्टघटे चाव्याप्तेरिति चेन्न, गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य विवक्षितत्वात् ॥**

व्या * ननु आद्यक्षणावच्छिन्नघटे (आद्यक्षणावच्छेदेन घटे) गुणवत्त्वस्यासत्त्वेपि कालान्तरावच्छिन्ने तस्मिन्, (कालान्तरावच्छेदेन तस्मिन् घटे) गुणवत्त्वमबाधितम्, प्रथमद्वितीयादिक्षणोपाधिभेदादेव घटे गुणानाश्रयत्वतदाश्रयत्वे, नत्वाश्रयभेदात्, अतः प्रथमनिर्दिष्टस्थले गुणवत्त्वमबाधितमित्यतः स्थलान्तरेऽव्याप्तिमाह * उत्पन्नविनष्टघट इति * प्रथमक्षणे उत्पन्नः द्वितीयक्षणे नष्टश्च यो घटः स उत्पन्नविनष्टघट इत्युच्यते ।

तत्सामग्री निरूप्यते

यादृशघटारम्भकसंयोगजनकक्रियोत्पत्तितृतीयक्षणे अवयवान्तरे तादृशसंयोगनाशिका क्रिया जाता तादृशो घटः उत्पन्नविनष्टघटः—

| क्षणे | एकावयवे | अपरावयवे |
|---|---|---|
| प्रथमे | घटारम्भकसंयोग जनक क्रिया | |
| द्वितीये | विभागः | |
| तृतीये | पूर्वसंयोगनाशः | घटारम्भकसंयोग-नाशकक्रिया |

| | | |
|---|---|---|
| क्षणे | एकावयवे | अपरावयवे |
| चतुर्थे | घटारम्भकसंयोगोत्पत्तिः | विभागः |
| पञ्चमे | घटोत्पत्तिः | घटारम्भकसंयोगनाशः |

षष्ठे असमवायिकारणीभूतघटारम्भकसंयोगनाशात् 'घटनाशइति क्रम इति उत्पन्नविनष्टघटाङ्गीकर्तुराशय. ॥

असमवायिकारणसंयोगस्य कार्यसहभावेन कारणत्वमभ्युपगच्छतां नवीनानां मते असमवायिकारणघटारम्भकसंयोगनाशकाले घटादिकार्याङ्गीकरणस्य विरुद्धतया उत्पन्नविनष्टघटो नाङ्गीक्रियते॥

सत्ताभिन्नगुणत्वादिजातिमादाय गुणादावतिव्याप्तिवारणाय जातौ गुणसामानाधिकरण्यनिवेशः । सत्तामादाय गुणादावतिव्याप्तिवारणाय सत्ताभिन्नत्वनिवेश । द्रव्यगुणान्यतरत्वमादाय तत्रैवातिव्याप्तिवारणाय जातित्वेन जातिनिवेशः । अत्र जातिमत्त्वं च समवायेन बोध्यम्, अन्यथा, कालिकेन जातिमत्त्वस्य गुणादावपि सत्त्वात्तत्रातिव्याप्तिः । तथाच समवायसम्बन्धावच्छिन्नगुणत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिसत्ताभिन्नजातिमत्त्वं द्रव्यलक्षणं बोध्यम् । अत्राधेयतायां समवायसम्बन्धावच्छिन्नत्वगुणत्वावच्छिन्नत्वयोर्निवेशात् कालिकसम्बन्धावच्छिन्नगुणत्वावच्छिन्नाधेयतां समवायसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नाधेयतांचादाय न गुणादावतिप्रसङ्गः (अत्रापि समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धेन गुणविशिष्टत्वस्य लक्षणत्वोक्तौ उत्पन्नविनष्टघटेऽव्याप्त्यभावेन न जातिघटितलक्षणकरणावश्यकतेति ध्येयम्) ।

**मू * नन्वेवमप्येकं रूपं रसात्पृथगिति व्यवहाराद्रूपादावतिव्याप्तिरिति चेन्न, एकार्थसमवायादेव तादृशव्यवहारोपपत्तौ गुणे गुणानङ्गीकारात् ॥**

व्या * एकंरूपमिति * अत्र समानविभक्तिकविशेष्यविशेषणवाचकपदमहिम्ना रूपे एकत्वपृथक्त्वयोर्गुणयोर्भासमानतया रूपस्यापि एकत्वपृथक्त्वादिगुणाधिकरणत्वेन ग्रहात्तु शक्यत्वेन गुणादावतिव्याप्तिर्दुर्वारेति प्रष्टुराशयः * एकार्थसमवायादेवेति * एकस्मिन्नर्थे घटादौ समवायेन सत्त्वादेवेत्यर्थ. । अत्र प्रतीतौ रूपे एकत्वपृथक्त्वयोर्नसमवायेनभानमङ्गीक्रियते, किन्तु समवायघटितसामानाधिकरण्यसम्बन्धेन, तथाच गुणे गुणानङ्गीकारेण लक्षणघटकीभूतसमवायसम्बन्धावच्छिन्नगुणाधिकरणत्वस्य गुणे असत्त्वेन तद्वृत्तिगुणत्वजातिमादाय न गुणेष्वतिव्याप्तिरिति समाधानम् ॥

**मू * गुणान् विभजते, रूपेति * द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः, गुणत्वजातिमान्वा । ननु लघुत्वकठिनत्वमृदुत्वादीनां विद्यमानत्वात्कथं चतुर्विंशतिगुणा इतिचेन्न, लघुत्वस्य गुरुत्वाभावरूपत्वात् मृदुत्वकठिनत्वयोरवयवसंयोगविशेषरूपत्वात् ॥**

व्या * गुणान् विभजत इति * अत्र द्वितीयाया विशेष्यतानिरूपकत्वम्, विपूर्वकभजधातोः विभागोऽर्थः । सच परस्परविरुद्धसामान्यधर्मव्याप्यविशेषधर्मप्रकारकज्ञानानुकूलव्यापाररूपः, आख्यातस्य कृतिरर्थः, व्यापारस्य कृतावनुकूलतासम्बन्धेन कृतेश्चान्नम्भट्टे आश्रयता (समवाय) सम्बन्धेन चान्वयः ! तथाच गुणविशेष्यकपरस्परविरुद्धसामान्यधर्मव्याप्यविशेष्यधर्मप्रकारकज्ञानानुकूलरूपेत्यादिशब्दाभिन्नव्यापारानुकूलकृतिमानन्नम्भट्ट इति शाब्दबोधः, परस्परविरुद्धाः सामान्यधर्मव्याप्या ये विशेषधर्माः रूपत्वरसत्वादयः, तत्प्रकारकं गुणविशेष्यकं यद्ज्ञानं रूपं रसः गन्धः-

इत्याकारकं ज्ञानं, तदनुकूलो यो व्यापारः रूपरसगन्धस्पर्शेत्यादि-शब्दप्रयोगरूपो व्यापारः, तदनुकूला कृतिः अन्नम्भट्टसमवेता कृतिः, तादृशकृतिमानन्नम्भट्ट इति योजना * द्रव्यकर्मभिन्नेति * द्रव्यभिन्नत्वे सति कर्मभिन्नत्वे सति सामान्यवत्त्वं गुणस्य लक्षणम्, सामान्यवत्त्वमात्रोक्तौ द्रव्यकर्मणोः तदनुपादाने सामान्यादौ द्रव्य-भिन्नत्वे सति सामान्यवत्त्व कर्मभिन्नत्वे सति सामान्यवत्त्वमित्युक्तौ कर्मद्रव्ययोरतिव्याप्तिरिति दलत्रयोपादानम्। इद व्यावर्तकं लक्षणं। गुणत्वं व्यावहारिकं लक्षणं बोध्यम्। गुणत्वकर्मत्वपृथिवीत्वजलत्वा-दीनां जातित्वसिद्धिप्रकारः सामान्यादिचतुष्टये जात्यभावश्च सोपप-त्तिकं मदीयतर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे जातिसिद्धि-विचारप्रस्तावे सम्यक् निरूपित इति नात्र निरूप्यते * लघुत्व-स्येति * लघुत्वं गुरुत्वाभावरूपं, वस्तुतो प्रशिथिलावयवसंयोगो मृदुत्वं, दृढतरावयवसंयोगः कठिनत्वमिति विवेकः, सादृश्यादी-नामतिरिक्तत्वाभावविचारोऽपि तर्कसङ्ग्रहसर्वस्वे निरूपितः ॥

**मू * कर्म विभजते * उत्क्षेपणेति * संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म, कर्मत्वजातिमद्वा भ्रमणा-दीनामपि गमनेऽन्तर्भावान्नपञ्चत्वविरोधः ॥**

व्या * कर्म लक्षयति * संयोगभिन्नत्वे सतीति * संयोग-भिन्नत्वमात्रोक्तौ संयोगसमवायिकारणद्रव्येऽतिव्याप्तिः । संयोगा-समवायिकारणत्वमात्रोक्तौ कायपुस्तकसंयोगासमवायिकारणे हस्तपुस्तकसंयोगेऽतिव्याप्तिः । इदं व्यावर्तकं, कर्मत्वजातिरूपं व्यावहारिकं च निर्दिष्टम्। भ्रमणादीनामित्यत्रादिपदेन "भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च, तिर्यग्गमनमप्यत्र गमनादेव लभ्यते"

इति श्लोकोक्तं गमनपञ्चकं ग्राह्यम् । नचोत्क्षेपणादीनामपि गमने-ऽन्तर्भावस्स्यादिति वाच्यं, स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हस्य मुनेः सम्मतत्वात् ॥

**मू * सामान्यं विभजते * परमिति * नित्यत्वे सति अनेकसमवेतत्वं सामान्यलक्षणं । परमधिकदेशवृत्ति । अपरं न्यूनदेशवृत्ति । सामान्यादिचतुष्टये जातिर्नास्ति ॥**

व्या * परमिति * सत्तायाः द्रव्यत्वपृथिवीत्वघटत्वाद्यपेक्षया-ऽधिकदेशवृत्तित्वेन परत्वमेव । घटत्वादीनां सत्ताद्रव्यत्वपृथिवी-त्वापेक्षया न्यूनदेशवृत्तित्वेनापरत्वमेव । द्रव्यत्वपृथिवीत्वादीनां सत्ताद्यपेक्षया न्यूनदेशवृत्तित्वेन अपरत्वम्, घटत्वाद्यपेक्षयाऽधिक-देशवृत्तित्वेन परत्वमपि । एवं गुणत्वकर्मत्वयोस्सत्ताऽपेक्षया अपर-त्वम्, रूपत्वोत्क्षेपणत्वाद्यपेक्षया तयोः परत्वमपि । एव रूपत्वादी-नां गुणत्वापेक्षया अपरत्वं, शुक्लत्वाद्यपेक्षया परत्वमपि * अधिक-देशवृत्तीति * स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभय-

* सामान्यलक्षणे, नन्वत्र एकपदं व्यर्थमिति चेन्न, इष्टापत्तेः, तस्य स्वरूप-कीर्तनमात्रपरत्वात् । नचैवमेकधर्मावच्छिन्नाधेयता एकैवेति नियमेन अनेक-निरूपितां गुणत्वावच्छिन्नवृत्तितामुपादाय जलीयपरमाणुरूपादौ अतिव्या-प्तिवारणाय अनेकनिरूपितवृत्तितायामुभयावृत्तिधर्मावच्छिन्नत्वव्यञ्जकस्यै-कपदस्य सार्थक्यमस्त्येवेति वाच्यं, उभयावृत्तित्वस्य स्ववृत्तित्वस्वान्य-वृत्तित्वोभयसम्बन्धेन व्यक्तिविशिष्टान्यत्वरूपस्यैव विवक्षणीयतया तत्र सम्बन्धघटकवृत्तितां पुनः प्रमेयत्वाद्यवच्छिन्नामुपादाय तादृशोभयावृत्ति-त्वविशिष्टधर्ममात्रस्यैवाप्रसिद्धया एकधर्मावच्छिन्नेत्यादिनियमस्यैवानभ्युपे-यतया तत्रैकपदस्य प्रयोजनाभावेन स्वरूपकीर्तनपरत्वमेव तस्य नियतमङ्गी-कार्यमिति सिद्धम् ॥

सम्बन्धेन तत्पदार्थविशिष्टत्वं तदपेक्षयाऽधिकदेशवृत्तित्वम्, जलाद्यन्तर्भावेण द्रव्यत्वसामानाधिकरण्यं गुणाद्यन्तर्भावेण द्रव्यत्वाभावसामानाधिकरण्यञ्च सत्तायां वर्तत इति द्रव्यत्वापेक्षया सत्तायाः परत्वमिति समन्वयः, एवमन्यत्रापि । स्वसामानाधिकरण्यमात्रोक्तौ द्रव्यत्वाद्यपेक्षया पृथिवीत्वादेः परत्वापत्तिः स्वाभावसामानाधिकरण्यमात्रोक्तौ द्रव्यत्वादीनां गुणत्वकर्मत्वाद्यपेक्षया परत्वापत्तिः। अतस्सम्बन्धद्वयोपादानम् * न्यूनदेशवृत्तीति * स्वसामानाधिकरण्यस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व (स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्व) रूपसम्बन्धद्वयेन तत्पदार्थविशिष्टत्व तदपेक्षया न्यूनदेशवृत्तित्वम्, जलाद्यन्तर्भावेण सत्तासामानाधिकरण्यं गुणाद्यन्तर्भावेण सत्ताऽधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वं च द्रव्यत्वे वर्तत इति सत्तापेक्षया द्रव्यत्वस्य अपरत्वमिति समन्वयः । एवमन्यत्रापि । स्वसामानाधिकरण्यमात्रोक्तौ द्रव्यत्वादीनां पृथिवीत्वाद्यपेक्षयाऽपरत्वापत्तिः । स्वसामानाधिकरण्यानिवेशे द्रव्यत्वादीनां गुणत्वाद्यपेक्षयाऽपरत्वापत्तिः, अतः सम्बन्धद्वयोपादानम् ॥

**मू * विशेषं विभजते * नित्येति * पृथिव्यादिचतुष्टयपरमाणवः आकाशादिपञ्चकञ्च नित्यद्रव्याणि ॥**

विशेषलक्षणे, घटादिद्व्यणुकपर्यन्तेष्ववयविषु स्वावयवसमवेतत्वहेतुना तत्तदितरभेदस्य साधयितुं शक्यत्वेन पार्थिवजलादिपरमाणुषु गन्धशीतस्पर्शादिभिः तदितरभेदस्य साधयितुं शक्यत्वेन एकैकपरमाणौ तत्तदितरभेदसाधकहेत्वन्तराभावेन तत्साधनाय विशेषाङ्गीकरणमावश्यकम्, तत्तद्विशेषेष्वपीतरभेदः तादात्म्यसम्बन्धेन तत्तद्विशेषरूपहेतुभिरेव साधनीयः । एतद्विचारः तर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे जातिसिद्धिविचारप्रस्तावे द्रष्टव्यः ॥

व्या * परमाणुषु इतरभेदसाधनाय विशेषाङ्गीकरणम्। एतत्प्रपञ्चः तर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे सम्यक् निरूपित इति नात्र निरूपितः। लक्षणन्तु विशेषाणां नित्यद्रव्यनिष्ठविशेष्यतानिरूपिता या एकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकीभूता प्रकारता तदाश्रयत्वं बोध्यम्, एकमात्रवृत्तिभेदानुमितिः अयं परमाणुः स्वेतरभिन्नः इत्यनुमितिः, तज्जनकः इतरभेदव्याप्यैतद्विशेषवानयं परमाणुरिति परामर्शः, तज्जनकतावच्छेदिका नित्यद्रव्यनिष्ठविशेष्यतानिरूपिता या प्रकारता एतद्विशेषत्वावच्छिन्ना प्रकारता, तदाश्रयत्व एतद्विशेषे वर्तत इति समन्वयः, एवं विशेषान्तरेऽपि। अय घटः इतरभिन्न इत्येकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकीभूतामेतद्रूपत्वावच्छिन्नप्रकारतामादाय तत्तद्घटादौ तदितरभेदानुमापके तत्तद्रूपादावतिव्याप्तिवारणाय प्रकारताया नित्यद्रव्यनिष्ठविशेष्यतानिरूपितत्व निवेशितम्। पार्थिवपरमाणुः जलभिन्न इत्यनुमितिजनकतावच्छेदिका गन्धत्वावच्छिन्नप्रकारतामादाय पार्थिवपरमाणौ जलादिभेदानुमापके गन्धेऽतिव्याप्तिवारणाय एकमात्रवृत्तित्वं भेदाविशेषणं दत्तम्। तन्निवेशे जलादिभेदस्य पृथिव्याद्यनेकवस्तुवृत्तितया नातिव्याप्तिः। तादृशानुमितिजनकत्वमात्रनिवेशे ज्ञायमानलिङ्गस्यानुमित्यकरणतावादिमतेऽसम्भवप्रसङ्ग इति तज्जनकतावच्छेदकप्रकारताश्रयत्वपर्यन्तानुसरणम्॥

**मू * समवायस्य भेदो नास्तीत्याह * समवायस्त्विति ***

व्या * समवायस्येति * अत्र षष्ठ्याः प्रतियोगितानिरूपकत्वमर्थः, अत्र समवाये इत्यध्याहार्यम्, एतदुत्तरवर्तिसप्तम्या अनुयोगितानि-

रूपकत्वमर्थः । नास्तिपदस्याप्रसिद्धार्थकत्वम्, तथाच समवायप्रतियोगिकसमवायानुयोगिकभेदोऽप्रसिद्ध इति बोधः, समवायान्तरस्याभावेन तादृशभेदोऽप्रसिद्ध इत्यर्थः । अतः यथाश्रुते समवायभेदस्य घटादिषु प्रसिद्धतया एतद्वाक्यार्थाप्रसिद्धिरिति शङ्का निरस्ता। ननु स्वज्ञानविषयप्रकृतहेतुतावच्छेदकधर्मवत्तासम्बन्धस्य ह्रदोवह्निमान्धूमादित्यादौ धूमत्वादिरूपतया तत्र नित्यत्वसम्बन्धत्वयोस्सत्त्वादतिव्याप्तिरिति चेन्न, परम्परासम्बन्धानात्मकत्वस्यापि निवेशनीयत्वात् । नच स्वरूपसम्बन्धस्य प्रतियोग्यनुयोग्यन्यतररूपतया घटत्वमनित्यत्वाभाववदित्यत्र घटत्वानित्यत्वाभावान्यतरात्मके स्वरूपसम्बन्धे पूर्वोक्तदलत्रयस्य सत्त्वादतिव्याप्तिरिति वाच्यम्, प्रतियोग्यनुयोग्यन्यतरानात्मकत्वस्यापि निवेशनीयत्वात् । अतएव कालिकसम्बन्धस्य कालादिस्वरूपतया तत्रातिव्याप्तिरिति शङ्कानिरस्ता । तथाच नित्यत्वेसति परम्परासम्बन्धप्रतियोग्यनुयोग्यन्यतमानात्मकत्वेसति सम्बन्धत्वं समवायस्यलक्षण फलितम् । इद लक्षणं विभुद्वयसंयोगानङ्गीकर्तृमताभिप्रायेण, अन्यथा, सत्संयोगस्य नित्यत्वेन तत्रातिव्याप्त्यापत्तेः । ननु समवायस्याभेदे रूपस्पर्शसमवाययोरैक्येन स्पर्शसमवायवति वायौ रूपसमवायस्याप्यबाधिततया वायौ रूपवत्ताप्रतीतिप्रसङ्ग इति चेन्न, सम्बन्धसम्बन्ध्युभयसत्तायाः तेन सम्बन्धेन सम्बन्धिमत्ताप्रतीतिनियामकत्वाङ्गीकारेण वायौ तत्समवायस्य सत्त्वेऽपि रूपस्याभावेन वायौ न तेन सम्बन्धेन रूपवत्ताप्रतीतिप्रसङ्ग इति ॥

**मू ॥ अभावं विभजते ॥ प्रागभाव इति ॥**

व्या * अभावत्वंच भावभिन्नत्वम्, भावत्वंच समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धेन सत्ताविशिष्टत्वं बोध्यम्, द्रव्यगुण-

कर्मसु समवायेन सत्ताविशिष्टत्वं सामान्यादित्रिके स्वसमवायिसम-वेतत्वसम्बन्धेन च सत्ताविशिष्टत्वं वर्तते इति षट्सु भावेषु लक्षण-सङ्गतिः, स्व सत्ता, तत्समवायि द्रव्यं, तत्समवेतत्वं सामान्ये विशेषे समवाये च वर्तते इति। नच समवायस्य स्वरूपसम्बन्धेनैव वर्तमा-नतया कथं समवेतत्वं सम्भवतीति वाच्यम्, स्वरूपसम्बन्धस्य विनिगमनाविरहेण लाघवेन च प्रतियोगिस्वरूपत्वस्याप्यङ्गीकृततया प्रतियोगिसमवायरूपत्वसिद्धौ बाधकाभावेन स्वसमवायिसमवेतत्वस्य तत्राक्षतत्वात्। अत्र समवायमात्रस्य सम्बन्धत्वे सामान्यादिकेऽव्याप्तिः, तस्य ससर्गत्वानुपादाने नित्यद्रव्येषु चाव्याप्तिः, अतः सम्बन्ध-द्वयोपादानम्। प्रागभावादीना लक्षणानि ग्रन्थकृतैवोक्तानीति न मया निरूप्यन्ते ॥

**मू ॥ तत्रोद्देशक्रमानुसारात्प्रथमं पृथिव्या लक्षणमाह ॥ तत्रेति ॥ नाम्ना पदार्थसंकीर्तनमुद्देशः। उद्देशक्रमे च सर्वत्रेच्छैव नियामिका ॥**

व्या ॥ पृथिवीलक्षणस्य प्राथम्ये बीजमाह ॥ तत्रेति ॥ नाम्नेति ॥ धान्येन धनवानित्यत्रेवात्र तृतीयार्थोऽभेदः, पदार्थनां सङ्कीर्तनं पदार्थसङ्कीर्तनं, षष्ठ्याः प्रतिपादकत्वमर्थः, सङ्कीर्तनं प्रतिपादकशब्दः, तथाच यथाश्रुतवाक्यात् नामाभिन्नवस्तुप्रति-पादकशब्द उद्देश इति लभ्यते, नामाभेदनिवेशने प्रयोजनाभावेन विशेषणविशेष्यभाववैपरीत्ये कृते वस्तुप्रतिपादकनाममात्रमुद्देश इति लक्षण फलितम्, अत्र घटपदेऽतिव्याप्तिवारणाय वस्तुपद लक्षणीय-वस्तुपरं कर्तव्यम् (लक्षणीयवस्तु पृथिव्याद्येव, न घटादिकमिति नातिप्रसङ्गः) प्रमेयत्वादिसामान्यरूपेण लक्षणीयस्य पृथिव्यादेः

प्रतिपादके प्रमेयपदेऽतिव्याप्तिवारणाय नामपदं लक्ष्यतावच्छेदकावच्छिन्नबोधकमिति वक्तव्यम्। गन्धवती पृथिवीत्यादिलक्षणवाक्येपि लक्ष्यतावच्छेदकपृथिवीत्वादिरूपेण लक्षणीयपृथिव्यादिप्रतिपादकत्वस्य सत्त्वादतिव्याप्तिरतो मात्रपदम्, तथा च मात्रपदेनेतरव्यवच्छेदलाभेनात्र वाक्ये लक्षणप्रतिपादकत्वस्यापि सत्त्वान्नातिव्याप्तिः। तथा च लक्ष्यतावच्छेदकातिरिक्तधर्मावच्छिन्नविषयताशालिबोधाजनकत्वे सति लक्ष्यतावच्छेदकावच्छिन्नविषयक (लक्ष्यतावच्छेदकनिष्ठप्रकारतानिरूपितलक्ष्यनिष्ठविशेष्यताशालि) बोधजनकशब्दत्वं उद्देशस्य लक्षणं फलितम्। विभागवाक्यघटकपृथिव्यादिपदेषु समन्वयो बोध्यः॥

मू० * ननु सुरभ्यसुरभ्यवयवारब्धद्रव्ये परस्परविरोधेन गन्धानुत्पादादव्याप्तिः, न च तत्र गन्धप्रतीत्यनुपपत्तिरिति वाच्यम्, अवयवगन्धस्यैव तत्र प्रतीतिसम्भवेन चित्रगन्धानङ्गीकारात्। किञ्च उत्पन्नविनष्टघटादावव्याप्तिरिति चेन्न, गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वस्य विवक्षितत्वात्। ननु जलादावपि गन्धप्रतीतेरतिव्याप्तिरिति चेन्न, अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्र भानाङ्गीकारात्। ननु

---

ननूत्पन्नविनष्टघटेऽव्याप्तिवारणाय गन्धाधिकरणतावच्छेदकजातिमत्त्वं लक्षणमुच्यत इति चेन्न, अधिकरणत्वान्यूनानतिप्रसक्तधर्मस्यैवाधिकरणतावच्छेदकत्वाङ्गीकारेण पृथिवीत्वस्य गन्धाधिकरणत्वाभाववदुत्पन्नविनष्टघटादिवृत्तितया तदधिकरणत्वातिप्रसक्तत्वेन तादृशपरिष्कारस्य अकर्तव्यत्वात्। किन्तु गन्धाधिकरणवृत्तिजातिमत्त्वस्यैव लक्षणत्वस्योचितत्वात्॥

**कालस्य सर्वाधारतया सर्वेषां लक्षणानां कालेऽतिव्याप्तिरिति चेन्न, सर्वाधारताप्रयोजकभिन्नसम्बन्धेन लक्षणसत्त्वस्य विवक्षितत्वात् । पृथिवीं विभजते * सा द्विविधेति * नित्यत्वं ध्वंसाप्रतियोगित्वं, अनित्यत्वं ध्वंसप्रतियोगित्वम् ॥**

पृथिवीलक्षणे ॥ ननु गन्धत्वव्याप्यत्व ( गन्धत्वाभाववदवृत्तित्व ) निवेशेनैव गुणत्वावच्छिन्नाधेयतां गन्धरूपान्यतरत्वावच्छिन्नाधेयतां वा आदाय जलादौ प्रसक्तस्य दोषस्य वारणसम्भवादाधेयताया गन्धत्वावच्छिन्नत्वनिवेशो विफल इति चेन्न, गन्धत्वव्याप्यत्वस्याधेयताया निवेशपक्षे तत्र गन्धत्वावच्छिन्नत्वस्य प्रयोजनाभावेऽपि न क्षतिः ॥ गन्धत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वमेव पृथिवीलक्षणं वक्तव्यम्, नतु तादृशाधिकरणताश्रयत्वम्, अन्यथा समवायसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणताया कालिकसम्बन्धेनाश्रयत्वमादाय जलादावतिव्याप्तिः । तादृशाधिकरणताश्रयत्वमित्यत्र स्वरूपसम्बन्धावच्छिन्नतादृशाधिकरणत्वनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वमिति परिष्कारे ( त्वनवस्थाप्रसङ्गः ) तु पुनः पुनर्निरुक्तरीत्या दोषप्रसङ्गो दुर्वारः, अतो गन्धाधिकरणत्वमेव पृथिवीलक्षणं वक्तव्यम् ॥

ननु पृथिव्याः गन्धवत्त्वं लक्षणमुच्यते, तदसंगतम्, गन्धवतीपदोत्तरं भावार्थकत्वप्रत्ययसंयोजने गन्धवतीत्वमित्यस्यैव साधुत्वादिति चेन्न 'त्वतलोर्गुणवचनस्येति स्त्रियाः पुंवद्भावः' इति सूत्रेण स्त्रीलिङ्गशब्दस्यापि त्वप्रत्ययस्य तल्प्रत्ययस्य वा परस्य सतः पुंवद्भावस्य शास्त्रसिद्धतया अनुपपत्तेरभावात् ॥

**समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयवृत्तिद्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकजातिमत्त्वं पृथिव्या लक्षणतया तर्कसङ्ग्रहव्याख्यानावसरे मया परिष्कृतम् । अत्र समवायसम्बन्धावच्छिन्नत्वं समवायत्वावच्छिन्नसंसर्गताभिन्नसंसर्गत्वानिरूपकस्वरूपं (समवायसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वरूपं)ग्राह्यम्,अन्यथा,**

व्या * तर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे पृथिव्यादितत्तल्लक्षणेषु वा अनुक्तमेव शाब्दबोधलक्षणतत्समन्वयपरिष्कारादिविषयजातं दीपिकासर्वस्वेऽत्र निरूप्यते, पुनः तत्तत्स्थलेषु तत्तन्निरूपणे ग्रन्थगौरवात् प्रयोजनाभावाच्च तत्रानुक्तमेवात्र निरूप्यते, तदेतदवधारयन्तु व्युत्पित्सव । तमेतं विषयं पुनःपुनः सम्मरन्त्विति कामये ॥

समवायकालिकान्यतरसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नाधेयतामादाय काले5तिव्याप्त्यापत्तेः, तन्निवेशे तु निरुक्ताधेयतायाः समवायत्वावच्छिन्नसंसर्गताभिन्नकालिकत्वावच्छिन्नसंसर्गताकतया न तादृशीमाधेयतामादायातिप्रसङ्गः। नचैवमपि तादृशसंसर्गत्वानिरूपकत्वस्य तादृशसंसर्गतानिरूपकत्वनिष्ठप्रतियोगिताकाभावरूपत्वे तादृशनिरूपकत्वघटत्वोभयाभावमादाय तादृशोभयाभाववता पूर्वपरिगृहीता आधेयतामादायैव कालादावतिव्याप्ति, तस्य तादृशसंसर्गतानिरूपकत्वसामान्याभावरूपत्वे तादृशसामान्याभावस्य तादृशसंसर्गतानिरूपकत्वत्वातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावरूपत्वेन परिष्करणीयतया तत्रापि तादृशधर्मानवच्छिन्नत्वस्यापि तादृशधर्मावच्छिन्नत्वनिष्ठप्रतियोगिताकाभावतादृशधर्मावच्छिन्नत्वसामान्याभावयोर्विकल्पस्यावश्यकर्तव्यतया प्रथमकल्पे निरुक्तातिव्याप्तेः । द्वितीयकल्पे पुन सामान्याभावपरिष्कारे निरुक्तातिव्याप्तिप्रसङ्गेन पर्यवसाने अनवस्थाप्रसङ्गो दुर्वार इति वाच्यम्, स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन समवायत्वगतैकत्ववृत्तित्वरूपमेव समवायत्वावच्छिन्नसंसर्गताभिन्नसंसर्गत्वानिरूपकत्वं गन्धत्वावच्छिन्नाधेयताया विशेषणं देयम् ( स्वपदमत्राधेयतापरम् ) (अयमितरवारकपर्याप्तिनिवेशप्रकारः) इत्थंच स्वपदेन तादृशान्यतरसम्बन्धावच्छिन्नाधेयताया परिग्रहेण तन्निरूपितसंसर्गतावच्छेदकतायाः पर्याप्तसम्बन्धेन कालिकत्वसमवायत्वगतोभयत्वाद्यवच्छेदेन कालिकत्वसमवायत्वयोः विद्यमानतया निरुक्तसम्बन्धेन समवायत्वगतैकत्ववृत्तिः

* परस्परविरोधेनेति * अत्रायभावः, समवायसम्बन्धेन जायमानावयविगन्धं प्रति स्वसमवायिसमवेतत्वसम्बन्धेनावयवगन्धस्य कारणत्वं वर्तते, प्रकृते सुरभ्यसुरभ्यवयवारब्धद्रव्ये न कश्चिदपि गन्धो वर्तते, कुतः, तस्मिन् द्रव्ये समवायसम्बन्धेन जायमानसुरभिगन्धं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन असुरभ्यवयवगतस्यासुरभिगन्धस्य प्रतिबन्धकत्वं वर्तते, तत्र समवायेन जायमानासुरभिगन्धं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन सुरभ्यवयवगतस्य सुरभिगन्धस्य च तत्र विद्यमानतया प्रतिबन्धकत्वेन न सुरभ्यसुरभिगन्धयोरेकस्यापि तत्र सम्भव इत्यव्याप्तिस्सुदृढैवेति * नच तत्रेति * अत्र भावः, नानावयवरूपैः चित्ररूपमिव नानावयवगन्धैः चित्रगन्धोऽत्रापि द्रव्येऽप्रतिबध्यः स्वीक्रियते, अतस्तत्र समवायेन गन्धप्रतीतेरनुपपत्तिर्नास्ति, अतो न तत्राव्याप्तिरिति *

---

या आधेयतेत्युक्तौ न तादृशान्यतरसम्बन्धावच्छिन्नाधेयता भवात, तस्यास्तेन सम्बन्धेनोभयत्रवृत्तित्वात्, किन्तु समवायसम्बन्धमात्रावच्छिन्नाधेयतैव ग्राह्या, तस्या एव गन्धत्वगतैकत्ववृत्तित्वात्, तन्निरूपिताधिकरणताश्रयत्वस्य कालादावभावान्नातिव्याप्तिः । एवं गन्धत्वावच्छिन्नत्वमपि यथाश्रुते गन्धत्वातिरिक्तधर्मानवच्छिन्नत्वरूपं वक्तव्यम्, अन्यथा, गन्धगुणान्यतरत्वावच्छिन्नाधेयतामादाय जलादावतिव्याप्तेः । अत्र यथाश्रुतगन्धत्वातिरिक्तधर्मानवच्छिन्नत्वनिवेशे पूर्वोक्तविधया बाधकसद्भावेन स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन गन्धत्वगतैकत्ववृत्तित्वरूपमेव तत् गन्धनिष्ठाधेयतायां निवेशनीयम्, तथाच नान्यतरत्वावच्छिन्नाधेयतामादायातिव्याप्तिः । गन्धत्वावच्छिन्नाधेयतामादाय लक्षणसमन्वयश्च भवति, एवमेव जलादिलक्षणेष्वपीतरवारकपर्याप्तिनिवेशप्रकारोऽन्यश्च विषयविचारो ग्राह्यः । तर्कसङ्ग्रहव्याख्यानावसरे टिप्पण्या कोऽपि विषयो निर्दिष्टः तत्र द्रष्टव्यः ॥

अवयवगन्धस्यैवेति * अत्राय भाव : अत्र द्रव्ये समवायेन गन्ध-प्रतीतिर्नास्त्येव. किन्तु स्वसमवायिसमवेतत्वसम्बन्धेन अवयवगन्ध एव प्रतीयते. द्रव्यप्रत्यक्ष प्रति समवायेन रूपस्य कारणतया नानावयवारब्धद्रव्ये चित्ररूपानङ्गीकारे द्रव्यप्रत्यक्षानुपपत्तेरिव चित्रगन्धानङ्गीकारे कस्या अप्यनुपपत्तेरभावेन चित्ररूपस्येव चित्रगन्धस्याङ्गीकारे आवश्यकत्वाभावेन तस्मिन द्रव्ये समवायेन गन्धवत्त्वलक्षणस्याव्याप्तिर्दुर्वारैवेति । तुष्यतु दुर्जन इति न्यायेनाभ्युपेत्याह * किञ्चेति * (कथञ्चित्तत्र चित्रगन्धाङ्गीकारेणाव्याप्तिपरिहारेऽपि उत्पन्नविनष्टघटेऽव्याप्तिर्दुर्वारेत्याशय:)

* अन्वयव्यतिरेकाभ्यामिति * सुरभिजलादौ स्वाश्रयसंयुक्तत्वसम्बन्धेन गन्धो भासते. ननु समवायेन तत्र प्रतीतौ गन्धस्य भानमतो न समवायेन गन्धवत्त्वलक्षणस्य तत्रातिप्रसङ्ग इति भाव: । गन्धवत्त्वादिलक्षणेषु अनुगतरूपेण सर्वाधारताप्रयोजकभिन्नसम्बन्धत्वेन लक्षणताघटकसम्बन्ध निवेश्य दोषान् वारयति * सर्वाधारेताति * वस्तुतस्तु, लक्षणताघटकसम्बन्धस्य समवायत्वेनैव निवेशो युक्त:. अन्यथा. सर्वाधारताप्रयोजकभिन्नस्वाश्रयसयुक्तत्वादिसम्बन्धेन गन्धाद्यधिकरणतामादाय जलादावतिप्रसङ्गसम्भवात् । तथाच समवायसम्बन्धेन गन्धाधिकरणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्व पृथिवीलक्षण बोध्यम् । एतत्प्रपञ्च सर्वायतर्कसङ्ग्रहसर्वस्वे द्रष्टव्य: * ध्वंसाप्रतियोगित्वमिति * इद नित्यत्व ध्वससाधारण. तदसाधारण गगनादिनित्यसाधारण । नित्यत्व तु ध्वसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वमिति * ध्वंसप्रतियोगित्वमिति * इदमनित्यत्वं प्रागभावसाधारणम्,

तदसाधारणं घटादिसाधारणमनित्यत्वं तु प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वमिति ॥

प्रकारान्तरेणेति * (अत्र पृथिवीमित्यनुषज्यते) प्रकारान्तरेणेति पदस्वारस्येन मूलगतपुनःपदस्वारस्येन च पृथिवीसामान्यस्यैवायं विभागः नानित्यपृथिव्या इत्यवगन्तव्यम् ॥

**मू * आत्मनो भोगायतनं शरीरम् । यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनम् । सुखदुःखसाक्षात्कारो भोगः ॥**

व्या * आत्मनो भोगायतनमिति * षष्ठ्या आधेयत्वम्, आयतनमवच्छेदकम्, तथाचात्मनिष्ठभोगावच्छेदकत्वं शरीरस्य लक्षणमिति फलितम् । एतदेव विवृणोति * यदवच्छिन्नात्मनीति * अत्र अन्त्यावयवित्वविशेषणं देयं, अन्यथा करपादादावपि सुखदुःखसाक्षात्कारावच्छेदकत्वस्य सत्त्वादतिव्याप्तेः, तन्निवेशे तु करादिष्ववयवेषु शरीरूपावयव्यन्तरारम्भकत्वस्य सत्त्वेन अवयव्यन्तरानारम्भकत्वरूपान्त्यावयवित्वाभावान्नातिव्याप्तिः॥ शरीरत्वेन्द्रियत्वादीनां जातित्वसिद्ध्यभावप्रकारः मदीयतर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे जातिसिद्धिविचारे सम्यक् निरूपितस्तत्र द्रष्टव्यः । तेषां जातित्वाभावेनैव शरीरत्वेन्द्रियत्वादिकं प्रकारान्तरेण परिष्कृतम् ॥

**मू * शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनस्संयोगाश्रयत्वमिन्द्रियत्वम् । शरीरेन्द्रियभिन्नो विषयः । एवं च गन्धवच्छरीरं पार्थिवशरीरं, गन्धवदिन्द्रियं पार्थिवे-**

**न्द्रियम् । गन्धवान्विषयः पार्थिवविषयः इति तत्तल्लक्षणं बोध्यम् । पार्थिवशरीरं दर्शयति * शरीरमिति * पार्थिवेन्द्रियं दर्शयति * इन्द्रियमिति * गन्धग्राहकमिति .प्रयोजनम् । घ्राणमिति संज्ञा । नामाग्रेत्याश्रयोक्तिः । एवमुत्तरत्र ज्ञेयम् । पार्थिवविषयं दर्शयति * मृत्पाषाणादिरिति ***

व्या * इन्द्रियत्व परिष्करोति * शब्देतरेति * शब्देतरे ये उद्भूतविशेषगुणाः घटादिगता रूपादय., तदनाश्रयत्व चक्षुरादीन्द्रियेषु वर्तते (चक्षुरादिषु उद्भूतविशेषगुणा न सन्ति, किन्तु अनुद्भूतविशेषगुणा एव तत्र सन्ति) "आत्मा मनसा सयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षमुत्पद्यते" इति, न्यायानुसारेण आत्ममनस्संयोगस्य इन्द्रियमनस्संयोगस्य विषयेन्द्रियसंयोगस्य च ज्ञानकारणत्वावगमेन ज्ञानकारणेन्द्रियमनस्संयोगाश्रयत्वमपीन्द्रियेषु वर्तते, संयोगस्य द्विनिष्ठत्वात् , इति लक्षणसमन्वय । ज्ञानकारणमनस्संयोगाश्रयत्वमात्रोक्तौ ज्ञानकारणात्ममनस्संयोगमादायात्मन्यतिव्याप्तिः । शब्देतरेत्यादिनिवेशे तु शब्देतरोद्भूतविशेषगुणस्य ज्ञानसुखादे. आश्रयत्वस्यैवात्मनि सत्त्वेन नातिव्याप्तिः । शब्देतरोद्भूतविशेषगुणानाश्रयत्वमात्रोक्तौ कालादौ विशेषगुणस्य कस्याप्यभावेन तत्रातिव्याप्ति । ज्ञानकारणेत्यादिनिवेशे तु कालमनस्संयोगस्य ज्ञानकारणत्वाभावान्नातिव्याप्तिः । शब्देतरपदाभावे श्रोत्रेन्द्रिये (गगनरूपे) शब्दात्मकोद्भूतविशेषगुणाश्रयत्वस्यैव सत्त्वादव्याप्तिः । शब्देतरपदोपादाने तु शब्देतरोद्भूतविशेषगुणस्य कस्याप्यभावान्नाव्याप्तिः ॥

उद्भूतपदाभावे इन्द्रियेषु अनुद्भूतरूपादिविशेषगुणाश्रयत्वस्यैव सत्त्वादव्याप्तिः। तन्निवेशे तु उद्भूताविशेषगुणानां तत्राभावेन नाव्याप्तिः। अत्रोद्भूतत्व न जातिः शुक्लत्वादिना साङ्कर्यात्, तथा हि शुक्लत्वाभाववति उद्भूतनीले उद्भूतत्वम्, उद्भूतत्वाभाववत्यनुद्भूतशुक्ले शुक्लत्वम्, उभयोस्समावेशः उद्भूतशुक्ले वर्तते इति साङ्कर्यम्। शुक्लत्वादिव्याप्योद्भूतत्वादेरपि न जातित्वम्, तथात्वे चाक्षुषत्वावच्छिन्नं प्रति तत्तदुद्भूतत्वाद्यवच्छिन्नस्य प्रत्येकस्य कारणतास्वीकारे व्यतिरेकव्यभिचारप्रसङ्गः, तत्तदुद्भूतत्वाद्यवच्छिन्नसमुदायस्य कारणतास्वीकारः सुतरां नोपपद्यते, तादृशकारणस्य

इन्द्रियलक्षणे, स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्यस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वत्रितयसम्बन्धेन जातिविशिष्टत्वं साङ्कर्यम् पृथिवीत्वादिना इन्द्रियत्वादीनां साङ्कर्यं वर्तते, यथा पार्थिवेन्द्रियान्तर्भावेण पृथिवीत्वसामानाधिकरण्यं जलीयेन्द्रियान्तर्भावेण पृथिवीत्वाभावसामानाधिकरण्यं घटाद्यन्तर्भावेण पृथिवीत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वं च इन्द्रियत्वेऽस्तीति पृथिवीत्वेनेन्द्रियत्वस्य साङ्कर्यं वर्तते, एवं शरीरत्वादीनामपि (तृतीयसम्बन्धस्थाने स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसम्बन्धोऽपि प्रवेशयितुं शक्यते) स्वसामानाधिकरण्यस्य सम्बन्धत्वाभावे पृथिवीत्वादिना जलत्वादीनामपि साङ्कर्यप्रसङ्ग इति प्रथमसम्बन्धनिवेशः। स्वाभावसामानाधिकरण्यस्य सम्बन्धत्वाभावे द्रव्यत्वादिना पृथिवीत्वादीनामपि साङ्कर्यप्रसङ्ग इति द्वितीयसम्बन्धनिवेशः। स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य सम्बन्धत्वाभावे पृथिवीत्वादिना द्रव्यत्वादीनां साङ्कर्यप्रसङ्ग इति तृतीयसम्बन्धनिवेशः। परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्रसमावेशः यथाश्रुते साङ्कर्यं बोध्यम्, साङ्कर्यविचारस्तु बहुधा मदीयतर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे जातिसिद्धिविचारे प्रपञ्चितस्तत्र द्रष्टव्यः॥

कुत्राप्यसंभवात् (व्यतिरेकव्यभिचारप्रसङ्गात्) अतश्शुक्लत्वादि-व्याप्यानुद्भूतत्वादिक जातिविशेष:. तदभावकूटवत्त्वमेवोद्भूतत्वं वाच्यम्. तथाच न निरुक्तव्यभिचारप्रसक्ति:. तादृशोद्भूतत्वं संयोगादावप्यस्तीति तादृशमिन्द्रियमनस्संयोगमादायासम्भव:. 'तद्वारणाय विशेषेति। तन्निवेशे संयोगस्य विशेषगुणत्वाभावान्नासम्भव:। ज्ञानकारणत्वानुपादाने कालमनस्संयोगमादाय कालेऽतिव्याप्ति. तत्र विशेषणदलस्यापि सत्त्वात्। तन्निवेशेतु कालमनस्संयोगस्य ज्ञानकारणत्वाभावान्नातिव्याप्ति:॥

प्राचीनमते इन्द्रियावयवविषयावयवसंयोगस्य प्रत्यक्षज्ञानकारणतयाङ्गीकृतत्वेन ज्ञानकारणतादृशसंयोगाश्रयत्वस्य विशेषणदलस्य च इन्द्रियावयवे सत्त्वादतिव्याप्तिवारणाय मन:पदम्। नवीनमते कालादौ रूपाभावप्रत्यक्षस्याङ्गीकृततया तत्प्रत्यक्षं प्रतीन्द्रियसयुक्त-(विशेष्यता) विशेषणताख्यसन्निकर्षस्य कारणतया तद्घटककालमनस्संयोगस्यापि कारणतावच्छेदककुक्षिप्रविष्टतया तत्प्रत्यक्षं प्रति कारणत्वस्याङ्गीकर्तव्यतया तादृशप्रत्यक्षात्मकज्ञानकारण कालमनस्संयोगमादाय विशेषणदलस्यापि सत्त्वेन कालेऽतिव्याप्तिवारणाय मन.पदम्। नचात्मान्यत्वविशेषणेनैव आत्मन्यतिव्याप्तिवारणसम्भवे शब्देतरेत्यादिगुरुतरदलस्य वैफल्यमिति वाच्यम्, चर्ममनस्संयोगस्य ज्ञानकारणतावादिमते ज्ञानकारणीभूतचर्ममनस्संयोगमादाय आत्मान्यत्वस्यापि सत्त्वाच्चर्मण्यतिव्याप्तिवारणाय तद्दलसार्थक्यात्। विषयलक्षणमाह * शरीरेन्द्रियेति * शरीरभिन्नत्वे सतीन्द्रियभिन्नत्वं विषयस्य लक्षणं, नच सामान्यादावपि शरीरेन्द्रियभिन्नत्वस्य सत्त्वादतिव्याप्तिरिति वाच्यम्, पृथिवीत्व-

स्यापि विवक्षणीयत्वात * एवञ्चेति, तत्तदर्थस्य शरीरादिसामान्यलक्षणत्वेनेत्यर्थः । पार्थिवशरीरेन्द्रियविषयाणां क्रमेण लक्षणान्याह * गन्धवच्छरीरमिति * सर्वत्र दोषवारणसम्भवाद्गन्धग्राहकत्वदलं तत्र विफलमिति शङ्का गन्धवत्त्वनिवेशनेनैव परिजिहीर्षुस्तत्प्रयोजनकथनपुरस्सरं तन्मूलं व्याचष्टे * गन्धग्राहकमिति * उत्तरत्र रसनादिलक्षणेष्वित्यर्थः ॥

**मू * अपां लक्षणमाह * शीतेति * उत्पन्नविनष्टजलेऽव्याप्तिवारणाय शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वं विवक्षितम् । शीतं शिलातलमित्यादौ जलसम्बन्धादेव शीतस्पर्शभानमिति नातिव्याप्तिः । अन्यत्सर्वं पूर्वरीत्या व्याख्येयम् ॥**

व्या * समवायसम्बन्धावच्छिन्नशीतस्पर्शत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिद्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकजातिमत्त्वं अपां लक्षणम् । दलप्रयोजनादिकं मदीयतर्कसङ्ग्रहसर्वस्व एतद्व्याख्यानावसरे निरूपितमेव * शीतं शिलातलमिति * अत्र प्रतीतौ स्वाश्रयसंयुक्तत्वसम्बन्धेनैव शीतस्पर्शः शिलातले भास्ते, नतु समवायेनातो नातिव्याप्तिरिति भावः * अन्यत्सर्वमिति * नित्यत्वादिकं जलीयशरीरादिलक्षणं च । पूर्ववत् गन्धवत्त्वस्थाने शीतस्पर्शवत्त्वं निवेश्य पृथिवीलक्षणोक्तरीत्येत्यर्थः ॥

**मू * तेजसो लक्षणमाह * उष्णस्पर्शवदिति * उष्णं जलमिति प्रतीतेस्तेजस्संयोगानुविधायित्वान्नातिव्याप्तिः। विषयं विभजते * भौमेति ***

व्या * द्रव्यत्वगुणत्वकर्मत्वादिव्यापकजातीनां पृथिवीत्वादिरूपत्वाद्युत्क्षेपणत्वादिव्याप्यजातीनां सर्वासां च सिद्धिः तर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे जातिसिद्धिविचारप्रस्तावे निरूपितेति नात्र निरूप्यते। तैजसो लक्षणं पृथिवीलक्षणवद्बोध्यम् (परन्तु गन्धपदस्थाने उष्णस्पर्शपद निवेशनीयम्)। भौममिति * भूमौ भव भौमम्, वह्न्यादीत्यादिपदेन मण्यादिपार्थिवतेजसां परिग्रहः * अबिन्धनमिति * अद्भिः इन्धन दीपन यस्य तत् आपः इन्धनान्युद्दीपकानि यस्य तदिति वा विग्रहः, विद्युदादीत्यादिपदेन (नक्षत्रसूर्यचन्द्रतेजसां) उल्काया बडवानलस्य च सङ्ग्रहः * भुक्तस्येति * भुक्तस्य ओदनादेः, परिपाकहेतुः परिणामहेतुः रक्तमांसादिरूपेण निष्पत्तौ निमित्तकारणम् * औदर्यमिति * उदरे भवं औदरं, औदरमेवौदर्यम्, जाठररूपमिति यावत् * आकरजमिति * आकरजं खनिजम्। सुवर्णादीत्यादिपदेन रजतताम्रादितेजःप्रधानवस्तूनां परिग्रहः॥

**मू * ननु सुवर्णं पार्थिवं पीतत्वात् गुरुत्वाच्च हरिद्रावत् इति चेन्न, अत्यन्तानलसंयोगे सति घृतादौ द्रवत्वनाशदर्शनेन जलमध्यस्थघृतादौ तन्नाशादर्शनेन च असति प्रतिबन्धके पार्थिवद्रवत्वनाशाग्निसंयोगयोः कार्यकारणभावावधारणात्, सुवर्णस्यात्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वानुपपत्तेः। पीतद्रव्यद्रवत्वनाशकतया द्रवद्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः। रूपवत्तया वाय्वादिष्वन्तर्भावात्तेजस्त्वसिद्धिः। तस्योष्णस्प-**

**र्शभास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिः । तस्मात्सुवर्णं तैजसमिति सिद्धम् ॥**

व्या॰ * सुवर्णस्य पार्थिवत्वं निराकुर्वन् तैजसत्वं व्यवस्थापयति * नन्विति * सुवर्णे पार्थिवत्वसाधकं पीतत्वहेतुमुक्त्वा तत्र तेजोभिन्नत्व (तेजस्त्वाभाव) साधकं हेत्वन्तरमाह * गुरुत्वादिति * सुवर्णं पार्थिवं पीतत्वात् हरिद्रावत्, सुवर्णं तेजोभिन्नं (तेजस्त्वाभाववत्) गुरुत्वादित्यनुमानप्रयोगो ग्राह्यः । नन्वत्र गुरुत्वहेतोः पार्थिवत्वाभाववज्जलादिवृत्तितया सुवर्णे पार्थिवत्वतेजस्त्वाभावरूपपदार्थद्वयसाधकत्वासम्भवेऽपि पीतत्वहेतोरेकस्यैव तदुभयसाधकत्वाङ्गीकारे बाधकाभावेन तेजस्त्वाभावसाधनाय गुरुत्वरूपहेत्वन्तरकथनमसङ्गतमिति चेन्न, अत्र सुवर्णत्वस्य पक्षतावच्छेदकत्वे रजतादेः पक्षतावच्छेदकानाक्रान्ततया तत्र पार्थिवत्वासिद्धिप्रसङ्गेन रजतादिसाधारणहिरण्यत्वादेः पक्षतावच्छेदकत्वस्वीकारे पक्षतावच्छेदकाश्रये रजतादौ पीतत्वाभावेन भागासिद्धिप्रसङ्गेन च पीतत्वहेतोस्तदुभयसाधकत्वं न सम्भवतीति पूर्वोक्तरीत्या पृथगेव तद्धेतुद्वयस्य प्रयोजनस्य वक्तव्यत्वात् ॥

केचित्तु, अत्र गुरुत्वस्य हेत्वन्तरतासूचकत्वाकाराद्यभावेन केवलगुरुत्वस्य जलाद्यन्तर्भावेण व्यभिचारितयाच समवायसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन पीतत्वविशिष्टगुरुत्वस्य हेतुत्वमङ्गीक्रियत इति वदन्ति, तदसङ्गतम्, व्यर्थपदार्थघटितस्य हेतुतावच्छेदकत्वासम्भवेन केवलपीतत्वस्यैव निर्दुष्टहेतुत्वसम्भवे व्यर्थगुरुत्वघटितस्य हेतुत्वस्यानङ्गीकार्यत्वात्, पूर्वोक्तभागासिद्धिदोषप्रसङ्गाच्च ॥

प्रीतत्वेहेतोस्सत्प्रतिपक्षत्वस्थिरीकरणाय कार्यकारणभावभङ्गप्रसङ्गा-नुकूलतर्कनिरूपणपुरस्सर सुवर्णे पार्थिवत्वाभावसाधक हेत्वन्तर-मुपन्यस्यति * अत्यन्तानलेत्यादिना * अनुमानप्रयोगस्तु; सुवर्ण अपार्थिव असतिप्रतिबन्धकेऽत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्र-वत्वाधिकरणत्वात् (प्रतिबन्धकाभावविशिष्टात्यन्तानलसंयोगसमान-कालीननाशाप्रतियोगिद्रवत्वाधिकरणत्वात्) यन्नैव तन्नैव यथा घट-इति। अपार्थिवत्वाभाववति अग्निसंयोगासमानाधिकरणद्रवत्वविशि-ष्टघृतादौ अनुच्छिद्यमानद्रवत्वाधिकरणत्वस्य सत्त्वाद्व्यभिचारवारणाय अत्यन्तानलसंयोगसमानकालिकत्वस्य अनुच्छिद्यमानत्वघटकनाश-विशेषणत्वमङ्गीकार्यम्। अपार्थिवत्वाभाववति जलमध्यस्थघृतादौ अत्यन्तानलसंयोगसमानकालीनानुच्छिद्यमानद्रवत्वाधिकरणत्वस्य सत्त्वाद्व्यभिचारवारणाय तादृशनाशे प्रतिबन्धकाभाववैशिष्ट्य-निवेश कार्य (प्रतिबन्धकाभाववैशिष्ट्य च समानकालिकत्व-सामानाधिकरण्योभयसम्बन्धेन ग्राह्यम्) अत्र घृतादिनिष्ठद्रवत्वनाशे जलस्य प्रतिबन्धकत्वान्न व्यभिचारः। अत्र सुवर्णे अनुच्छिद्य-मानद्रवत्वाधिकरणत्वमस्तु अपार्थिवत्व मास्तु इत्यप्रयोजकशङ्कायां प्रसक्तायां तन्निवृत्त्यर्थं कार्यकारणभावभङ्गप्रसङ्गानुकूल तर्क व्यवस्थापयति * अत्यन्तानलेति। *

द्रवद्रव्यान्तरसिद्धाविति * अत्यन्तानलसंयोगी पीतिमाश्रयः स्वनिष्ठद्रवत्वनाशप्रतिबन्धकद्रवद्रव्यान्तरसंयुक्तः अत्यन्तानलसंयो-गेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वे सति गुरुत्वात् जलमध्यस्थ-घृतादिवत्, इत्यनुमानेन द्रव्यत्वनाशप्रतिबन्धकद्रवद्रव्यान्तरत्वेन सुवर्णस्य सिद्धिर्द्रष्टव्या। गुरुत्वमात्रस्य हेतुत्वे घटाद्यन्तर्भावेण व्यभि-चारः। अनुच्छिद्यमानद्रवत्वाधिकरणत्वविशिष्टगुरुत्वमात्रस्य हेतु-

तायां अग्निसंयोगासमानाधिकरणद्रवत्वविशिष्टे (शिक्यादिस्थे) घृतादौ व्यभिचारः, अतः अत्यन्तानलसंयोगसमानकालीनत्वस्यापि निवेशः कार्यः * जलत्वानुपपत्तेरिति * अनुमानप्रयोगस्तु, तादृशद्रवद्रव्यं न जलं नैमित्तिकद्रवत्वाधिकरणत्वात् इति * रूपवत्तयेति * अनुमानप्रयोगस्तु, तादृशद्रवद्रव्यं वाय्वादिपटकभिन्नं रूपवत्त्वादिति । ननु सुवर्णस्य तैजसत्वे सिद्धे तद्गतोष्णस्पर्शभास्वररूपयोरुपलम्भः कुतो न स्यादित्याशङ्कायामाह * प्रतिबन्धादिति * (अत्र प्रतिबन्धकत्वं दोषविधया ग्राह्यम्) स्वविषयाश्रयत्वसम्बन्धेन सुवर्णे जायमानोष्णस्पर्शभास्वररूपसाक्षात्कारौ प्रति स्वाश्रयसंयुक्तत्वसम्बन्धेन पार्थिवस्पर्शरूपयोः प्रतिबन्धकत्वं विज्ञेयम् ॥

**मू * वायुं लक्षयति * रूपरहितेति * आकाशादावतिव्याप्तिवारणाय * स्पर्शवानिति * पृथिव्यादावतिव्याप्तिवारणाय * रूपरहितेति * ननु प्राणस्य कुत्रान्तर्भाव इत्यत आह * शरीरेति * स चेति * एक एव प्राणः स्थानभेदात् प्राणापानादिशब्दैः व्यवह्रियत इत्यर्थः ॥**

व्या * अत्र स्वरूपसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन रूपाभावविशिष्टो यः स्पर्शः तद्विशिष्टत्वं वायोर्लक्षणं वक्तव्यम्, वैशिष्ट्यं च समवायसम्बन्धेन बोध्यम् (नतु रूपाभाववत्त्वस्पर्शवत्त्वयोः लक्षणत्वम्) ननु रूपाभावोपलक्षितं स्पर्शवत्त्वं लक्षणम् । तथा सति उत्पत्तिकालावच्छेदेन रूपाभाववत्त्वस्य द्वितीयादिक्षणावच्छेदेन स्पर्शवत्त्वस्य च सत्त्वादतिव्याप्त्यापत्तेः । निरुक्तसामानाधिकरण्यसम्बन्धेन रूपाभावविशिष्टस्पर्शवत्त्वस्य लक्षणत्वे तु " विशेषणविशेष्योभयं यत्र तत्र विशिष्टाधिकरणता " इति

न्यायानुसारेण घटे द्वितीयादिक्षणावच्छेदेन स्पर्शस्य सत्त्वेऽपि रूपाभावस्याभावेन तदुभयाधिकरणत्वाभावेन विशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्त्वेन तादृशविशिष्टाधिकरणताया असत्त्वेन 'नातिव्याप्तिः (स्वरूपसमवायोभयघटितसामानाधिकरण्य नाम स्वरूप-

वायुलक्षणे ॥ अत्र रूपनिष्ठप्रतियोगितायां निविष्टं रूपत्वावच्छिन्नत्वं रूपत्वातिरिक्तधर्मानवच्छिन्नत्वरूपमेव विवक्षणीयम्, अन्यथा, रूपत्वावच्छिन्नां घटादिवृत्तित्वविशिष्टरूपाभावीयप्रतियोगिता रूपरूपत्वोभयाभावीयप्रतियोगितामादाय पृथिव्यादावतिव्याप्तेः। रूपत्वातिरिक्तधर्मानवच्छिन्नत्वं पृथिवीलक्षण इव स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन रूपत्वगतैकत्ववृत्तित्वरूपमेव विवक्षणीयम्, अन्यथा तादृशावच्छिन्नत्वनिष्ठप्रतियोगिताकाभावतादृशावच्छिन्नत्वसामान्याभावयोर्विकल्पेन पृथिवीलक्षणवत् पूर्वोक्तरीत्या दोषापत्तेः। प्रतियोगिताया समवायसम्बन्धावच्छिन्नत्वमपि समवायत्वावच्छिन्नसंसर्गताभिन्नसंसर्गत्वानिरूपकत्वरूपं (समवायसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वरूपं) परिष्करणीयम्, अन्यथा, समवायसम्बन्धावच्छिन्ना घटाद्यनुयोगिकसमवायसम्बन्धेन रूपं नास्तीति प्रतीतिसिद्धाभावनिरूपितां संयोगसमवायोभयसम्बन्धेन रूपं नास्तीति प्रतीतिसिद्धाभावनिरूपिता या प्रतियोगितामादाय पृथिव्यादावतिव्याप्तेः। अत्र तादृगसंसर्गताभिन्नसंसर्गत्वानिरूपकत्वमपि स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन समवायत्वगतैकत्ववृत्तित्वरूपमेव विवक्षणीयम्, अन्यथा पूर्वोक्तविधयाऽभावद्वयविकल्पने निरुक्तदोषापत्तेः। एवमन्यत्रापि प्रतियोगित्वाधेयत्वादिषु तत्तद्धर्मसम्बन्धावच्छिन्नत्वनिवेशस्थलेष्वेवमेव पर्याप्तिनिवेशप्रकारः कार्य इत्यवधेयम्। पृथिव्यादिलक्षणेषु द्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वघटितेषु द्रव्यत्वाधिकरणत्वं समवायेन तदधिकरणवृत्तित्वं च स्वरूपसम्बन्धेन च ग्राह्यम्, अन्यथा कालिकसम्बन्धं द्रव्यत्वजातिं चादाय जलादावतिव्याप्तिः॥

सम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितसमवायस-म्बन्धावच्छिन्नवृत्तित्वरूपं ग्राह्यम्) निरुक्तरीत्या रूपाभावविशि-ष्टस्पर्शविशिष्टत्वनिवेशेनोत्पन्नविनष्टघटादावतिव्याप्तिः। अन्यथा, रूपरहितत्वस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वयोरुत्पन्नवि-नष्टघटादावपि सत्त्वादतिव्याप्तेः। नचैवमुत्पन्नविनष्टवाय्वव्याप्तिः, तत्र तादृशस्पर्शविशिष्टत्वाभावादिति वाच्यम्, समवायस्वसमवायि-समवेतत्वान्यतरसम्बन्धेन स्पर्शविशिष्टत्वस्यैव स्पर्शवत्त्वदलार्थत्वात्, तत्र समवायेन स्पर्शाभावेऽपि द्वितीयसम्बन्धेनावयवस्पर्शविशिष्टत्व-मादाय लक्षणसमन्वयसम्भवेन दोषाभावात्॥

समवायसम्बन्धावच्छिन्नरूपत्वावच्छिन्नप्रतियोगिताकाभावनिष्ठ-स्वरूपसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वपर्यन्तं रूप-रहितत्वदलं तर्कसङ्ग्रहसर्वस्वे परिष्कृतम्। तत्र रूपाभावनिष्ठाधेय-ताया रूपाभावत्वावच्छिन्नत्वदलं विशेषणं देयम्, अन्यथा रूपाभा-वनिष्ठाधेयतापदेन प्रमेयत्वावच्छिन्ना अभावत्वावच्छिन्ना वा आधे-यतामुपादाय स्पर्शवत्त्वदलस्यापि सत्त्वात्पृथिव्यादावतिव्याप्तेः। नन्वत्र प्रतियोगितायां रूपत्वावच्छिन्नत्वविशेषणं व्यर्थम्, रूप-रूपत्वोभयाभावीयप्रतियोगितायाः रूपत्वव्याप्यत्व (रूपत्वाभाव-वदवृत्तित्व) दलेनैव वारणादिति चेन्न, रूपत्वव्याप्यां घटरूपाद्यभा-वीयप्रतियोगितामादाय पृथिव्यां पटादावतिव्याप्तेः। नच रूप-त्वव्याप्यत्वस्येव रूपत्वव्यापकत्वस्यापि प्रतियोगितायां निवेशनेन निरुक्तप्रतियोगिताया रूपत्वव्यापकत्वाभावेनैवैतद्दोषवारणसम्भवात् रूपत्वावच्छिन्नत्वदलं विफलमेवेति वाच्यम्। रूपत्वव्यापिकां रूपत्वव्याप्या घटरूपघटरूपान्यरूपोभयाभावीयप्रतियोगितामादाय पृथिव्यादावतिव्याप्त्यापत्तेः, अतो रूपत्वावच्छिन्नत्वदलस्य (पर्याप्ति-

घटितस्य गुरुतरस्य) सार्थक्यमस्त्येव * शरीरान्तः संचारीति * तथाच प्राणस्य विषयेऽन्तर्भाव इति भावः * स्थानभेदादिति * हृदादिस्थानभेदादित्यर्थः ॥

**मू * स्पर्शानुमेयो वायुः, तथाहि, योऽयं वायौ वाति सत्यनुष्णाशीतस्पर्श उपलभ्यते, स क्वचिदाश्रितः, गुणत्वात् रूपवत्। नचास्याश्रयः पृथिवी, उद्भूतस्पर्शवत्पार्थिवस्योद्भूतरूपवत्त्वनियमात्। न जलतेजसी, अनुष्णाशीतस्पर्शवत्त्वात्। न विभुचतुष्टयं, सर्वत्रोपलब्धिप्रसङ्गात्। न मनः, परमाणुस्पर्शस्यातीन्द्रियत्वात्। तस्माद्यः प्रतीयमानस्पर्शाश्रयः स वायुः ॥**

व्या * योऽयं वायाविति * वायुसंचारसमानकालीनोपलब्धिविषयानुष्णाशीतस्पर्शः किञ्चित्पदार्थाश्रितः गुणत्वात् रूपवत् इत्यनुमानेन तादृशानुष्णाशीतस्पर्शाश्रयत्वेन वायोः सिद्धिरिति स्वमतमनेन वाक्येनोपदर्शितम्। तादृशस्पर्शाश्रयस्य पृथिव्यादिद्रव्यातिरिक्तत्वं स्थिरीकरोति * नचास्याश्रय इति * अनेन वाक्येन तादृशानुष्णाशीतस्पर्शाश्रयः पृथिवीभिन्नः उद्भूतरूपाभावविशिष्टोद्भूतस्पर्शवत्त्वादित्यनुमानमुपदर्शितम्। अत्रोद्भूतरूपाभावमात्रस्य हेतुत्वे पृथिवीभेदाभाववत्याद्यक्षणावच्छिन्नघटादौ उत्पन्नविनष्टघटादौ (घ्राणेन्द्रिये) चोद्भूतरूपाभावस्य सत्त्वाद्व्यभिचारप्रसङ्गः, उद्भूतस्पर्शमात्रस्य हेतुत्वे घटाद्यन्तर्भावेण व्यभिचारप्रसङ्गः, अतः स्तादृशविशिष्टस्य हेतुत्वमङ्गीकार्यमेव। स्पर्शे उद्भूतत्वानुपादाने घ्राणेन्द्रियादावुद्भूतरूपाभावविशिष्टानुद्भूतस्पर्शस्य सत्त्वाद्व्यभि-

चाप्रसङ्गः । रूपे उद्भूतत्वानुपादाने पक्षे हेतुरस्तु साध्यं मास्त्वित्यप्रयोजकशङ्काप्रसक्तिकाले यत्रोद्भूतस्पर्शवत्पार्थिवत्वं तत्र रूपवत्त्वमिति व्याप्यव्यापकभावभङ्गप्रसङ्गानुकूलतर्कप्रयोगे वायावपि अनुद्भूतरूपाङ्गीकर्तृमते इष्टापत्तिरेवाभ्युपगम्येत । अत्रानुमाने पक्षे हेतुरस्तु साध्यं मास्त्वित्यप्रयोजकशङ्कायां प्रसक्तायां तन्निवृत्त्यर्थं यत्रोद्भूतस्पर्शवत्पार्थिवत्वं तत्रोद्भूतरूपवत्त्वं इति व्याप्यव्यापकभावभङ्गप्रसङ्गानुकूलस्तर्कः प्रयोक्तव्य इत्यर्थं सूचयति * उद्भूतस्पर्शवदिति * न जलतेजसीइति * तादृशस्पर्शाश्रयः जलतेजोभिन्नः अनुष्णाशीतस्पर्शवत्त्वादित्यनुमानमनेन वाक्येन सूचितम् * न विभुचतुष्टयमिति * इदं वाक्यमाकाशादिप्रत्येकभेदसाधनाभिप्रायकमित्यङ्गीकार्यम्, अन्यथा, समुदायभेदस्य केवलान्वयितया सिद्धसाधनदोषापत्तेः । तादृशस्पर्शाश्रयः आकाशादिभिन्नः उपलभ्यमानस्पर्शाश्रयत्वादित्यनुमान अनेन वाक्येन सूचितम् । अत्राप्रयोजकशङ्कावारणार्थमवतारयति * सर्वत्रोपलब्धिरिति * यद्येतदाश्रयः विभुचतुष्टयान्तर्भूतः स्यात् गगनादीना विभुत्वेन तदीयस्पर्शस्यापि तदीयशब्दादिवत् सर्वत्रोपलब्धिप्रसङ्ग इत्याशयः * न मन इति * तादृशस्पर्शाश्रयः मनोभिन्नः उपलभ्यमानस्पर्शाश्रयत्वादित्यनुमानमनेन वाक्येन सूचितम् ॥

**मू * ननु वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवदिति चेन्न, उद्भूतरूपस्योपाधित्वात् । यत्र द्रव्यत्वे सति बहिरिन्द्रियजन्यप्रत्यक्षविषयत्वं तत्रोद्भूतरूपवत्त्वमिति साध्यव्यापकत्वम् । पक्षे साधनाव्यापकत्वम् । नचैवं तप्तवा-**

**रिस्थतेजसोऽप्यप्रत्यक्षत्वापत्तिः, इष्टत्वात्। तस्माद्रूपरहितत्वाद्वायुरप्रत्यक्षः ॥**

व्या * अत्र वायुः पक्षः, प्रत्यक्षत्वं (बहिरिन्द्रियजन्यप्रत्यक्षविषयत्वं) साध्यं, प्रत्यक्ष (प्रत्यक्षविषय) स्पर्शाश्रयत्वं हेतुः। बाह्यद्रव्यप्रत्यक्षे उद्भूतरूपस्य कारणत्वाङ्गीकारेण वायावुद्भूतरूपाभावेन वायोः प्रत्यक्षस्यानुपपन्नत्वेन तस्य प्रत्यक्षज्ञानविषयत्वमनुमानेन साधयितुं प्रयतते * प्रत्यक्षस्पर्शाश्रयत्वादिति * प्रत्यक्षविषयत्वाभाववति अनुद्भूतस्पर्शाश्रये त्वगिन्द्रियेऽपि स्पर्शाश्रयत्वस्य सत्त्वाद्व्यभिचारवारणाय हेतुकोटौ प्रत्यक्षत्वनिवेशः। न च स्पर्शे उद्भूतत्वनिवेशेनैव निरुक्तव्यभिचारवारणसम्भवात् स्पर्शे प्रत्यक्षत्वदलमनर्थकमिति वाच्यम्, उद्भूतत्वस्य जातित्वाभावेन शुक्लत्वादिव्याप्यानुद्भूतत्वाभावकूटत्वरूपत्वेन परिष्करणीयतया तादृशकूटनिवेशे महागौरवप्रसङ्गेन स्पर्शे प्रत्यक्षत्वनिवेशस्य लघुत्वेनावश्यकत्वात्। बहिरिन्द्रियजन्यप्रत्यक्षत्वाधिकरणे गुणादावुद्भूतरूपाभावेनोद्भूतरूपस्य साध्यव्यापकत्वं न सम्भवतीत्यत आह * यत्र द्रव्यत्वं सतीति * तथा चायमुपाधिः न केवलसाध्यव्यापकः किन्तु पक्षधर्मावच्छिन्नसाध्यव्यापक इति सूचितम्। साध्ये पक्षधर्मावच्छिन्नत्वं च पक्षधर्मविशिष्टत्वम्, वैशिष्ट्यं च सामानाधिकरण्यसम्बन्धेनेति ज्ञेयम्। अत्र द्रव्यत्वरूपपक्षधर्मविशिष्टबहिरिन्द्रियजन्यप्रत्यक्षविषयत्वात्मकसाध्याधिकरणे घटादावुद्भूतरूपाभावस्यासत्त्वेन उद्भूतरूपस्य पक्षधर्मावच्छिन्नसाध्यव्यापकत्वं सम्भवति * पक्षे साधनाव्यापकत्वमिति * प्रत्यक्षस्पर्शाश्रयत्वरूपसाधनाधिकरणे वायौ उद्भूतरूपाभावस्य सत्त्वेन साधनाव्यापकत्वमप्युद्भूत-

रूपे सम्भवतीति नानुपपत्तिः (अनुमितेः पूर्वं पक्षे साध्यसंशयस्यैव सत्त्वेन न साध्याधिकरणपदेन पक्षो ग्रहीतुं शक्यते, किन्तु पक्षभिन्नमेव ग्राह्यम्। अनुमितेः पूर्वमपि पक्षे हेतुमत्तानिश्चयसद्भावेन साधनाधिकरणपदेन पक्षोऽपि ग्रहीतुं शक्यत इति विवेकः)

उपाधेः दूषकत्वं द्विविधम्, हेतौ स्वव्यभिचारित्वहेतुना साध्यव्यभिचारोन्नायकत्व (हेतूद्देश्यकसाध्यव्यभिचारविधेयकानुमितिजनकतावच्छेदकविषयताश्रयत्व) रूपमेकम्, पक्षे स्वाभाववत्त्वहेतुना साध्याभावोन्नायकत्व (पक्षोद्देश्यकसाध्याभावविधेयकानुमितिजनकतावच्छेदक विषयताश्रयत्व) रूपमपरम्। अत्र द्विविधमपि दूषकत्वं सम्भवति, तथाहि, आद्य यथा, प्रत्यक्षस्पर्शाश्रयत्वं बाह्यप्रत्यक्षविषयत्वव्यभिचारिद्रव्यत्वविशिष्टबाह्यप्रत्यक्षविषयताव्यापकोद्भूतरूपव्यभिचरितत्वात् इति (साध्यकोटौ प्रत्यक्षे बाह्यत्वानिवेशे प्रत्यक्षविषयत्वाधिकरणात्मान्तर्भावेण उद्भूतरूपस्य साध्यव्यापकत्वभङ्गः, अतस्तन्निवेशः) यो यद्व्यापकव्यभिचारी स सर्वोऽपि तद्व्यभिचारीति रीत्या। द्वितीयं यथा, वायुः द्रव्यत्वविशिष्टबाह्यप्रत्यक्षविषयत्वाभाववान् द्रव्यत्वविशिष्टबाह्यप्रत्यक्षविषयताव्यापकोद्भूतरूपाभावात्। यो यद्व्यापकाभाववान् स सर्वोऽपि तदभाववानिति रीत्या ग्राह्यम् (उभयत्रापि इयं सामान्यमुखीया व्याप्तिरिति व्यवह्रियते) * नचैवमिति * एवं प्रत्यक्षस्पर्शाश्रयस्याप्युद्भूतरूपाभावेन प्रत्यक्षत्वानङ्गीकारे * अप्रत्यक्षत्वापत्तिः * उद्भूतरूपाभावेन तप्तवारिस्थतेजसोऽप्रत्यक्षत्वापत्तिरित्यर्थः * रूपरहितत्वाद्वायुरिति * बाह्यद्रव्यप्रत्यक्षमात्रे उद्भूतरूपस्य कारणत्वेन वायावुद्भूतरूपाभावेन न वायोः प्रत्यक्षप्रमाणेन सिद्धिः, किन्तु

निरुक्तानुमानेनैवेति बोध्यम्। बाह्यद्रव्यप्रत्यक्षमात्रे उद्भूतरूपस्य कारणत्वमङ्गीक्रियते प्राचीनमते। अत एव उद्भूतरूपवत्याः प्रभायाः प्रत्यक्षं, उद्भूतरूपरहितस्य वायोरप्रत्यक्ष च तन्मतेऽभ्युपेयंत॥ नवीनमते बाह्यद्रव्यप्रत्यक्षमात्रे न कस्यापि कारणत्वम्, किन्तु त्वाचप्रत्यक्षे उद्भूतस्पर्शस्य चाक्षुषप्रत्यक्षे उद्भूतरूपस्य च कारणत्वमभ्युपेयते, अतएव प्रभा पश्यामीतिवत् वायु स्पृशामीत्यनुभवबलेन तन्मते वायुप्रभयोरपि प्रत्यक्षमङ्गीक्रियते॥

**मू * इदानीं कार्यरूपपृथिव्यादिचतुष्टयस्य चोत्पत्तिविनाशक्रमः कथ्यते। ईश्वरस्य चिकीर्षावशात्परमाणुषु क्रिया जायते, ततः परमाणुद्वयसंयोगे द्व्यणुकमुत्पद्यते, त्रिभिरेव द्व्यणुकैस्त्र्यणुकमुत्पद्यते। एवं च चतुरणुकादिक्रमेण महती पृथिवी महत्य आपो महत्तेजो महान्वायुरुत्पद्यते। एवमुत्पन्नस्य कार्यस्य संजिहीर्षावशात्क्रियया परमाणुद्वयविभागे द्व्यणुकनाश इत्येवं पृथिव्यादिनाशः। असमवायिकारणनाशाद्द्व्यणुकनाशः, समवायिकारणनाशात्त्र्यणुकनाश इति सम्प्रदायः। सर्वत्रासमवायिकारण नाशाद्द्रव्यनाश इति नवीनाः॥**

व्या * ननु घटाद्यवयविनां परमाणुसमुदायरूपत्वेन तदतिरिक्तस्यावयविनोऽसद्भावात् सर्वस्याप्येकरूपत्वेन नित्यत्वानित्यत्वाभ्यां पृथिव्यादीनां विभागोऽनुचित इति शङ्कानिरासायाह * इदानीमिति * प्रथमं द्व्यणुकाद्यारम्भकसंयोगानुकूला क्रिया परमाणुषूदेति, ततो देशान्तराद्विभागः, ततः परमाणुषु देशान्तर-

संयोगनाशः, ततः क्रियावतां परमाणूनां परमाण्वन्तरैस्सह संयोगे सति द्व्यणुकोत्पत्तिः, एवं त्र्यणुकाद्युत्पत्तिः ज्ञेया। अत्र परमाणुक्रियायामीश्वरचिकीर्षा निमित्तकारणम्। एवं द्व्यणुकादीनामुत्पत्तिक्रमः॥ द्व्यणुकादीनां विनाशक्रमस्त्वित्थम्, प्रथमं परमाणौ द्व्यणुकनाशानुकूला क्रिया, ततः परमाणौ परमाण्वन्तराद्विभागः, ततः परमाणुद्वयसंयोगनाशः, ततोऽसमवायिकारणसंयोगनाशाद्-द्व्यणुकनाशः। एवं क्रमेण त्र्यणुकादिनाशो विज्ञेयः। अत्रापि द्व्यणुकनाशकक्रियायामीश्वरस्य संजिहीर्षा निमित्तकारणम्॥ नन्वीश्वरचिकीर्षासंजिहीर्षयोरीश्वरेच्छारूपतया सार्वदिकत्वेन सृष्टिकाले प्रलयस्य प्रलयकाले सृष्टेश्च प्रसङ्गो दुर्वार इति वाच्यम्, जीवादृष्टसहितयोरेव चिकीर्षासंजिहीर्षयोरीश्वरीययोः सृष्टिप्रलयहेतुत्वमङ्गीक्रियते, तथाच सृष्टिकाले संहारानुकूलजीवादृष्टस्य संहारकाले सृष्ट्यनुकूलजीवादृष्टस्य च अनभ्युपगमेन तादृशेच्छयोः सत्त्वेऽपि निरुक्तातिप्रसङ्गाभावात्॥

असमवायिकारणनाशादिति * द्व्यणुकसमवायिकारणपरमाणूनां नाशासम्भवेन द्व्यणुकनाशं प्रति असमवायिकारणपरमाणु-संयोगनाशस्यैव कारणत्वमङ्गीकर्तव्यम्, द्व्यणुकानां नाशसम्भवेन समवायिकारणद्व्यणुकनाशस्यैव त्र्यणुकनाशं प्रति कारणत्वमङ्गीक्रियत इति सम्प्रदायः * सर्वत्रेति * जन्यद्रव्यमात्रनाशस्थले असमवायिकारणनाशस्य नियतत्वेन प्राचीनमते कार्यकारणभावद्वैविध्याङ्गीकारप्रयुक्तगौरवभयेन च एकरीतिरेवोचितेत्याशयेन कार्यकारणभावद्वितयाभावेन च जन्यद्रव्यनाशमात्रं प्रति असमवायिकारणनाशस्यैव कारणत्वमङ्गीकुर्वन्ति नवीनाः॥

ननु परमाणुपुञ्जस्यैवावयविरूपत्वाङ्गीकारेणैव सामञ्जस्येऽ-

तिरिक्तावयविकल्पनस्य किं फलमिति चेन्न, परमाणूनामप्रत्यक्षतया तदात्मकस्यावयविनोऽप्यप्रत्यक्षत्वप्रसङ्गात् । नच दूरस्थकेशस्याप्रत्यक्षत्वेऽपि तत्समुदायस्य प्रत्यक्षत्वमिव परमाणोरप्रत्यक्षत्वेऽपि तत्समुदायरूपस्यावयविनः प्रत्यक्षं सम्भवतीति वाच्यम्, एकस्य केशस्य दूरस्थत्वरूपप्रतिबन्धकवशेनाप्रत्यक्षत्वं, एकस्य परमाणोः समीपस्थस्यापि स्वरूपत एवाप्रत्यक्षत्वमिति दृष्टान्तवैषम्यात् । किञ्च परमाणुपुञ्जस्यैव घटाद्यवयविरूपत्वे परमाणूनामणुतया प्रत्यक्षकारणीभूतमहत्त्वस्य प्रत्येकानतिरिक्तपरमाणुसमूहेऽसम्भवेन तत्समुदायरूपावयविप्रत्यक्षानुपपत्तेः । अतश्चातिरिक्तस्यावयविनोऽङ्गीकारे तु तत्रावयविनि महत्त्वस्याक्षततया न तत्प्रत्यक्षानुपपत्तिः ॥

**मू० — किं पुनः परमाणुसद्भावे प्रमाणम्, उच्यते, जालसूर्यमरीचिस्थं सूक्ष्मतमं यद्रज उपलभ्यते तत्सावयवं चाक्षुषद्रव्यत्वात् घटवत् । त्र्यणुकावयवोऽपि सावयवः महदारम्भकत्वात् तन्तुवत् । यो द्व्यणुकावयवः स परमाणुः, सच नित्यः, कार्यत्वे अनवस्थाप्रसङ्गात् ॥**

व्या * प्रसक्तानुप्रसक्तं परमाणुस्वरूपं निरूपयति * जालेति * अत्र प्रथमानुमाने जालसूर्यमरीचिस्थं उपलब्धिविषयीभूतं सूक्ष्मतमं रजः पक्षः, सावयवत्वं (स्वावयवसमवेतत्वं) स्वसमवेतत्वसम्बन्धेनावयववैशिष्ट्यं) साध्यम्, चाक्षुषत्वविशिष्टद्रव्यत्वं (चाक्षुषत्वे सति द्रव्यत्वं) हेतुः (अर्थात्पक्षीभूतद्रव्यं त्र्यणुकमेव) अत्र केवलद्रव्यत्वस्य हेतुत्वे सावयवत्वाभाववति गगनादावपि द्रव्यत्वस्य सत्त्वाद्व्यभिचारः । केवलचाक्षुषत्वस्य हेतुतायां गुणाद्यन्तर्भा-

वेण व्यभिचारः । अतो दळद्वयोपादानम् । अनेनानुमानेन त्र्यणुकावयवस्य द्व्यणुकस्य सिद्धिः । द्वितीयानुमाने त्र्यणुकावयवस्य (द्व्यणुकस्य) पक्षत्वम् । सावयवत्वस्य साध्यत्वम् । महदारम्भकत्वस्य (महद्द्रव्यारम्भकत्वस्य) हेतुत्वम् । अनेनानुमानेन द्व्यणुकावयवस्य परमाणोः सिद्धिर्द्रष्टव्या । अत्र प्रथमानुमाने पक्षे हेतुरस्तु साध्यं मास्त्वित्यप्रयोजकशङ्कायां (व्यभिचारशङ्कायां प्रसक्तायां) यदि तत्र सावयवत्वं न स्यात्तदा चाक्षुषत्वविशिष्टद्रव्यत्वं न स्यादिति तर्केण तन्निरासो बोध्यः । चाक्षुष प्रति अपकृष्टमहत्त्वस्य कारणत्वात् अपकृष्टमहत्त्व प्रत्यनेकद्रव्यसमवेतत्वस्य (समवेतसमवेतद्रव्यत्वस्य) (अवयवगतत्रित्वसंख्यायाः) कारणत्वात् । तस्य सावयवत्वाभावेऽवयवसंख्याजन्यस्य महत्त्वस्य तत्रानुपपत्तेः * स च नित्य इति * तस्य कार्यतास्वीकारे जन्यद्रव्यत्वेनास्यावयवान्तरापेक्षा स्यात्, तदनु तदवयवानां च कार्यतास्वीकारप्रसङ्गे तेषामप्यवयवान्तरापेक्षा स्यात्, इत्थमनवस्थाप्रसङ्गः, एवं च सर्षपस्यापि मेरुवदनन्तावयवकत्वेन मेरुसर्षपयोरपि साम्यप्रसङ्गः प्रसज्येत; अतः परमाणोर्नित्यत्वमङ्गीकार्यमेव (जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः । तस्य षष्ठतमो भागः परमाणुः स उच्यत इति तल्लक्षणम्)

**मू * ननु सृष्टिप्रलयसद्भावे किं प्रमाणम्, धाता यथापूर्वमकल्पयदिति श्रुतेरेव प्रमाणत्वात् । सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलयः । सर्वभावकार्यध्वंसो महाप्रलय इति विवेकः ॥**

व्या * धाता यथापूर्वमिति * यथापूर्वं पूर्वमिव । तथा च एक-

दा पूर्वं धात्रा जगत्सृष्टं, तदनु संहृतं, पुनस्सृष्टमित्यर्थो ज्ञायते. *सर्वकार्यद्रव्येति * यत्किञ्चित्कार्यद्रव्यध्वंसस्येदानीमपि सत्त्वात्प्रलयव्यवहारापत्तिवारणाय सर्वपदम् । गगनादिनित्यद्रव्याणां ध्वंसस्याप्रसिद्ध्या सर्वद्रव्यध्वंसासम्भवेन असम्भवदोष इति कार्यपदम् । खण्डप्रलयेऽपिकार्यात्मकपरमाणुरूपादीनासत्त्वेन कार्यात्मकध्वंसानां ध्वंसासम्भवेन च तदानीमपि सर्वकार्यध्वंसासम्भवेन असम्भव इति द्रव्यपदम् ॥ सर्वभावकार्येति * अत्रापि सर्वपदप्रयोजनं पूर्ववत् । कार्यात्मकानां ध्वंसानां ध्वंसासम्भवेन असम्भव इति भावपदम् । नित्यभावानां सामान्यादीनां ध्वंसासम्भवेनासम्भव इति कार्यपदम् । तथा च पार्थिवपरमाणुरूपसद्भावासद्भावाभ्यां अवान्तरप्रलयमहाप्रलययोः भेदोऽवगन्तव्य. । अमुमेवार्थं मनसि कृत्वा अवान्तरप्रलयलक्षणे द्रव्यपदम ; महाप्रलयलक्षणे भावपदञ्च प्रयुक्तमित्यवगन्तव्यम् ॥

**मू * आकाशं लक्षयति * शब्दगुणकमिति * नन्वाकाशमपि पृथिव्यादिवत्किं नाना, नेत्याह * तच्चैकमिति .* भेदे पमाणाभावादित्यर्थः । एकत्वादेव सर्वत्र शब्दोपलब्धेः विभुत्वमङ्गीकर्तव्यमित्याह * विभ्विति * सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वंच परिच्छिन्नपरिमाणवत्त्वम्, क्रियावत्त्वं वा । विभुत्वादेवात्मवन्नित्यमित्याह * नित्यं चेति ***

व्या * अत्र गुणपदमाकाशे शब्द एव विशेषगुण इति द्योतनाय, नन्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्यैव सम्यक्त्वात् । एतन्निष्कृष्टलक्षणतु तर्कसङ्ग्रहसर्वस्वे निरूपितम् ॥

घटाकाशो मठाकाश इत्यादिव्यवहारस्य घटपटाद्युपाधिनिमित्तकत्वेन गगनस्यानेकत्वसाधने प्रमाणं नास्तीत्याह * तच्चैकमिति * भेदे प्रमाणाभावादिति * अत्र गगननिष्ठमेकत्वं न संख्यारूपम्, पृथिव्यादावपि तादृशैकत्वस्य सत्त्वादेका पृथिवीति व्यवहारापत्तेः। नाप्यपेक्षाबुद्धिविशेषविषयत्वरूपं तत्, पूर्वोक्तव्यवहारापत्तेः। नापि स्वसजातीयधर्म्यन्तररहितत्वं तत्, सिद्ध्यसिद्धिभ्यां व्याघातापत्तेः। तथाहि, गगनसजातीयधर्म्यन्तरमस्ति वा न वा, नाद्यः तादृशधर्म्यन्तररहितत्वानुपपत्तेः। न द्वितीयः, अभावबुद्धिं प्रति प्रतियोगिज्ञानस्य कारणत्वेन स्वसजातीयधर्म्यन्तरज्ञानाभावे तद्रहितत्वज्ञानानुपपत्तेः। किन्तु स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यद्रव्यविभाजकोपाधिमत्त्वं गगनादिगतमेकत्वं परिष्करणीयम्। स्वपदेन गगनभेदस्य परिग्रहणे स्वप्रतियोगिगगनवृत्तित्वस्य द्रव्यविभाजकोपाधिभूतगगनत्वे सम्भवेऽपि स्वानुयोगिघटादिवृत्तित्वं न सम्भवति, स्वपदेन घटादिभेदस्य परिग्रहणे स्वानुयोगिगगनवृत्तित्वस्य सम्भवेऽपि स्वप्रतियोगिघटादिवृत्तित्वं गगनत्वे न सम्भवति, किन्तु स्वपदेन घटादिभेदस्य परिग्रहणे घटाद्यन्तर्भावेण स्वप्रतियोगिवृत्तित्वं पटाद्यन्तर्भावेण स्वानुयोगिवृत्तित्वञ्च पृथिवीत्वादौ सम्भवति, तादृशोभयसम्बन्धेन भेदविशिष्टान्यत्वं गगनत्वरूपद्रव्यविभाजकोपाधौ वर्तत इति समन्वयः। प्रथमसम्बन्धमात्रोपादाने गगनभेदमादाय स्वप्रतियोगिवृत्तित्वस्य द्वितीयसम्बन्धमात्रोपादाने घटादिभेदमादाय स्वानुयोगिवृत्तित्वस्य च गगनत्वे सम्भवेन एकैकसम्बन्धेन भेदविशिष्टान्यत्वस्य तत्राभावेनासम्भवप्रसङ्गः। अतस्सम्बन्धद्वितयोपादानम्। एवमेव कालगतं दिग्गतं ईश्वरगतं चैकत्वं परिष्करणीयम्।

सत्तागतं समवायगतं चैकत्वमप्येवमेव परिष्कृत्य अन्ते पदार्थविभाजकोपाधिमत्वं निवेशनीयम्, अत्र सुतरां संख्याप्रसक्तेरभावात्, पूर्वोक्तानुपपत्तीनां तादवस्थ्याच्च ॥ अथवा, आकाशत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदशून्यत्वं गगनादिद्रव्यगतमेकत्वं परिष्करणीयम्। आकाशत्वसमानाधिकरणः उभयावृत्तिः यो धर्मः गगनगततत्तद्व्यक्तित्वादिः, तत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदः तत्तद्व्यक्तिर्नेत्यादिभेदः, तस्य घटादौ प्रसिद्धिः, तच्छून्यत्वं गगनादौ वर्तते, गगनादीनामनेकत्वाभावात्, इति समन्वयः। एवमेवान्यत्राप्येकत्वं परिष्करणीयम् ॥ द्वित्वादिकन्तु सख्यारूपमेकं, अपेक्षाबुद्धिविशेषविषयत्वरूपमपरम्, आद्यं द्रव्ये, द्वितीयं गुणादौ, इत्यलं प्रसक्तानुप्रसक्तविचारेण ॥

एकत्वादेवेति * एकस्य विभुभिन्नस्य (परिच्छिन्नस्य) सर्वत्र शब्दसाक्षात्कारप्रयोजकत्वं न सम्भवतीति विभुत्वं नियतमङ्गीकर्तव्यं गगनस्येति भावः * सर्वमूर्तेति * सर्वपदाभावे यत्किंचिन्मूर्तद्रव्यसंयोगित्वस्य घटादावपि सत्त्वादतिव्याप्तिः, अतः सर्वपदम्। मूर्तपदाभावे सर्वद्रव्यान्तर्गतगगनादिसंयोगित्वस्य विभुद्वयसंयोगानङ्गीकारेण कालादावभावादसम्भवः। द्रव्यपदं मूर्तद्रव्यतात्पर्यग्राहकमेव, नतु द्रव्यपदस्य प्रयोजनान्तरमस्ति। संयोगित्वमनिवेश्य सम्बन्धित्वनिवेशे गगनाभावादौ प्रतियोगितासम्बन्धेन स्वरूपसम्बन्धात्मकसर्वमूर्तद्रव्यसम्बन्धविशिष्टत्वस्य सत्त्वादतिव्याप्तिः। नच सम्बन्धित्वनिवेशेऽपि गगनाभावादीनां तादृशस्वरूपसम्बन्धप्रतियोगित्वेऽपि अनुयोगितासम्बन्धेन तादृशसम्बन्धविशिष्टत्वस्य लक्षणत्वाङ्गीकारेण गगनाभावादावतिव्याप्त्यभावेन तादृशसंयोगित्वस्य वैफल्यं दुर्वारमेवेति वाच्यम्, सर्वमूर्त-

द्रव्याणां विषयतानिरूपकत्वसम्बन्धेन ज्ञानेषु वर्तमानतया विषयतासम्बन्धानुयोगित्वमादाय ज्ञानेऽतिव्याप्तेः । अतः सर्वमूर्तद्रव्यसंयोगित्वमेव विभुत्वमिति सिद्धम् ॥

मूर्तत्वमिति * परिच्छिन्नपरिमाणवत्त्वं अपकर्षाश्रय परिमाणवत्त्वम् । घटादिपरिमाणाना पर्वतादिपरिमाणापेक्षया पर्वतादिपरिमाणाना गगनादिपरिमाणापेक्षयाऽपकृष्टत्वेन घटादिमूर्तेषु समन्वयः । परिच्छिन्नत्वानिवेशे गगनादिविभुनिष्ठपरममहत्त्वपरिमाणमादाय गगनादावतिव्याप्तेः । नच सजातीयपरिमाणयोरेवोत्कर्षापकर्षसद्भावेन परमाणुपरिमाणस्य द्व्यणुकपरिमाणापेक्षयाऽपकृष्टत्वाभावेन परमाणुष्वव्याप्तिरिति वाच्यम्, परममहत्परिमाणभिन्नपरिमाणाश्रयत्वस्यैव तदर्थत्वात् । परमाणुष्वपि तादृशपरिमाणभिन्न अणुत्वपरिमाणमादाय घटादौ तादृशपरिमाणभिन्नं मध्यमपरिमाणमादाय च समन्वयसम्भवात् ॥ लाघवाल्लक्षणान्तरमाह * क्रियावत्त्वमिति * ननु परिच्छिन्नपरिमाणवत्त्वक्रियावत्त्वलक्षणयोः "उत्पन्नं द्रव्य क्षणमगुण निष्क्रिय च तिष्ठति" इति न्यायेन उत्पत्तिकालावच्छेदेन घटादावभावादव्याप्तिरिति वाच्यम्; लक्ष्यतावच्छेदकसमनियतत्वस्यैव लक्षणलक्षणत्वेन यदा कदापि यावल्लक्ष्येषु लक्षणसत्त्वस्यैवावश्यकतया सर्वकालावच्छेदेन लक्षणासत्त्वेऽप्यनुपपत्तेरभावात् । नच तथाप्युत्पन्नविनष्टघटे निरुक्तलक्षणद्वयाभावेन अव्याप्तिर्दुर्वारेति वाच्यम्, तादृशपरिमाणवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्व क्रियावद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वयोः लक्षणत्वाङ्गीकारेण पृथिवीत्वादिजातिमादाय लक्षणसमन्वयसम्भवेन अव्याप्त्यभावात् । क्रियावत्त्वादिक जातिमत्त्वादिकं च समवायसम्बन्धेन ग्राह्यम्, अन्यथा कालादावतिव्याप्तेः * विभुत्वादेवात्म-

वदिति * शब्दसमवायिकारणस्य विभोर्गगनस्य नित्यत्वानङ्गीकारे कालान्तरे (गगननाशदशायां) सर्वदिगवच्छेदेन शब्दसाक्षात्कारानुपपत्तिः, (गगनपरम्पराङ्गीकारे गौरवप्रसङ्गः) नित्यत्वन्तु ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वमेव। सर्वदाप्यतीतादिव्यवहारान्यथानुपपत्त्या काले संततप्राच्यादिव्यवहारसम्भवेन दिशि च नित्यत्वमङ्गीकार्यम। पूर्वोक्तयुक्तिभिरेवैकत्वविभुत्वेऽप्यङ्गीकार्ये। नचाकाशकालदिशां प्रलयपर्यन्तावस्थानमेवाङ्गीक्रियते, अतो नोक्तानुपपत्तिरिति वाच्यम. न च प्रलयः खण्डप्रलयो महाप्रलयो वा। नाद्यः, खण्डप्रलयोत्तरभाविसृष्टिदशायामाकाशाद्यभावेन तदा शब्दसाक्षात्काराद्यनुपपत्ति। न द्वितीयः, नित्यानां घटत्वपटत्वादिजातीनां प्रलयदशायामाश्रयान्तराभावेन तदधिकरणनिर्वाहाय "नित्येषु कालिकायोग इति न्यायेन कालातिरिक्तनित्येषु तदधिकरणताया अनुपपत्त्या च सर्वाधारः कालः" इति न्यायेन तदापि कालस्य नित्यत्वेनाङ्गीकर्तव्यतया विनिगमनाविरहेणाकाशदिशोरपि ध्वंसाप्रतियोगित्वरूपनित्यत्वस्याङ्गीकर्तव्यत्वात्। न च नित्यत्वेन व्यवह्रियमाणानां गगनपरमाणुसामान्यादीनां सर्वेषामपि प्रयोजनाभावेन प्रलयपर्यन्तनित्यत्वमेवाङ्गीक्रियते, न कस्यापि ध्वंसाप्रतियोगित्वरूपं नित्यत्वमिति वाच्यम्, प्रलयपर्यन्तं नित्यानां पदार्थानां प्रलयदशायामनित्यत्वाङ्गीकारे प्रयोजनाभावेन नित्यत्वाङ्गीकरणस्यैव समुचितत्वादित्यलम्॥

इदानीं प्रसक्तानुप्रसक्त्या भूतत्वं निरूप्यते। भूतत्वं च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्, तच्च बहिरिन्द्रियजन्यप्रत्यक्षविषयविशेषगुणाश्रयत्वमिति फलितम्, पृथिव्यप्तेजोवाय्वाकाशपञ्चकं भूतपदवाच्यम्, त्वक्चक्षुरादीन्द्रियजन्यप्रत्यक्षविषयीभूतं रूपरसगन्ध-

स्पर्शचतुष्टयान्यतमं विशेषगुणमादाय पृथिव्यादिचतुष्टये श्रोत्रेन्द्रिय-जन्यप्रत्यक्षविषयशब्दात्मकविशेषगुणमादाय गगने च समन्वयो ग्राह्य । बहिःपदाभावे सुखदुःखज्ञानेच्छादिरूपविशेषगुणाश्रयत्व-मादायात्मन्यतिव्याप्तिः (मनोभिन्नेन्द्रियत्वं बहिरिन्द्रियत्वम्) ननु विशेषपदाभावे बहिरिन्द्रियग्राह्यगुणत्वेन कालपिण्डसंयोगादिरूप सामान्यगुणमादाय कालादावतिव्याप्तिर्वक्तव्या, सा च न घटते, कालपिण्डसंयोगादेः बहिरिन्द्रियाग्राह्यत्वादिति विशेषपदं व्यर्थ-मिति चेन्नैवम्, निष्कृष्टलक्षणेऽपि परमाणुगतानां बहिरिन्द्रियगता-नां च विशेषगुणानां बहिरिन्द्रियाग्राह्यतया (अनुमानगम्यतया) परमाणुषु श्रोत्रभिन्नबहिरिन्द्रियेषु च अव्याप्तिवारणाय बहिरिन्द्रिय जन्यप्रत्यक्षविषयतावच्छेदकजातिमत्त्वेन विशेषगुणस्य विशेषणीय तया रूपत्वरसत्वादितादृशजातिमद्विशेषगुणाश्रयत्वमादाय परमा-ण्वादिषु समन्वयस्यैव विशेषपदाभावे तुल्ययुक्त्या संयोगत्वादिरूप-तादृशजातिमत्कालपिण्डसयोगादिरूपसामान्यगुणाश्रयत्वमादाय कालादावतिव्याप्तिः, तद्वारणाय विशेषपदस्य सार्थक्यमवधेयम् ॥

**मू * कालं लक्षयति * अतीतेति * सर्वाधारः कालः, सर्वकार्यनिमित्तकारणम् । दिशो लक्षणमाह * प्राच्या-दीति * दिगपि कार्यमात्रनिमित्तकारणम् ॥**

व्या * कालमिति * कालविशेष्यकलक्षणप्रकारकज्ञानानुकूला तीतादिशब्दाभिन्नव्यापारानुकूलकृतिमानन्नम्भट्टइति बोधः । आदिपदेनानागतादिकालपरिग्रहः । अतीतत्वञ्च वर्तमानध्वंस-प्रतियोगित्वम् । अनागतत्वञ्च (भविष्यत्त्वम्) वर्तमानप्राग-भावप्रतियोगित्वम् । वर्तमानत्वञ्च शब्दप्रयोगाधिकरणकाल-

वृत्तित्वम् । ननु व्यवहारव्यवहर्तव्यस्यापि कारणतया घटोऽतीतइत्यादिव्यवहारहेतुत्वस्य व्यवहर्तव्ये घटादौ सत्त्वादतिव्याप्तिरितिचेन्न, अतीतादिव्यवहारत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकीभूतकिञ्चिद्धर्मावच्छिन्नमुख्यविशेष्यतानिरूपितप्रकारतानिरूपितप्रकारतानिरूपितप्रकारतानिरूपितप्रकारताश्रयत्व कालस्य निरुक्तं लक्षणं वक्तव्यम्, अतीतोघट इत्यादिव्यवहारं प्रति (अतीतो घट) शब्दप्रयोगाधिकरणकालवृत्तित्वमप्रतियोगी-घट इति ज्ञानस्य कारणत्वेन तादृशव्यवहारकारणतावच्छेदकीभूतघटत्वावच्छिन्नमुख्यविशेष्यतया परम्परयानिरूपितप्रकारताश्रयत्वस्य कालएवसत्त्वान्नातिव्याप्ति । अत्र एकैकप्रकारताया हानौ (न्यूनौ) करणे क्रमेण वृत्तित्वध्वंसप्रतियोगित्वेष्वतिव्याप्तिः विज्ञेया । विशेष्यताया मुख्यत्वानिवेशे ध्वंसनिष्ठप्रकारतानिरूपिता घटत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतासमानाधिकरणा प्रतियोगित्वनिष्ठविशेष्यतामादाय कालत्वशब्दप्रयोगाधिकरणत्वादावतिव्याप्त्यापत्ते. (प्रकारत्वा [समानाधिकरणत्व] नवच्छिन्नत्व मुख्यत्वम्) नच सूर्यपरिस्पन्दादिरूपकालोपाधिमादायैव तादृशव्यवहारसम्भवात् अतिरिक्तस्य महाकालस्य स्वीकारे प्रयोजनाभाव इति वाच्यम्, अनुगतविषयमन्तरा अनुगतप्रतीत्यसम्भवेन अननुगतखण्डकालातिरिक्तस्यानुगतस्य कालस्य अङ्गीकरणीयत्वात् । लक्षणान्तरमाह * सर्वाधारइति * कालिकसम्बन्धेन सर्वाधारत्वं कालस्य लक्षणम्, अन्यथा विषयतासम्बन्धेन सर्वाधारत्वस्येश्वरीयप्रत्यक्षेपि-सत्त्वादतिव्याप्त्यापत्ते । एतेन विभिन्नकालिकयोर्विषयत्वान्यसम्बन्धेनाधाराधेयभावविरह इति न्यायेन सूर्यपरिस्पन्दादिखण्डकालेषु कालिकसम्बन्धेन सर्वाधारत्वविरहादतिप्रसङ्गा भावेपि न क्षतिः ।

प्रागुक्तरीत्या सार्थकतासंभवात् । कालिकसम्बन्धेन सर्वाधारत्वं लक्षणम् सर्वकार्यनिमित्तकारणत्वं तु प्रमाणाप्रन्यासायत्यवधेयम् ॥

दिशो लक्षणमाहेति*षष्ठ्या विशेष्यतानिरूपकत्वम्, द्वितीयायाः प्रकारतानिरूपकत्वम्, ब्रूञ्धातोः ज्ञानानुकूलव्यापारः, आख्यातस्य कृतिश्चार्थः, व्यापारस्य कृतावनुकूलतासम्बन्धेन कृतेरन्नम्भट्टे समवायसम्बन्धेन चान्वयः। तथाच दिग्विशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमानन्नम्भट्ट इति शाब्दबोधः। न चैव दिशं लक्षयति दिशो लक्षणमाहेति वाक्यजन्ययोश्शाब्दबोधयोरैकरूप्यापत्तिरिति वाच्यम्, लक्षयतीत्यत्र धातुना प्रकारतासम्बन्धेन लक्षणविशिष्टज्ञानानुकूलव्यापारो बोध्यते। लक्षणमाहेत्यत्र तु द्वितीयायाः प्रकारित्वं, तस्य धात्वर्थैकदेशज्ञाने प्रकारतया अन्वयः इति भेदः ॥ उदयाचलसन्निहितमूर्तावच्छिन्ना दिक् प्राची, अस्ताचलसन्निहितमूर्तावच्छिन्ना दिक्प्रतीची, मेरोःसन्निहितमूर्तावच्छिन्ना दिगुदीची, मेरोर्व्यवहितमूर्तावच्छिन्ना दिगवाची इत्येव प्राच्यादिपदानामर्थो वक्तव्यः, नतु उदयाचलसन्निहितादिक् प्राची, अस्ताचलसन्निहितादिक्प्रतीचीत्यादिरीत्या, तथात्वे दिश एकत्वेन उदयाचलसन्निहितायाः वास्ताचलस्यापि सन्निहितत्वेन तादृशसन्निहितत्वादेर्भेदकत्वानुपपत्तेः। अतो मूर्तरूपावच्छेदकभेदादेव तासां भेदो वक्तव्यः। लक्षणन्तु काललक्षणतः किञ्चिद्भिद्यते, तथाहि, अत्र व्यवहारस्य ज्ञानस्य च प्राचीदिग्विशिष्टो घटइत्यादिरूपत्वेन प्राच्यादिव्यवहारनिष्ठकार्यतानिरूपितकारणतावच्छेदकीभूतकिञ्चिद्धर्मावच्छिन्नमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वपर्यन्तमेव निष्कृष्टलक्षणमत्र ग्राह्यम्, नतु काललक्षण इव तादृशविशेष्य-

तयापरम्परया निरूपितताद्दशप्रकारताश्रयत्वपर्यन्तं लक्षणं, असम्भवप्रसङ्गादिति ज्ञेयम् ॥

**: * आत्मनो लक्षणमाह * ज्ञानेति * आत्मानं विभजते * स द्विविध इति * परमात्मनो लक्षणमाह * तत्रेति * नित्यज्ञानाधिकरणत्वमीश्वरत्वम् ॥**

तथा * निष्कृष्टमात्मलक्षण तर्कसङ्ग्रहसर्वस्वे निरूपितमेव ( इतरवारकपर्याप्त्यादिनिवेशेन पृथिवीलक्षणवद्बोध्यम् ) आत्मान विभजत इति * आत्मविशेष्यकपरम्पराविरुद्धसामान्यधर्मव्याप्यविशेषधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमानत्सम्भट्ट इति बोधः । एवमन्तरत्रापि विभजत इत्यत्र ज्ञेयम् * नित्यज्ञानेति * ज्ञानाधिकरणत्वस्य जीवस्याधारणेयेन नित्यपदमुपात्तम् । नच, आत्मनः ज्ञानाधिकरणत्वस्य लक्षणत्वे आत्मनो विज्ञानरूपत्वबोधिन्या "नित्यविज्ञानमानन्दब्रह्म इति" श्रुत्या विरोध इति वाच्यम्, अर्शआद्यजन्तत्वाङ्गीकारेण नपुंसकत्वानुरोधेन आनन्द ब्रह्मणो विद्वानिति श्रुत्यनुरोधेन आनन्दपदस्यानन्दवदर्थकत्वमिव यस्सर्वज्ञस्सर्वविदिति श्रुत्यनुरोधेन विज्ञानपदस्यापि ज्ञानाश्रयार्थकत्वस्वीकारे बाधकाभावात् । अत्रानन्दपदं भारापगमे सुखीसवृत्तोऽहमित्यत्र सुखपदमिव दुःखाभावलाक्षणिकम्, नात ईश्वरे सुखानङ्गीकारेऽपि क्षतिः । नवीनमते ईश्वरेऽपि नित्यसुखमङ्गीक्रियते ॥

**मू * नन्वीश्वरसद्भावे किं प्रमाणम्, न तावत्प्रत्यक्षं, तद्धि बाह्यमान्तरं वा, नाद्यः अरूपिद्रव्यत्वात्, न द्वितीयः आत्मसुखदुःखादिव्यतिरिक्तत्वात्, नाप्यनुमानं लिङ्गाभावा-**

**दिति चेन्न। अङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवत् इत्यनुमानस्यैव प्रमाणत्वात्। उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम्, उपादानं समवायिकारणम्। सकलपरमाण्वादिसूक्ष्मवस्तुदर्शित्वात्सर्वज्ञत्वम्। यस्सर्वज्ञस्ससर्वविदित्यागमोऽपि तत्र प्रमाणम्। जीवस्य लक्षणमाह * जीवइति * सुखाद्यधिकरणत्वं जीवलक्षणम्॥**

व्या * अरूपिद्रव्यत्वादिति * ईश्वरो न बाह्यप्रत्यक्षविषयः रूपरहितत्वे सति द्रव्यत्वात् इत्यनुमानप्रयोगोऽत्र ग्राह्यः, बाह्यप्रत्यक्ष प्रत्युद्भूतरूपस्य कारणत्वेन नाप्रयोजकशङ्कावकाशः * आत्मसुखादीति * ईश्वरो न मानसप्रत्यक्षविषयः आत्मसुखदुःखादिव्यतिरिक्तत्वात् इत्यनुमानमत्रोपदर्शितम्। जीवात्मबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नानामेव अहं जानामि सुखी दुःखी इच्छामि द्वेष्मि प्रयते इत्यादिव्यवहारैः मनइन्द्रियग्राह्यतया तद्भिन्नस्य मानसप्रत्यक्षविषयता दूरापास्तेति भावः * अङ्कुरादिकमिति * अत्र अङ्कुरादेः पक्षत्वम्। सकर्तृकत्वस्य (कर्तृजन्यत्वस्य साध्यत्वम्। कार्यत्वस्य हेतुत्वं ज्ञेयम्। तथाच अङ्कुरादिकर्तृत्वेनेश्वरसिद्धिः। केचन अत्रत्यकर्तृपदस्य कर्तृत्वा (कृत्य) र्थकत्वमङ्गीकृत्य तादृशाकृतिः क्वचिदाश्रया गुणत्वात् रूपवदित्यनुमानद्वयेनेश्वरं साधयन्ति। कार्यत्वावच्छिन्नं प्रति कृतित्वावच्छिन्नस्य हेतुत्वेन नाप्रयोजकशङ्कावकाशः॥

ननु क्षितित्वरूपसामान्यधर्मावच्छिन्नस्य पक्षत्वमनङ्गीकृत्य अङ्कुरत्वरूपविशेषधर्मावच्छिन्नस्य पक्षत्वाङ्गीकारे किं बीजमिति **चेन्न,**

क्षितित्वावच्छिन्नस्य पक्षत्वस्वीकारे पक्षतावच्छेदकावच्छेदेन साध्यते वा तत्सामानाधिकरण्येन साध्यते वा, नाद्यः पृथिवीपरमाण्वन्तर्भावेण बाधनिश्चयस्य प्रतिबन्धकत्वात्, अवच्छेदकावच्छेदेनानुमितिं प्रति सामानाधिकरण्येन बाधनिश्चयस्य प्रतिबन्धकत्वात् । न द्वितीय, घटाद्यन्तर्भावेण साध्यसिद्धेः प्रतिबन्धकत्वात्, पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति सिद्धिमात्रस्य (अवच्छेदकावच्छेदेन सामानाधिकरण्येन च सिद्धेः) विरोधित्वात् । अङ्कुरत्वावच्छिन्नस्य पक्षत्वे तु अवच्छेदकावच्छेदेन सामानाधिकरण्येन साधनेऽपि वा न क्षतिः । ननु कृतिमत्त्वमेव लाघवात्कर्तृत्वं भवतु चिकीर्षादिघटितस्य तत्त्वे प्रयोजनाभाव इति चेन्न, जानाति इच्छति यतते इति क्रमसिद्धं कार्यकारणभावं (कृतिं प्रतीच्छायाः इच्छां प्रति ज्ञानस्य च कारणत्वं) सूचयितुमेव तथोक्तिः । ईश्वरसाधकं प्रमाणान्तरं (शब्दप्रमाणं) दर्शयति * यस्सर्वज्ञइति * सर्वज्ञः सर्वत्वेन सर्वविषयकज्ञानवान्, सर्ववित् तत्तद्व्यक्तित्वेन सर्वविषयकज्ञानवान् इत्यर्थः (विशेषरूपेण ज्ञानस्य विदधात्वर्थत्वात्) । लक्षणमाहेति * अत्र लक्षणपदस्य स्वरूपबोधकत्वमेव, विभुत्वादेर्जीवस्यालक्षणत्वात् । दीपिकायां जीवलक्षणमुच्यते * सुखाद्यधिकरणत्वमिति * सुखदुःखद्वेषधर्माधर्मसंस्कारेषु प्रत्येकमन्यतमस्याधिकरणत्वं (ईश्वरावृत्ति) जीवलक्षणं भवतीति भावः (नच शिशुषु द्वेषधर्माधर्माणामभावादव्याप्तमिदं लक्षणमिति वाच्यम्, तत्तदधिकरणवृत्त्यात्मत्वव्याप्यजातिमत्त्वस्य लक्षणत्वात् । नचेश्वरत्वस्य जातित्वाभावेनात्मत्वव्याप्यजातिमत्त्वनिवेशेनैव ईश्वरे दोषवारणसम्भवात्तत्तदधिकरणवृत्तित्वस्य वैफल्यमिति वाच्यम्, जीवत्वस्यैवात्मत्वव्याप्यजातिरूपतया व्यावहारिकलक्षणत्वेनास्यापीष्ट-

त्वात् । नच जीवत्वत्वेनोल्लिख्यमानजीवत्वस्यैव व्यावहारिक-लक्षणत्वेन आत्मत्वव्याप्यजातित्वेन गृह्यमाणस्य जीवत्वस्यातथा-त्वेन तस्यापि तथात्वेनेष्टापत्तिकथनमनुचितम्। अन्यथा पृथिव्यादि-जातिघटितलक्षणानामपि व्यावहारिकत्वापत्तिः, न च तत्रापीष्टा-पत्तिस्सम्भवति गन्धवत्त्वघटितस्य तस्य व्यावर्तकत्वेनाङ्गीकृतत्वात् इति वाच्यम्, तस्य व्यावहारिकत्वाभावेऽपि तत्तदधिकरणावृत्तित्व-घटितस्य तस्यैव निर्दुष्टत्वसम्भवेन तस्यापीष्टत्वात्, सुखाद्यधिकरण-त्वस्य जीवलक्षणस्य यथाश्रुताभिप्रायेण ग्रन्थकृताऽभिहितत्वान्न-काप्यनुपपत्तिः)

मू * ननु मनुष्योऽहं ब्राह्मणोऽहमित्यादौ सर्वत्राहंप्रत्यये शरीरस्यैव विषयत्वाच्छरीरमेवात्मेति चेन्न, शरीरस्यात्मत्वे करपादादिनाशे शरीरनाशादात्मनोऽपि नाशप्रसङ्गात् । नापीन्द्रियाणामात्मत्वम्, योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामीत्यनुसन्धानाभावप्रसङ्गात्, अन्यानुभूतेऽर्थेऽन्यस्यानु-सन्धानायोगात्, तस्माद्देहेन्द्रियव्यतिरिक्तो जीवस्सुखादिवै-चित्र्यात्प्रतिशरीरं भिन्नः । स च न परमाणुः, सर्वशरीर-व्यापिसुखाद्यनुपलब्धिप्रसङ्गात् । न मध्यमपरिमाणः, तथा सत्यनित्यत्वप्रसङ्गेन कृतहानाकृताभ्यागमप्रसङ्गात् । तस्मा-न्नित्यो विभुर्जीवः ॥

व्या * मूले जीवस्त्विति * न च शरीरभेदेन जीवभेदाङ्गीकारे ऽवयवोपचयापचयप्रयुक्तशरीरभेदेनाप्यात्मभेदप्रसङ्गः, दीर्घकालानु-भवनीयस्य प्रारब्धकर्मणः अल्पकालेनानुभवार्थं योगिप्रभृतिस्वी-

कृतकायव्यूहभेदेनाप्यात्मभेदप्रसङ्ग इति वाच्यम्, समानकालिकयोगजधर्माजन्यशरीरभेदेन आत्मभेदस्यैव जीवस्तु प्रतिशरीरं भिन्न इति वाक्येन प्रत्येतव्यत्वात्। शरीरे समानकालिकत्वयोगजधर्माजन्यत्वविशेषणयोः प्रयोजनं क्रमेण पूर्वोक्तदोषवारणमेवेति ज्ञेयम्। तथा च एतच्छरीरावच्छिन्नभोगवान् समानकालिकयोगजधर्माजन्यतच्छरीरावच्छिन्नभोगवद्भिन्नः विलक्षणसुखदुःखादिमत्त्वात् इत्याद्यनुमानैः प्रतिशरीरं जीवभेदस्साध्यः। शरीरात्मवादं प्रदर्शयति * ननु मनुष्य इति * अयं भावः, शरीरभिन्नस्य अहंपदार्थस्यात्मत्वे तत्र प्रतीयमानानां शरीरधर्माणां मनुष्यत्वब्राह्मणत्वगौरत्वपीनत्वादिधर्माणामनुपपत्तिः. अतस्तादृशधर्माश्रयाभिन्न एवात्मेति वक्तव्यम्, तादृशधर्माश्रयश्च शरीरमेवेति सिद्धम् इति ॥

शरीरात्मवादं खण्डयति * शरीरस्यात्मत्व इति * अयं भावः, अवयवनाशादवयविनाशस्य सर्ववादिसिद्धतया शरीरस्यात्मत्वे तदवयवकरपादादीनां नाशे अवयविभूतशरीरस्यापि नाशप्रसङ्गेन तदभिन्नत्वेनात्मनोऽपि नाशप्रसङ्ग इति ॥

इन्द्रियात्मवादं खण्डयति * नापीति * इन्द्रियात्मवादिमते परस्परभिन्नानां तत्तदिन्द्रियाणामेव तत्तदर्थग्राहकत्वस्य अङ्गीकृततया अगत्या आत्मानन्त्यमङ्गीकार्यमिति तन्मते गौरवदोष एको वर्तते, तन्मते दर्शनस्पर्शनकर्त्रोः भेदेन एकत्र दर्शनाश्रयत्वस्पर्शनाश्रयत्वप्रतिपादकस्य योऽहमद्राक्षं सोऽहं स्पृशामीत्यनुसन्धानस्य अनुपपत्तिश्चापरो दोषः। इतश्च चैत्रेणानुभूतस्य वस्तुनो मैत्रेण स्मरणापत्त्या अनुभवानुसन्धानयोस्सामानाधिकरण्यनियम

स्याङ्गीकर्तव्यत्वेन विभिन्नाधिकरणगतस्य तादृशानुसन्धानस्यानुपपत्तिः अत इन्द्रियभिन्न एवात्मेति नियतमङ्गीकार्यमिति भावः। नन्वात्मनश्शरीरेन्द्रियाद्यनात्मकत्वेऽपि शरीरभेदेन जीवभेदाङ्गीकारे किं बीजमित्यत आह * सुखादिवैचित्र्यादिति * जीवात्मनामनेकत्वाभावे केषाचित्सुखमितरेषां दुःखमपरेषां द्वेषः अन्येषामैश्वर्यं कतिपयेषां निर्धनत्वादिधर्मभेदाभावप्रसङ्ग इत्यनेकत्वं जीवात्मनामङ्गीकार्यम् * स च न परमाणुरिति * जीवात्मस्त्वणुत्वपरिमाणाङ्गीकारे तस्य शरीरे कचिद्देश एव स्थितेरङ्गीकर्तव्यतया करचरणादिसर्वावयवावच्छेदे सुखदुःखाद्यनुपलब्धिप्रसङ्ग इति भावः। ननु मध्यमपरिमाणाङ्गीकारेणैव निरुक्तानुपपत्तेर्वारणात् (सर्वावयवावच्छेदेन सुखदुःखानुपलम्भस्य वारणात्) विभुत्वपरिमाणाङ्गीकारे बीजाभाव इत्याशङ्कायामाह * न मध्यमेति * यन्मध्यमपरिमाणवत्तदनित्यमितिव्याप्त्या मध्यमपरिमाणवतस्तस्यानित्यत्वस्याङ्गीकरणीयतया कर्मकर्तुरात्मनो नष्टत्वेन तत्कृतयागादिजनितधर्मस्य हानं तदनुविद्यमाने आत्मान्तरे एतदसम्पादितधर्मावाप्तिश्च प्रसज्येतेति भाव.। अतो नित्यत्वविभुत्वेअङ्गीकार्ये। ननु अल्पस्य दीपस्येव अणुत्वपरिमाणवतोऽप्यात्मन. प्रभाप्रसरणाङ्गीकारेण सर्वशरीरावच्छेदेनापि सुखादिसाक्षात्कारस्य न क्षतिः अतोऽणुत्वमेवात्मनोऽङ्गीक्रियत इति वाच्यम्, कायव्यूहस्थले तादृशप्रभाप्रसरणाङ्गीकारस्यायुक्ततया तस्याणुत्वाङ्गीकरणस्यायुक्तत्वात्। विभुत्वाङ्गीकारे तु कायव्यूहेऽप्यात्मनोऽनुस्यूततया नानुपपत्तिः। तथाच जीवात्मनां अनेकत्वं नित्यत्वं विभुत्वंच नियतमङ्गीकर्तव्यमिति सिद्धम्॥

मू * मनसो लक्षणमाह * सुखेति * स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम् । तद्विभजते * तच्चेति * एकैकस्यात्मन एकैकं मन इत्यात्मनामनेकत्वान्मनसोऽप्यनेकत्वमित्यर्थः * परमाणुरूपमिति * मध्यमपरिमाणवत्त्वेऽनित्यत्वप्रसङ्गादित्यर्थः । ननु मनो विभु स्पर्शरहितत्वे सति द्रव्यत्वादाकाशादिवदिति चेन्न, मनसो विभुत्वे आत्ममनस्संयोगस्यासमवायिकारणस्याभावात् ज्ञानानुत्पत्तिप्रसङ्गः। न च विभुद्वयसंयोगोऽस्त्विति वाच्यम्, तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात । पुरीतद्व्यतिरिक्तस्थले आत्ममनस्संयोगस्य सर्वदा विद्यमानत्वात् । अणुत्वे तु यदा मनः पुरीतत्प्रविशति तदा सुषुप्तिः, यदा निस्सरति तदा ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः ॥

व्या * इन्द्रियत्वघटितलक्षणापेक्षया मनसो लघुलक्षणमाह * स्पर्शरहितत्वे सतीति * क्रियावत्त्वमात्रोक्तौ घटादौ क्रियावत्त्वानुपादाने आकाशादौ चातिव्याप्तिरित्युभयोपादानम् * एकैकस्येति * आत्मना सर्वेषामप्येकस्य मनसोऽङ्गीकारे तस्याणुत्वेन युगपत्सर्वेन्द्रियैः स्संयोगाभावेनैकस्य ज्ञानदशायामन्यस्य ज्ञानानुत्पत्तिप्रसङ्गेन आत्मभेदेन मनोभेदोऽङ्गीकार्यः * द्रव्यत्वादिति * द्रव्यत्वमात्रस्य हेतुत्वे घटाद्यन्तर्भावेण व्यभिचारः, स्पर्शरहितत्वमात्रोपादाने गुणान्तर्भावेण व्यभिचार इत्युभयोपादानम् । ननु विभुत्वाभाववति घटादावपि उत्पत्तिकालावच्छेदेन स्पर्शरहितत्वस्य द्रव्यत्वस्य च सत्त्वाद्व्यभिचार इति वाच्यम्, तत्र निरवच्छिन्नस्वरूपसम्बन्धेन

स्पर्शाभावस्य हेतुत्वात्। न च उत्पन्नविनष्टघटान्तर्भावेण व्यभिचार इति वाच्यम्, तस्यानङ्गीकारात्, तस्याङ्गीकारे तु स्पर्शाधिकरणवृत्तिद्रव्यत्वव्याप्यजात्यभावस्य हेतुत्वं ज्ञेयम्। अतो न व्यभिचारः * पुरीतदिति * पुरीतद्व्यतिरिक्तदेशावच्छिन्नात्ममनस्संयोगस्यैव ज्ञानकारणत्वाभ्युपगमादिति भावः * मनसो विभुत्व इति * विभुद्वयसंयोगाप्रसिद्ध्या ज्ञानासमवायिकारणस्यात्ममनस्संयोगस्याभावेन कदापि ज्ञानानुत्पत्तिप्रसङ्ग इति भावः॥

**मू॰ * रूपं लक्षयति * चक्षुरिति * संख्यादावतिव्याप्तिवारणाय मात्रपदम्। रूपत्वेऽतिव्याप्तिवारणाय गुणपदम्॥**

व्या॰ * चक्षुरितीति * स्वरूपसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन चक्षुर्मात्रग्राह्यत्वविशिष्टगुणत्वं रूपस्य लक्षणम्। त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वम् इत्येतावत्पर्यन्तं लक्षणं सप्रयोजनं तर्कसंग्रहसर्वस्वे निरूपितमेव। नन्वेवमपि प्रभाघटसंयोगेऽतिव्याप्तिः, तथाहि, त्वगिन्द्रियजन्यं यत्प्रत्यक्षं प्रभासंयुक्तो घट इति प्रत्यक्षं न भवति, किन्तु उष्णस्पर्शवान् वह्निः इति प्रत्यक्षं भवति तादृशप्रत्यक्षाविषयत्वस्य प्रभासंयुक्तो घट इति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वस्य गुणत्वस्य च तत्र सत्त्वादिति चेन्न, अत्र गुणपदस्य विशेषगुणपरत्वात् प्रभाघटसंयोगे विशेषगुणत्वाभावान्नातिव्याप्तिः। नचैवं सति विशेषगुणत्वदलेनैव संख्यादावतिव्याप्तिवारणात् मात्रपदस्य संख्यादावतिव्याप्तिवारकस्य (त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वदलस्य) वैयर्थ्यं दुर्वारमेवेति वाच्यम्। इदं द्रवत्ववदितिं

चाक्षुषप्रत्यक्षविषयत्वविशेषगुणत्वयोः सत्त्वात् सांसिद्धिकद्रवत्वे अतिव्याप्तिवारणाय तत्सार्थक्यात् । मात्रपदनिवेशे तु तत्र इदं द्रव्यमिति त्वाचप्रत्यक्षविषयत्वस्यैव सत्त्वान्नातिव्याप्तिः । नचैवमपि परमाणुरूपे चक्षुरिन्द्रियजन्यप्रत्यक्षाविषयत्वाभावेन तत्राव्याप्तिवारणाय त्वगिन्द्रियजन्यप्रत्यक्षाविषयतानवच्छेदकीभूता चक्षुरिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकीभूता या जातिः तद्वत्त्वमिति जातिघटितलक्षणस्य कर्तव्यतया प्रभाघटसंयोगत्वस्य त्वाचप्रत्यक्षविषयतानवच्छेदकत्वेऽपि जातित्वाभावेन संयोगत्वजातेश्चाक्षुषप्रत्यक्षविषयतावच्छेदकत्वेऽपि घटसंयुक्तः पट इत्यादित्वाचप्रत्यक्षविषयतावच्छेदकत्वेन च संयोगत्वमादाय प्रभाघटसंयोगादावतिव्याप्त्यसंभवेऽपि रूपत्वादिजातावपि तादृशजातिसत्त्वाभावेनातिव्याप्तिवारणसंभवेन रूपत्वादावतिव्याप्तिवारकस्य गुणपदस्य वैयर्थ्यं दुर्वारमेवेति वाच्यम् । इदं सुवर्णमिति प्रत्यक्षस्य त्वगिन्द्रियजन्यत्वाभावेन चक्षुरिन्द्रियजन्यत्वेन च तादृशजातिपदेन सुवर्णत्वजातिमादाय सुवर्णेऽतिव्याप्तिवारणाय गुणपदस्य सार्थक्यात् तन्निवेशे तत्र गुणत्वाभावान्नातिव्याप्तिः (अत्र विशेषगुणत्वदलावश्यकता नास्ति) ॥

नच त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चाक्षुषप्रत्यक्षविषयतावच्छेदकजातिमत्त्वे सति गुणत्वमित्येव लक्षणमुच्यते, न त्वाचप्रत्यक्षविषयतानवच्छेदकत्वं जातौ निवेश्यते, एतावतैव परमाणुरूपेऽव्याप्तिश्च वार्यते इति वाच्यम्, परमाणुसंयोगादौ चाक्षुषप्रत्यक्षविषयतावच्छेदकसंयोगत्वजातिमत्त्वस्य त्वाचप्रत्यक्षाविषयत्वगुणत्वयोश्च सत्त्वादतिव्याप्त्यापत्तेः । तन्निवेशे तु परमाणुसंयोगस्य त्वाचप्रत्यक्षाविषयत्वेऽपि घटपटसंयोगस्य त्वाच-

प्रत्यक्षविषयतया तदवच्छेदकत्वस्यैव संयोगत्वजातौ सत्त्वान्नाति-व्याप्तिः । त्वाचप्रत्यक्षविषयतानवच्छेदकत्वे सति चाक्षुषप्रत्यक्षविषयत्वे सति गुणत्वमित्युक्तौ परमाणुरूपेऽव्याप्तिः, अतश्चाक्षुषप्रत्यक्षविषयतावच्छेदकत्वस्य जातौ विशेषणत्वमङ्गीकार्यम् (नचत्वाचप्रत्यक्षविषयतानवच्छेदकीभूता चाक्षुषप्रत्यक्षविषयवृत्तिश्च या जातिः तादृशजातिमत्त्वस्यैव लक्षणत्वमुचितम्, चाक्षुषप्रत्यक्षविषयतावच्छेदकत्वपर्यन्तस्य निवेशे प्रयोजनाभाव इति वाच्यम । सत्ताजाति [गुणत्वजाति] मादाय रसादावतिव्याप्तिवारणाय तादृशविषयतावच्छेदकत्वपर्यन्तस्य सार्थक्यात्) । त्वाचप्रत्यक्षाविषयवृत्ति-चाक्षुषप्रत्यक्षविषयतावच्छेदकजातिमत्त्वनिवेशे तु त्वाचप्रत्यक्षाविषयपरमाणुसंयोगवृत्तिचाक्षुषप्रत्यक्षविषयतावच्छेदकसंयोगत्वजा - तिमादाय परमाणुसंयोगादावतिव्याप्तिः । त्वाचप्रत्यक्षविषयावृत्तिचाक्षुषप्रत्यक्षविषयतावच्छेदकजातिमत्त्वनिवेशे तु दोषाभावेन तस्य लक्षणान्तरत्वमेव युक्तमिति न कापि क्षतिः । नचैवमपि सर्पश्रुतशब्देऽतिव्याप्तिर्दुर्वारा, सर्पाणां चक्षुश्श्रवस्त्वेन त्वाचप्रत्यक्षविषयतानवच्छेदकचाक्षुषप्रत्यक्षविषयतावच्छेदकजातिमत्त्वगुणत्वयोस्तत्र सत्त्वादिति वाच्यम्, सर्पाणां चक्षुश्श्रोत्रेन्द्रिययोर्गोलकस्यैकत्वेऽपि इन्द्रियद्वयस्यैवाभ्युपगतत्वेन शब्दप्रत्यक्षे श्रोत्रेन्द्रियस्यैव कारणत्वेन शब्दत्वे श्रावणप्रत्यक्षविषयतावच्छेदकत्वस्यैव सत्त्वेन चाक्षुषप्रत्यक्षविषयतावच्छेदकत्वाभावेन न शब्दत्वजातिमादायातिव्याप्तिः ॥

**मू * नन्वव्याप्यवृत्तिनीलादिसमुदाय एव चित्ररूपमिति चेन्न, रूपस्य व्याप्यवृत्तित्वनियमात् । ननु चित्रपटे अवयवरूपस्यैव प्रतीतिरिति चेन्न, रूपरहितत्वेन पटस्याप्रत्यक्षत्व-**

**प्रसङ्गात्। नच रूपवत्समवेतत्वं प्रत्यक्षत्वप्रयोजकं गौरवात्। तस्मात्पटस्य प्रत्यक्षत्वान्यथानुपपत्त्या चित्ररूपसिद्धिः। रूपस्याश्रयमाह * पृथिवीति * आश्रयं विभज्य दर्शयति * तत्रेति ***

व्या * ननु चित्ररूपस्यैवासत्त्वेन रूपस्य सप्तविधत्वेन विभागोऽनुपपन्न इत्याह * नन्विति * एवकारोऽतिरिक्तचित्ररूप-व्यवच्छेदार्थकः। * रूपस्य व्याप्यवृत्तित्वनियमादिति * व्याप्य-वृत्तिजातीयधर्मस्य नाव्याप्यवृत्तित्वमिति नियमेन व्याप्यवृत्ति-रूपसामान्यसजातीयस्य नीलरूपादेरव्याप्यवृत्तित्वाङ्गीकरणस्य विरुद्धतया अव्याप्यवृत्तिर्नीलादिसमुदायस्य चित्ररूपत्वव्यवहारोऽ-नुपपन्न इति भावः। यदि चाव्याप्यवृत्तित्वं विहाय नीलरूपादिस-मुदायस्यैव चित्ररूपव्यवहारविषयत्वमङ्गीक्रियते तदा एकचित्ररूपो-त्पत्तिस्थले नीलादिनानारूपोत्पत्तेः एकचित्ररूपध्वंसप्रागभावस्थले अनेकरूपध्वंसप्रागभावानां अनेकरूपाणां चित्ररूपप्रतीतिविष-यत्वस्य च कल्पने गौरवं च प्रसज्येतेति न नीलादिसमुदायस्य चित्र-रूपत्वकल्पनेति भावः * ननु चित्रपट इति * यत्र चित्रः पटइति व्यवहारो जायते तत्र पटे समवायेन चित्ररूपं न भासते, किन्तु स्वाश्रयसमवेतत्वसम्बन्धेन अवयवगतनानारूपाण्येव विषयीभवन्ती-ति भावः। * रूपरहितत्वेनेति * विषयतासम्बन्धेन जायमानद्रव्य-चाक्षुषं प्रति समवायसम्बन्धेन रूपस्य कारणत्वस्याङ्गीकृततया समवायेन तत्र रूपानङ्गीकारे पटादेरप्रत्यक्षत्वप्रसङ्ग इति भावः। * रूपवत्समवेतत्वमिति * स्वाश्रयसमवेतत्वसम्बन्धेन रूपस्य प्रत्यक्ष-विषयताप्रयोजकत्वमङ्गीक्रियत इति भावः। * गौरवादिति *

साक्षात्सम्बन्धेन हेतुत्वकल्पनापेक्षया परम्परासम्बन्धेन हेतुत्वकल्पने कारणतावच्छेदकसम्बन्धकृतगौरवप्रसङ्ग इति भावः । * प्रत्यक्षत्वान्यथानुपपत्त्येति * द्रव्यप्रत्यक्षं प्रति रूपस्य कारणत्वेन तत्र पटे चित्ररूपानङ्गीकारे तत्प्रत्यक्षस्याभावप्रसङ्ग इति भावः । नचैवमेव चित्ररसचित्रगन्धावपि सिध्येतामिति वाच्यम्, रूपस्य द्रव्यचाक्षुषं प्रति कारणत्वस्येव रसगन्धयोः तत्कारणत्वाभावेन द्रव्यप्रत्यक्षान्यथानुपपत्तेरभावेन तत्सिद्धेर्दुर्निरूपत्वात् । अत एव सुरभ्यसुरभ्यवयवारब्धद्रव्यादिषु समवायेन गन्धाभावेऽपि स्वाश्रयसमवेतत्वसम्बन्धेन गन्धसत्त्वेऽपि न क्षतिः । * पृथिवीतीति * पृथिव्यामाश्रयभेदेन सप्तविध रूपं समवर्तीति द्रष्टव्यम्, एकत्र तदभावात् । * तत्रेतीति * ननु आश्रयभेदेन पृथिव्यामिव कालिन्दीगोदावरीगङ्गादिजलेषु नैल्यहरितत्वशौक्ल्यादिनानारूपाणामुपलभ्यमानत्वेन अभास्वरशुक्लं जलं इति कथनमनुपपन्नमिति चेन्न, रूपान्तराणामाश्रयोपाधिकत्वात्, नैसर्गिकस्य शुक्लरूपस्य सर्वत्रापि जले वियति विक्षेपणोपलभ्यमानत्वेन अनुपपत्तेरभावात् ॥

**मू * रसं लक्षयति * रसनेति * रसत्वेऽतिव्याप्तिवारणाय गुणपदम् । रसस्याश्रयमाह * पृथिवीति * आश्रयं विभज्य दर्शयति * तत्रेति * गन्धं लक्षयति * घ्राणेति * गन्धत्वेऽतिव्याप्तिवारणाय गुणपदम् ।**

व्या * सपरिष्कारे रसगन्धलक्षणे तर्कसङ्ग्रहसर्वस्वे निरूपिते पृथिव्यामप्याश्रयभेदेन षड्विधरसोपपत्तिः द्रष्टव्या एकत्र तदभावात् * तत्रेतीति * ननु जले मधुररस एवेत्यसङ्गतं, सागरे लवणरसस्य नारिकेले मधुरस्य जम्बीरादावम्लरसादेश्चानुभवेन पृथि-

व्यामिव जलेऽप्याश्रयभेदेन नानारसानामुपलभ्यमानत्वात् इति चेन्न, रसान्तराणामाश्रयौपाधिकत्वात् सर्वत्रापि हरीतक्यादिभक्षणेन स्वाभाविकस्य मधुररसस्यैवाभिव्यज्यमानत्वात् । ननु गन्धस्य पृथिवीमात्रवृत्तित्वकथनमप्यनुचित, सुरभिजलादावपि तस्योपलभ्यमानत्वादिति चेन्न, तत्र जलादौ पुष्पादिसम्बन्धस्य विद्यमानत्वेन स्वाश्रयसंयुक्तत्वसम्बन्धेनैव गन्धस्य विद्यमानत्वेन समवायेनासत्त्वेन च दोषाभावात् । रूपादिचतुष्टयलक्षणेषु तत्तदिन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकजातिमत्त्वमिति तादृशप्रत्यक्षविषयगुणविभाजकधर्मवत्त्वमिति वा लक्षणं वक्तव्यम्, गुणविभाजकधर्मवत्त्वघटितलक्षणे पृथक् गुणत्वदलप्रयोजनं नास्ति. ननु तादृशप्रत्यक्षविषयवृत्तिजातिमत्त्वमिति रीत्या, तथात्वे गुणत्वादिजातिमादायातिप्रसङ्गः, जातौ गुणत्वादिव्याप्यत्वनिवेशे तु गौरवप्रसङ्ग इति ॥

**मू. * स्पर्शं लक्षयति * त्वगिति * स्पर्शत्वेऽतिव्याप्तिवारणाय गुणपदम् । * पाकजमिति * पाकस्तेजस्संयोगः, तेन पूर्वरूपं नश्यति रूपान्तरमुत्पद्यत इत्यर्थः ॥**

व्या * स्पर्शं लक्षयतीति * स्वरूपसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन त्वगिन्द्रियमात्रग्राह्यत्वविशिष्टगुणत्वं स्पर्शस्य लक्षणम्, चक्षुरिन्द्रियजन्यप्रत्यक्षाविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वमित्येतावत्पर्यन्तं लक्षणं सप्रयोजनं तर्कसङ्ग्रहसर्वस्वे निरूपितम् । ननु त्वगूष्मसंयोगे (वायुशरीरसंयोगे) रूपवान् घट इत्यादिचाक्षुषप्रत्यक्षाविषयत्वस्य ऊष्मसंयुक्ता त्वक् (वायुसंयुक्तं शरीरं) इति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वस्य

गुणत्वस्य च सत्त्वात्तत्रातिव्याप्तिरिति चेन्न, गुणपदस्य विशेषगुणपरत्वेन दोषाभावात्। नच विशेषगुणत्वदलेनैव संख्यासंयोगादावतिव्याप्त्यभावान्मात्रपदस्य तत्रातिव्याप्तिवारकस्य वैयर्थ्यं दुर्वारमिति वाच्यम्। सांसिद्धिकद्रवत्वेऽतिव्याप्तिवारणाय तत्सार्थक्यात्। न च परमाणुस्पर्शेऽव्याप्तिवारणाय अत्रापि रूपलक्षणोक्तरीत्या जातिघटितलक्षणस्य कर्तव्यतया संयोगत्वजातिमादायातिव्याप्तिवारणसंभवेऽपि स्पर्शत्वादावप्यतिव्याप्तिवारणसंभवेन तत्रातिव्याप्तिवारकस्य गुणपदस्य वैयर्थ्यं दुर्वारमिति वाच्यम्, ऊष्मत्वजातिमादायोष्मण्यतिव्याप्तिवारणाय तत्सार्थक्यात्। (इदानीं विशेषगुणपदं निष्फलमतो न निवेशनीयम्) चाक्षुषप्रत्यक्षाविषयत्वे सति त्वाचप्रत्यक्षविषयतावच्छेदकजातिमत्त्वनिवेशे परमाणुसंयोगादावतिव्याप्तिः। अन्यत्सर्वं रूपलक्षणवत् बोध्यम् (संप्रश्रुत शब्दे दोषप्रसक्तिः तत्समाधानं च नोपपद्यते) * पाकजमितीति * पाकोनामविजातीयतेजस्संयोगः, सच नानाविधः रूपजनकः रसजनकः, गन्धजनकः स्पर्शजनकश्चेत्यादिना. यत्र तृणपुञ्जनिक्षिप्ते आम्रादौ पूर्वहरितरूपनाशेन पीतरूपोत्पत्तिर्दृश्यते तत्र हरितरूपनाशकः पीतरूपोत्पादकश्च तेजस्संयोगः द्वौकल्पनीयौ, एवमेव यत्र रसगन्धस्पर्शानां परावृत्तिः अपरेषां तेषामुत्पत्तिश्च दृश्यते तत्र पूर्वरसादिनाशकः रसाद्यन्तरोत्पादकश्च तद्विलक्षणः पाकः कल्पनीयः। तथा च तत्तत्कार्यवैलक्षण्येन तत्तत्कार्यानुकूलपाकनिर्णयः कार्यः। किञ्च पाकवैलक्षण्यादेव पार्थिवपरमाणूनामपि विजातीयद्रव्यान्तरारम्भकत्वमनुभवसिद्धमुपपद्यते। तथाहि, तृणारम्भकाणामेव परमाणूनां दुग्धदधिनवनीतघृतरूपद्रव्यान्तरारम्भकत्वमङ्गीकार्यम्, दुग्धाद्यारम्भकाणां, परमाण्वन्तराणां विजातीयानां कल्पनेऽनवकाशात् प्रयो-

जनाभावाच्च । तथा च गोभुक्ततृणादीनामापरमाण्वन्तं भङ्गे सति तत्परमाणुषु तृणनिष्ठरूपादिचतुष्टयनाशानन्तरं दुग्धनिष्ठरूपादिचतुष्टयसजातीय रूपादिचतुष्टय पाकेन जन्यते, तदनु दुग्धस्यापरमाण्वन्त भङ्गे तेषु परमाणुषु पाकेन पुन दधिनिष्ठरूपादिचतुष्टयसजातीय रूपादिचतुष्टयमुत्पद्यते. एवं नवनीतघृतयोश्चोत्पत्ति ज्ञेया । अतो गुणान्तरोत्पत्ताविव द्रव्यान्तरोत्पत्तावपि पाक. कारणमिति भाव: ॥

**मू ✻ तत्र परमाणुष्वेव पाको न द्व्यणुकादौ । आमनिक्षिप्ते घटे परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे पुनः द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः तत्र परमाणवः समवायिकारणं तेजस्संयोगोऽसमवायिकारणं; अदृष्टादिकं निमित्तकारणं, द्व्यणुकादिरूपे द्व्यणुकं समवायिकारणं, कारणरूपमसमवायिकारणमिति पीलुपाकवादिनो वैशेषिकाः । पूर्वघटस्य नाशं विनैव अवयविन्यवयवेषु च परमाणुपर्यन्तेषु युगपद्रूपान्तरोत्पत्तिरिति पिठरपाकवादिनो नैयायिकाः ॥**

व्या ✻ पीलुपाकवादिनो वैशेषिका पिठरपाकवादिनो नैयायिकाः पीलुषु परमाणुष्वेव पाकवादिन वैशेषिकाः कणादमतानुसारिण. । तत्ववयविनि घटादा द्व्यणुकत्र्यणुकादौ वा ते पाक मभ्युपगच्छन्ति । पिठरे अवयविनि घटादौ द्व्यणुकत्र्यणुकादौ च पाकवादिनः नैयायिकाः गौतममतानुयायिनः ॥ ✻ आमनिक्षिप्त इति ✻ घटे आमनिक्षिप्ते सति श्यामघटनाशे परमाणुषु रूपान्तरोत्पत्तावित्यन्वयक्रम । ✻ तत्रेति ✻ परमाणुरूप इत्यर्थः ।

अत्रायं भावः—अतिवेगवता तेजसा परमाणूनामभिघातसंयोगे सति परमाणुषु पूर्वघटनाशकक्रियाविभागादिक्रमेण पूर्वनीलघटस्य नाशे स्वतन्त्रेषु परमाणुषु पुनः रक्तघटारम्भकक्रियाविभागादिक्रमेण रक्तघटोत्पत्तिरिति भावः। परमाणुषु पूर्वनीलघटनाशक्रियाक्षणमारभ्य घटान्तरे (रक्तघटे) रक्तरूपोत्पत्तिपर्यन्तं क्षणप्रक्रिया शिष्यबुद्धिवैशद्याय मुग्धबोधाय निरूप्यते। अत्र वह्नेरभिघातसंयोगात् प्रथमं परमाणुषु नीलघटनाशकक्रिया (१) ततः परमाणुद्वयविभागः (२) ततो नीलघटारम्भकसंयोगनाशः (३) ततः असमवायिकारणसंयोगनाशात् द्व्यणुकनाशः तदनु त्र्यणुकनाशादिक्रमेण घटनाशः (४) ततः आश्रयनाशादाश्रयिनाश इति न्यायानुसारेण परमाणुगतनीलरूपनाशः (५) ततः स्वतन्त्रेषु परमाणुषु रक्तरूपोत्पत्तिः (६) ततः रक्तरूपविशिष्टेषु स्वतन्त्रेषु परमाणुषु रक्तघटारम्भानुगुणक्रिया (७) ततः परमाणूनां देशान्तरेण विभागः (८) ततः पूर्वदेशसंयोगनाशः (९) ततः परमाणुद्वये रक्तद्व्यणुकारम्भकसंयोगः (१०) ततः द्व्यणुकोत्पत्तिः (११) ततः तत्र द्व्यणुके रक्तरूपोत्पत्तिः (१२) एवं क्रमेण त्र्यणुकतद्रूपचतुरणुकतद्रूपोत्पत्तिः ग्राह्या, एषा रीतिर्वैशेषिकमतानुसारेण प्रतिपादिता एतन्मते सोऽयं घट इति प्रत्यभिज्ञा न वास्तवघटद्वयाभेदविषयिणी, किन्तु घटत्वजात्यालम्बनैव (पूर्वघटसजातीयघटविषयिण्येव) अत्र पूर्वोत्तरघटयोः भेदादिति ॥

अवयविन्यवयवेषु परमाण्वादिषु च पाकमङ्गीकुर्वतां नैयायिकानामयमाशयः। परमाणूनां तेजसाऽभिघातसंयोगे सति नियतं सर्वत्र परमाणुषु द्रव्यनाशकक्रिया जायत इत्यत्र प्रमाणाभावेन अवयविन्यपि पाकस्वीकारः समुचित इति। एतन्मते सोऽयं घट

इत्यादिप्रत्यभिज्ञा चोपपद्यत एव, पूर्वोत्तरोपलभ्यमानघटयोरभेदात्। एतन्मते द्व्यणुकत्र्यणुकाद्यनन्तावयवितन्नाशतत्प्रागभावादिकल्पनाविरहेण वैशेषिकमतापेक्षया लाघवं च सम्भवति। अत्र क्षणप्रक्रिया यथा—प्रथमक्षणे वेगातिशयवता तेजसा सह अवयवावयविष्वेकदैव संयोगः (१) ततः तादृशतेजस्संयोगेन अवयवावयविषु पूर्वश्यामादिरूपनाशः (२) ततः अवयवावयविषु सर्वत्र रक्तरूपोत्पत्तिः (३) नच पूर्वरूपनाशं प्रति रूपान्तरोत्पत्तिं प्रति च पाकस्यैव हेतुत्वे अवयविरूपं प्रत्यवयवरूपस्य अवयविरूपनाशं प्रत्याश्रयनाशस्य च हेतुत्वमिति कार्यकारणभावस्य भङ्गः, तादृशकारणाभावेऽपि कार्योत्पत्तेरिति वाच्यम्, पाकाजन्या (विजातीया) वयविरूपं प्रत्यवयवरूपस्य हेतुत्वं, पाकजन्या (विजातीया) वयविरूपनाशं प्रत्याश्रयनाशस्य कारणत्वमिति कार्यकारणभावस्वीकारे निरुक्तव्यतिरेकव्यभिचाराभावात् इति ॥

**मू. * अतएव पार्थिवपरमाणुरूपादिकमनित्यमित्यर्थः * * नित्यगतमिति * परमाणुगतमित्यर्थः * अनित्यगतमिति * द्व्यणुकादिगतमित्यर्थः, रूपादिचतुष्टयमुद्भूतं प्रत्यक्षमनुद्भूतमप्रत्यक्षम्, उद्भूतत्वं प्रत्यक्षत्वप्रयोजको धर्मः तदभावोऽनुद्भूतत्वम् ***

व्या * नित्यगतमितीति * आश्रयस्य नित्यत्वेन आधेयस्य नित्यतास्वीकारे बाधकाभावादित्यर्थः। * अनित्यगतमितीति * आश्रयनाशाधीननाशप्रतियोगीत्यर्थः, * उद्भूतत्वमिति * प्रत्यक्षत्वप्रयोजकः प्रत्यक्षत्वविषयतासम्पादकः, अत्र उद्भूतत्वं जातिरित्याशयः, गुणगतसाङ्कर्यस्य नवीनैः दोषावहत्वानङ्गीकारेण न

शुक्लत्वादिनोद्भूतत्वस्य जातित्वभङ्ग इति भावः । केषाञ्चिन्मते शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना जातिविशेषः तदभावकूटवत्त्वमेवोद्भूतत्वं न जातिस्तदित्यङ्गीक्रियते ॥

**मू * संख्यां लक्षयति * एकेति * परिमाणं लक्षयति * मानेति * परिमाणं विभजते * तच्चेति * भावप्रधानोऽयं निर्देशः, अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वं चेत्यर्थः ॥ पृथक्त्वं लक्षयति * पृथगिति * इदमस्मात् पृथगिति व्यवहारकारणं पृथक्त्वमित्यर्थः, संयोगं लक्षयति * संयुक्तेति * इमौ संयुक्ताविति व्यवहारहेतुरित्यर्थः । संख्यादिलक्षणे सर्वत्र दिक्कालादावतिव्याप्तिवारणायासाधारणेति विशेषणीयम् । संयोगो द्विविधः कर्मजः संयोगजश्चेति, आद्यो हस्तक्रियया पुस्तकसंयोगः, द्वितीयो हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगः । अव्याप्यवृत्तिस्संयोगः स्वात्यन्ताभावसमानाधिकरणत्वमव्याप्यवृत्तित्वम् ॥**

व्या * सङ्ग्रहे द्वित्वादिकं तु सर्वत्रानित्यमेवेति * हेतुभूताया अपेक्षाबुद्धेर्नाशात् द्वित्वनाशोऽवश्यमभ्युपेय इति भावः । सामान्यतः शब्दबुद्ध्योः द्विक्षणावस्थायित्वाङ्गीकारेऽपि अपेक्षाबुद्धेः परमगत्या त्रिक्षणावस्थायित्वमङ्गीकार्यम् । तथाहि प्रथमम् अयमेकः अयमेक इत्याकारकापेक्षाबुद्धिः (अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरुच्यते) (१) तदनु द्वित्वं (२) तदनु द्वित्वनिर्विकल्पकं (३) तदनु द्वित्वसविकल्पकं (४) इत्येषामुत्पत्तिक्रमः । अत्रापेक्षाबुद्धेः क्षणद्वयमात्रावस्थायित्वाङ्गीकारे द्वित्वनिर्विकल्पकप्रत्यक्ष-

काल एव तस्या नाशोऽवश्यमभ्युपेयः, कारणीभूतायास्तस्या अपेक्षाबुद्धेर्नाशे कार्यभूतद्वित्वस्यापि द्वित्वसविकल्पकप्रत्यक्षकाले (तृतीयक्षणे) नाशोऽङ्गीकर्तव्यः। तथाच प्रत्यक्षे विषयस्य कार्यसहभावेन कारणत्वस्याङ्गीकृततया द्वित्वसविकल्पकप्रत्यक्षकाले विषयभूतद्वित्वस्याभावेन चतुर्थक्षणे द्वित्वसविकल्पकप्रत्यक्षानुपपत्तिः, तस्या त्रिक्षणावस्थायित्वाङ्गीकारे तु निर्विकल्पकप्रत्यक्षकालेऽपि (तृतीयक्षणेऽपि) तस्या विद्यमानतया तज्जन्यद्वित्वस्य सविकल्पकप्रत्यक्षकाले (चतुर्थक्षणे) अबाधितत्वेन विषयबाधाभावेन न द्वित्वसविकल्पकप्रत्यक्षानुपपत्तिः। एवं त्रित्वचतुष्ट्वादेरप्यपेक्षाबुद्धिजन्यत्वेन अनित्यत्वमेवाङ्गीकार्यम्॥

मूले अणुमहदित्यादिपरिमाणविशिष्टगुणिबोधकशब्दैः परिमाणस्य विभजनमसङ्गतमित्याशङ्कायामाह * भावप्रधान इति * भाव्यते अवच्छिद्यते विशेष्यता अनेनेति भावः। स्वारसिकतत्पदजन्यशाब्दबोधीयविशेष्यतावच्छेदकधर्म इत्यर्थः, सः प्रधान विशेष्य यस्य स भावप्रधानः, निर्दिश्यते बोध्यते अनेनेति निर्देशः शब्दः, तथाच तादृशविशेष्यतावच्छेदकधर्म विशेष्यकबोधजनकशब्दः भावप्रधाननिर्देश इति फलितम्। अत्र स्वारसिकतत्पदजन्यशाब्दबोधः अणुत्वाद्यवच्छिन्नविशेष्यकशाब्दबोधः तादृशबोधीयविशेष्यतावच्छेदकः (तादृशबोधीयविशेष्यतानिरूपितप्रकारताश्रयः) अणुत्वादिकं तद्विशेष्यकबोधः अणुत्वादिविशेष्यकः अणुत्वत्वादिप्रकारकबोधः तादृशबोधजनकशब्दत्वं अणु महदित्यादिशब्दे वर्तत इति समन्वयः। यथाश्रुते धर्मबोधेच्छया धर्मिप्रतिपादनं भावप्रधाननिर्देशः। निष्कृष्टपरिष्कारस्तु स्वारसिकतत्पदजन्यशाब्दबोधीयविशेष्यतावच्छेदकमुख्यविशेष्यकबोधजनकशब्द इति॥ अणुत्वा-

दिविशेष्यकाणुत्वादिप्रकारकबोधमभिनीय दर्शयति * अणुत्वं महत्त्वमित्यादिना ॥

अव्याप्यवृत्तित्वं परिष्करोति * स्वात्यन्ताभावेति * यस्मिन् लक्षणसङ्गमनीय स एव स्वपदार्थः स्वात्यन्ताभावः कपिसंयोगाभावः तदधिकरण "अग्रे वृक्षः कपिसंयोगी मूले न" इति प्रतीत्या मूलावच्छेदेन वृक्षः तद्वृत्तित्वं पूर्वोक्तप्रतीत्या अग्रावच्छेदेन कपिसंयोगे वर्तत इति समन्वयः। एवमेव कपिसंयोगाभावे कपिविभागतदभावादौ च समन्वयो ग्राह्यः। संयोगत्वादिना संयोगादिकं (विशेषणान्तरा विशेषितसंयोगादिः) व्याप्यवृत्तीति प्राचीनाः। सोऽप्यव्याप्यवृत्तिरिति नवीनाः । जन्यगुणकर्मणा सर्वेषामपि कालिकाव्याप्यवृत्तित्वम्, उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठतीति न्यायानुसारेण उत्पत्तिक्षणद्वितीयक्षणाद्यवच्छेदेन तत्तदभावयोः तत्तदधिकरणद्रव्यमहाकालाद्यन्तर्भावेण सामानाधिकरण्यस्य सत्त्वेन तेषां कालिकाव्याप्यवृत्तित्वं संभवति। संयोगविभागयोर्विशेषितयोरविशेषितयोश्च दैशिकाव्याप्यवृत्तित्वमपि संभवतीति ग्राह्यम्। 'इह पर्वते नितम्बे हुताशनो न शिखरे' इति प्रतीत्या वह्नितदभावयोरिव तादृशप्रतीतिभिः संयोगसंबन्धेन द्रव्यमात्रस्याप्यव्याप्यवृत्तित्वं संभवतीति बोध्यम्। तथाच एकस्मिन्नधिकरणे देशकालाद्यवच्छेदकभेदेन वर्तमानौ भावाभावावव्याप्यवृत्ती इति सिद्धम्। 'व्याप्यवृत्तेरवच्छेदकसद्भावे प्रमाणाभावः' इति न्यायेन व्याप्यवृत्तिघटत्वतदभावादीनां नावच्छेदकभेदेन सामानाधिकरण्यमिति ज्ञेयम्। 'भेदस्य व्याप्यवृत्तित्वम्' इति न्यायेन कपिसंयोगाभावादीनामव्याप्यवृत्तित्वेऽपि कपिसंयोगिभेदादीनां व्याप्यवृत्तित्वमेव (अव्याप्यवृत्तिमद्भेदो नाव्याप्यवृत्तिरिति पूर्वन्यायार्थः,

भेदान्तरस्य अव्याप्यवृत्तिताप्रसक्तिरेव नास्ति) अव्याप्यवृत्त्यधिकरणता तु नाव्याप्यवृत्तिरिति नियमानुसारेण कपिसंयोगादीनामव्याप्यवृत्तित्वेऽपि कपिसंयोगाधिकरणत्वाना व्याप्यवृत्तित्वमेवेति केषाञ्चिदाशयः । विशेषधर्मावच्छिन्नस्य अव्याप्यवृत्तित्वेऽपि सामान्यधर्मावच्छिन्नस्य कुत्रचिद्व्याप्यवृत्तित्वमङ्गीक्रियते प्राचीनमते. यथा कपिसंयोगादीनामव्याप्यवृत्तित्वेऽपि संयोगत्वाद्यवच्छिन्नस्य व्याप्यवृत्तित्वमिति । व्याप्यवृत्तिजातीयधर्माणामव्याप्यवृत्तित्वे प्रमाणाभाव इति नियमेन व्याप्यवृत्तिरूपसामान्यसजातीयस्य रूपविशेषनीलादिसमुदायस्य नाव्याप्यवृत्तित्वम् । एवमन्यत्रापि बोध्यम् । कपिसंयोगाधिकरणत्वाभावादीनामव्याप्यवृत्तित्व कपिसंयोगाद्यधिकरणभेदाना व्याप्यवृत्तित्व चाङ्गीक्रियते केषाञ्चिन्मते । कुत्रचित् अव्याप्यवृत्तिनिष्ठसामानाधिकरण्यतदभावयोरव्याप्यवृत्तित्वमङ्गीक्रियते यथा कपिसंयोगे अग्राद्यवच्छेदकभेदेन वृक्षत्वसामानाधिकरण्यतदभावावव्याप्यवृत्ती । अपि च काले वृत्तौ देशस्येव देशे वृत्तौ कालस्याप्यवच्छेदकत्वमङ्गीक्रियते. यथा इदानीं चत्वरे गौर्नास्तीति प्रतीत्या चत्वरावच्छेदेन गवाभावे एतत्कालवृत्तित्वस्येव एतत्कालावच्छेदेन गवाभावे चत्वरवृत्तित्वस्यापि भानाङ्गीकारात् । तथाच स्वप्रतियोगित्वस्वसामानाधिकरण्योभयसम्बन्धेन अभावविशिष्टत्वमव्याप्यवृत्तित्वमिति निरुक्तसम्बन्धद्वयेनाभावविशिष्टान्यत्वं व्याप्यवृत्तित्वमिति च फलितम् । स्वपदेन कपिसंयोगाभावपरिग्रहणे तत्प्रतियोगित्व अवच्छेदकभेदेन तत्सामानाधिकरण्यमग्रे वृक्षः कपिसंयोगी मूले नेति प्रतीत्या सम्भवतीति समन्वयः । एवं स्वपदेन कपिसंयोगाभावाभावात्मकं कपिसंयोगमादाय कपिसंयोगाभावेऽपि समन्वयः कार्यः । एवमन्यत्रापि । एतेन व्याप्यवृत्ति-

त्वमपि सुगमसमन्वयं भवतीति ज्ञेयम्। स्वप्रतियोगित्वमात्रस्य सम्बन्धत्वे घटत्वाद्यभावप्रतियोगित्वमादाय घटत्वादेरप्यव्याप्यवृत्तित्वापत्तिः। स्वसामानाधिकरण्यमात्रस्य सम्बन्धत्वे पटत्वाभावसामानाधिकरण्यस्य घटत्वादौ सत्त्वादव्याप्यवृत्तित्वापत्तिः। अतः सम्बन्धद्वयोपादानम्। एवं व्याप्यवृत्तित्वघटकदलप्रयोजनमपि ग्राह्यम्॥

मू * विभागं लक्षयति * संयोगेति * कालादावतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय संयोगनाशक इति। विभागोऽपि द्विविधः, कर्मजो विभागजश्चेति। आद्यो हस्तक्रियया पुस्तकविभागः। द्वितीयो हस्तपुस्तकविभागात्कायपुस्तकविभागः। परत्वापरत्वयोर्लक्षणमाह * परापरेति * परव्यवहारासाधारणकारणं परत्वम्। अपरव्यवहारासाधारणमपरत्वम्। ते विभजते * द्विविध इति * दिक्कृतयोरुदाहरणमाह * दूरस्थ इति * कालकृते उदाहरति * ज्येष्ठ इति * गुरुत्वं लक्षयति * आद्येति * द्वितीयादिपतनस्य वेगासमवायिकारणत्वाद्वेगेऽतिव्याप्तिवारणाय आद्येति। द्रवत्वं लक्षयति * आद्येति * स्यन्दनं स्रवणम्। तेजस्संयोगजं नैमित्तिकं तद्भिन्नं सांसिद्धिकम्। पृथिव्यां नैमित्तिकमुदाहरति * घृतादाविति * तेजसि तदाह * सुवर्णादाविति * स्नेहं लक्षयति * चूर्णेति * कालादावतिव्याप्तिवारणाय गुणपदम्। रूपादावतिव्याप्तिवारणाय पिण्डीभावेति। शब्दं लक्षयति * श्रोत्रेति *

**शब्दत्वेऽतिव्याप्तिवारणाय गुणपदं रूपादावतिव्याप्तिवारणाय श्रोत्रेति। शब्दः त्रिविधः संयोगजो विभागजश्शब्दजश्चेति। अत्राद्यो भेरीदण्डसंयोगजन्यः। द्वितीयो वंशे पाट्यमाने दलद्वयविभागजन्यश्चटचटशब्दः। भेर्यादिदेशमारभ्य श्रोत्र-देशपर्यन्तं द्वितीयादिशब्दाश्शब्दजाः॥**

व्या * विभागं लक्षयतीति * ध्वंसं प्रति प्रतियोगिनः कारणत्वे-न संयोगनाशजनकत्वस्य प्रतियोगिभूतसंयोगेऽपि सत्त्वादतिव्या-प्तिरिति चेन्न, संयोगनाशनिष्ठजन्यताया प्रतियोगितासंबन्धानव-च्छिन्नत्वस्य तत्र जनकताया समवायसंबन्धावच्छिन्नत्वस्य वा निवेशे दोषाभावात्; प्रतियोगितासंबन्धेन जायमानसंयोगनाशं प्रति तादात्म्यसंबन्धेन प्रतियोगिनः संयोगस्य कारणत्वेन दोषाभावात्। स्वरूपसंबन्धेन जायमानसंयोगनाशं प्रति विभागस्य कारणत्वाङ्गी-कारेण विभागे समन्वयश्च। * आद्येतीति * पतने आद्यत्वं च स्वसमानाधिकरणः पतनप्रतियोगिको यो ध्वंसः तत्समानकालिकं यद्यत्स्वं तद्भिन्नत्वं ग्राह्यम्, अत्र स्वपदेन द्वितीयपतनादेः परि-ग्रहणे तत्समानाधिकरणः पतनप्रतियोगिको यो ध्वंसः आद्यपतन-ध्वंसः तत्समानकालिकं यद्यत्स्वं द्वितीयपतनादिकं तद्भिन्नत्वमाद्य-पतने वर्तत इति समन्वयः। स्वपदेन नाद्यपतनं गृहीतुं शक्यते तत्समानाधिकरणपतनप्रतियोगिकाद्यपतनध्वंससमानकालिकत्वस्य स्वपदग्राह्याद्यपतनेऽभावात् ध्वंसे स्वसमानाधिकरणत्वानिवेशे अन्यफलवृत्तिपतनध्वंससमानकालिकत्वस्यैव एतत्फलवृत्त्याद्यपतने सत्त्वेनासंभवापत्तेः। ध्वंसे पतनप्रतियोगित्वानिवेशे आद्यपतन-समानाधिकरणसंयोगादिध्वंससमानकालिकत्वस्यैव आद्यपतने

सत्त्वादसंभवापत्तेः। यद्यदिति वीप्सानादरे स्वसमानाधिकरणपतनप्रतियोगिकाद्यपतनध्वससमानकालिकद्वितीयपतनभिन्नत्वस्य तृतीयपतनादौ सत्त्वात्तेषामप्याद्यत्वप्रसङ्गः (पतने चरमत्वं च स्वसमानाधिकरणपतनप्रतियोगिकप्रागभावसमानकालिक यद्यत्स्व तद्भिन्नत्वरूपं ग्राह्यम्) त्रिविधशब्दाना सयोगद्वयस्य च समवाय्यसमवायिनिमित्तकारणानि अस्मदीयतर्कसंग्रहसर्वस्वे पारिभाषिकपदार्थसंग्रहे निरूपितानि, तत्र द्रष्टव्यानि ॥

**मू * बुद्धेर्लक्षणमाह * सर्वव्यवहारेति * जानामीत्यनुव्यवसायगम्यं ज्ञानत्वमेव लक्षणमिति भावः। बुद्धिं विभजते * सेति * स्मृतेर्लक्षणमाह * संस्कारेति * भावनाख्यः संस्कारः। संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानमिति। अनुभवेऽतिव्याप्तिवारणाय संस्कारजन्यमिति। प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम्। अनुभवं लक्षयति * तद्भिन्नमिति * स्मृतिभिन्नं ज्ञानमनुभव इत्यर्थः। अनुभवं विभजते * स द्विविध इति ***

व्या * ज्ञानत्वमेवेति * अनुगतधर्ममन्तरानुगतप्रतीतेरसम्भवेन जानामीत्यनुगतानुव्यवसायप्रयोजकीभूतमनुगतधर्मरूप ज्ञानत्वमेव ज्ञानस्य लक्षणमिति भावः। सर्वव्यवहारेति मूलोक्तलक्षणपरित्यागे लाघवमेव बीजमित्यवधेयम्। संस्कारविशेषमाह * भावनाख्य इति ॥

**मू * यथार्थानुभवस्य लक्षणमाह * तद्वतीति * ननु घटे घटत्वमिति प्रमायामव्याप्तिः घटत्वे घटाभावादिति चेन्न।**

**यत्र यत्सम्बन्धोऽस्ति तत्र तत्संबन्धानुभव इत्यर्थात् घटत्वे घटसंबन्धोऽस्तीति नाव्याप्तिः * सैवेति * यथार्थानुभव एव शास्त्रे प्रमेत्युच्यत इत्यर्थः ॥**

व्या * यथार्थानुभव एवेत्यत्र एवकारेण यथार्थस्मृतिव्यवच्छेदः, तस्या अपि प्रमात्वे स्मृतिकरणस्यानुभवस्यापि प्रमाणान्तरतापत्तेः। तद्वतीत्यत्र तत्पदेन प्रकारीभूतधर्मो ग्राह्यः। तद्वत्त्वं च तन्निष्ठाधेयतानिरूपिताधिकरणताश्रयत्वम्। तन्निष्ठाधेयतायां प्रकारतावच्छेदकसंबन्धावच्छिन्नत्वं विशेषणं देयम्। अन्यथा कालिकसंबन्धावच्छिन्नरजतत्वनिष्ठाधेयतामादाय शुक्ताविदं रजतत्ववदिति भ्रमेऽतिव्याप्तिः तन्निवेशे प्रकारतावच्छेदकसमवायसंबन्धेन रजतत्वस्य शुक्तावभावान्नातिव्याप्तिः। अत्राधेयतायां प्रकारतावच्छेदकधर्मावच्छिन्नत्वं विशेषणं देयम्। अन्यथा रजतत्वनिष्ठप्रमेयत्वावच्छिन्नाधेयतामादाय पूर्वोक्तभ्रमेऽतिव्याप्तेः। तन्निवेशे तु अत्र रजतत्वत्वस्य प्रकारतावच्छेदकत्वेन नातिव्याप्तिः। नचैवमिदं रजतमित्यादिभ्रमे रजतत्वस्य निरवच्छिन्नस्यैव (रजतत्वानवच्छिन्नस्य) भासमानतया तत्र प्रकारतावच्छेदकधर्माप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्। तन्निष्ठप्रकारतासमानाधिकरणधर्मावच्छिन्नत्वस्याधेयताया विशेषणीयत्वात्। रजतत्वस्य तत्र प्रकारतावच्छेदकत्वाभावेऽपि प्रकारतासामानाधिकरण्यस्य सत्त्वान्नाव्याप्तिः। नच प्रमेयत्वादेरपि निरुक्तप्रकारतासमानाधिकरणतया तद्धर्मावच्छिन्नाधेयतामादाय पूर्वोक्तभ्रमेऽतिव्याप्तिरिति वाच्यम्। तन्निष्ठप्रकारताव्याप्यधर्मावच्छिन्नत्वस्य तत्र निवेशनीयत्वात्। प्रमेयत्वादेस्तद्व्याप्यत्वाभावान्नातिव्याप्तिः। नच घटः प्रमेयवानिति प्रमायां

तन्निष्ठप्रकारत्वाभावघटितव्याप्यत्वाप्रसिद्ध्याव्याप्तिरिति वाच्यम् । स्वव्यापकतत्सामानाधिकरण्यरूपस्वव्याप्यत्वस्य निवेशनीयत्वात् तन्निवेशे तत्र नाप्रसिद्धिः ॥

ननु निरुक्तरीत्या अवच्छिन्ननिरवच्छिन्नप्रकारकस्थलीयसामान्यलक्षणाङ्गीकारे गौरवेण अवच्छिन्नप्रकारकस्थले प्रकारतावच्छेदकधर्मावच्छिन्नाधेयताघटितम् अन्यत्र तदघटितं च यथाश्रुतं लक्षणं स्वीक्रियते, नातः काप्यनुपपत्तिरिति वाच्यम् । अवच्छिन्नप्रकारकस्थलीयलक्षणस्य दोषप्रसक्त्यभावेऽपि निरवच्छिन्नप्रकारकस्थलीयलक्षणस्य प्रमेयत्वाद्यवच्छिन्नाधेयतामादाय निरुक्तभ्रमेऽतिव्याप्त्यापत्तेः । तथाच निरुक्तरीत्या तन्निष्ठप्रकारताव्याप्यधर्मावच्छिन्नाधेयता (तन्निष्ठप्रकारताव्याप्याधेयता) निरूपिताधिकरणताघटितं पूर्वोक्तस्थलद्वयसाधारणं लक्षणमङ्गीकार्यमेव । अथवा तन्निष्ठप्रकारत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्विशेष्यकत्वनिवेशे निरवच्छिन्नप्रकारकप्रमायामप्यव्याप्त्यभावः अन्यत्र नातिव्याप्तिश्च (अथवा प्रकारतावच्छेदकधर्मसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभववृत्त्यनुभवत्वव्याप्यजातिमत्त्वम् अवच्छिन्ननिरवच्छिन्नप्रकारकस्थलीयसामान्यलक्षणं बोध्यम् । अतो निरवच्छिन्नप्रकारकस्थले नाव्याप्तिः । यथार्थानुभवत्वजातिमादाय स्थलद्वयेऽपि समन्वयः । एतेन निर्विकल्पकप्रत्यक्षे विशेष्यताप्रकारतयोरभावेन प्रमासामान्यलक्षणस्य प्रकारत्वादिघटितस्याव्याप्तिरिति शङ्का निरस्ता । तत्रापि यथार्थानुभवत्वजातिमादायैव समन्वयसंभवात्)

तद्वन्निष्ठविशेष्यतानिरूपिता या तन्निष्ठा प्रकारता तच्छाल्यनुभवत्वमिति प्रकारताविशेष्यतयोः निरूप्यनिरूपकभावो निवेश-

नीयः; अन्यथा रङ्गरजतयोः इमे रजतरङ्गे इति रङ्गं रजतत्वेन रजतं रङ्गत्वेनावगाहमाने समूहालम्बनभ्रमेऽतिव्याप्तिः, तत्र रजतत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयोः रङ्गत्ववद्विशेष्यत्वरङ्गत्वप्रकारकत्वयोः सत्त्वात्। तथा निवेशे तु रजते रङ्गत्वस्य रङ्गे रजतत्वस्य च प्रकारत्वेन रजते रजतत्वस्य रङ्गे रङ्गत्वस्य च अप्रकारत्वेन तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपकत्वस्य तत्राभावान्नातिव्याप्तिः। अथवा एतत्समूहालम्बने दोषवारणाय तद्वन्निष्ठविशेष्यतानिरूपितविशेष्यित्वावच्छिन्ना या तन्निष्ठप्रकारतानिरूपितप्रकारिता तदाश्रयत्वं लक्षणं वक्तव्यम्। तथाच ययोर्विषयतयोः निरूप्यनिरूपकभावः तन्निरूपितविषयितयोरवच्छेद्यावच्छेदकभाव इति न्यायेन अत्र समूहालम्बने रजतवद्विशेष्यित्वावच्छिन्नरङ्गत्वप्रकारित्वयोः रङ्गत्ववद्विशेष्यित्वावच्छिन्नरजतत्वप्रकारित्वयोः सत्त्वेऽपि रजतत्ववद्विशेष्यित्वावच्छिन्नरजतत्वप्रकारितयोः रङ्गत्ववद्विशेष्यित्वावच्छिन्नरङ्गत्वप्रकारितयोर्वा अभावान्नातिव्याप्तिः। (नन्वेवमपि पर्वतो वह्निमान् ह्रदो वह्निमान् इति समूहालम्बनभ्रमेऽतिव्याप्तिः, तत्र निरुक्तलक्षणस्य सत्त्वादिति वाच्यम्। भ्रमभिन्नत्वस्यापि विशेषणीयत्वात्। अत्र ह्रदांशे वह्निः प्रकारत्वेन भ्रमत्वेन तत्र भ्रमभिन्नत्वाभावान्नातिव्याप्तिः। इदमेव लक्षणं सर्वांशे प्रमात्वमुच्यते ॥)

* ननु घटे घटत्वमितीति * अत्रायं भावः—प्रथमान्तपदार्थस्य न्यायमते विशेष्यतया घटे घटत्वमिति प्रमायां प्रथमान्तपदार्थो घटत्वं विशेष्यं, सप्तम्यधिकरणे इति सूत्रेण अधिकरणवाचकपदोत्तरं सप्तमीविधानेन आधेयतासंबन्धेन घटो विशेषणम्, तथा चाधेयतासंबन्धस्य वृत्त्यनियामकतया वृत्त्यनियामकसंबन्धावच्छिन्नाधेयताया अप्रसिद्ध्या घटे घटत्वमिति प्रमायां

प्रकारतावच्छेदकाधेयतासंबन्धावच्छिन्नघटत्वावच्छिन्नाधेयताया अप्रसिद्धतयाऽव्याप्तिरिति । * यत्र यत्संबन्धोऽस्तीति * अत्रायमाशयः । लक्षणवाक्यघटकतद्वत्त्व तत्सबन्धित्वम् । तथाच प्रकारतावच्छेदकधर्मसबन्धावच्छिन्नतान्निष्ठसबद्धतानिरूपितसबन्धितावान्निष्ठविशेष्यतानिरूपकत्वघटित लक्षण पर्यवसन्नम् । तथाच वृत्त्यनियामकसबन्धावच्छिन्नाधेयताया अप्रसिद्धत्वेऽपि तत्सबन्धावच्छिन्नसबद्धतायाः प्रसिद्धत्वेन प्रकारतावच्छेदकाधेयतासंबन्धावच्छिन्नप्रकारतावच्छेदकघटत्वावच्छिन्नसबद्धतानिरूपितसबन्धितावद्घटत्व - विशेष्यकत्वघटप्रकारकत्वयोः सत्त्वान्नाव्याप्तिः, समन्वयश्च । वाक्यार्थस्तु यत्र घटत्वे यत्सबन्धोऽस्ति घटसबन्धोऽस्ति तत्र घटत्वे तत्र तत्संबन्धानुभवः तत्संबन्धावच्छिन्नतन्निष्ठप्रकारताशाल्यनुभवः, घटत्वे घटसंबन्धोऽस्तीति घटत्वे घटनिष्ठसंबद्धतानिरूपितसंबन्धिताश्रयत्वमस्तीति । यदि घटे रूपमित्यत्रेव घटे घटत्वमित्यत्रापि घटपदोत्तरवर्तिसप्तम्या आधेयत्वार्थकत्वमङ्गीकृत्य स्वरूपसंबन्धेन तदाधेयताया अन्वयः स्वीक्रियेत तदा एतत्पूर्वपक्षसमाधाने न सङ्गच्छेते इत्युच्येत तदा आधेयतासबन्धेन घटविशिष्ट घटत्वमिति स्थले पूर्वनिर्दिष्टपूर्वपक्षसमाधाने योजनीये ॥

**मू * अयथार्थानुभवं लक्षयति * तदभाववतीति * नन्विदं संयोगीति प्रमायामतिव्याप्तिरितिचेन्न, यदवच्छेदेन यत्संबन्धाभावः तदवच्छेदेन तत्संबन्धज्ञानस्य विवक्षितत्वात्, संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् संयोगावच्छेदेन संयोगसंबन्धस्य सत्त्वान्नातिव्याप्तिः ॥**

व्या * तत्पदेन प्रकारीभूतधर्मो ग्राह्यः । तदभाववद्विशेष्य-

कत्वं च तन्निष्ठप्रतियोगिताकाभावनिष्ठाधेयतानिरूपिताधिकरण - तावद्विशेष्यकत्वम् । अत्र तन्निष्ठप्रतियोगितायाः प्रकारतावच्छेदक-संबन्धावच्छिन्नत्वं विशेषणं देयम् । अन्यथा रजते इदं रजतमिति प्रमायामतिव्याप्तिः । तत्र संयोगेन रजतत्वाभाववद्रजतविशेष्यकत्व-तत्प्रकारकत्वयोः सत्त्वात्. तन्निवेशे तु संयोगसंबन्धस्य प्रकारता-वच्छेदकत्वाभावान्नातिव्याप्तिः । एवं तन्निष्ठप्रतियोगितायां प्रकारता-वच्छेदकधर्मावच्छिन्नत्वं विशेषणं देयम् । अन्यथा रजते इदं रजत-मिति प्रमायां रजतत्वघटत्वोभयाभाववद्रजतविशेष्यकत्वस्य सत्त्वा-दतिव्याप्तिः । प्रकारतावच्छेदकधर्मातिरिक्तधर्मानवच्छिन्नत्वरूपस्य तादृशधर्मावच्छिन्नत्वस्य निवेशे तु तदुभयाभावीयप्रतियोगितायां तादृशधर्मातिरिक्तोभयत्वरूपधर्मावच्छिन्नत्वस्यैव सत्त्वान्नाति - व्याप्तिः ॥

नच कालिकसंबन्धेन रजतत्वाभावाधिकरणरजतविशेष्य-कत्वस्य सत्त्वान्निरुक्तप्रमायामतिव्याप्तिरिति वाच्यम् । तदभावनिष्ठा-धेयतायाः स्वरूपसंबन्धावच्छिन्नत्वस्यैव निवेशनीयत्वात् । तन्निवेशे स्वरूपेण रजतत्वाभावाधिकरणत्वस्य रजतेऽभावान्नातिव्याप्तिः । नचैवं घटो घटत्वाभाववानिति भ्रमे तदभावरूपघटत्वस्य स्वरूपसंब-न्धेनाधिकरणत्वस्याप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । समवायेन तद-भावाधिकरणत्वस्य विवक्षणीयत्वात् समवायत्वेन घटत्वाधिकरण-त्वस्य प्रसिद्धत्वान्नाव्याप्तिः । नचैवमिदं रजतमिति भ्रमे तदभावात्मक-रजतत्वाभावस्य समवायेनाधिकरणाप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । स्वरूपसमवायान्यतरसंबन्धेन तदभावस्याधिकरणत्वस्य विवक्षणी-यत्वात् । भावप्रकारकभ्रमस्थले स्वरूपसंबन्धेन अभावप्रकार-कभ्रमस्थले समवायसंबन्धेन तदभावाधिकरणमादाय समन्वय-

संभवात् । नच तथापि संयोगेन घटवति भूतले जायमाने इदं संयोगेन घटाभाववदिति भ्रमेऽव्याप्तिः । तदभावात्मकघटस्य स्वरूपसमवायान्यतरसंबन्धेन भूतलेऽविद्यमानत्वात् । स्वरूपसमवायसंयोगान्यतमसंबन्धेन तदभावाधिकरणत्वविवक्षणे तु अयं क्षणः कालिकसंबन्धेन एतत्स्पन्दाभाववानिति अप्रमायां तदभावात्मकतत्स्पन्दस्य पूर्वोक्तान्यतमसंबन्धेनाधिकरणत्वस्य एतत्क्षणरूपविशेष्येऽभावादव्याप्तिः । कालिकस्याप्यन्यतमकोटौ प्रवेशने महागौरवं सजातीयदोषान्तरप्रसङ्गश्च । अतः स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्नत्वेन तदभावनिष्ठाधेयताया विवक्षणीयत्वात्, संबन्धे स्वप्रतियोगिमत्ताग्रहविरोधिताघटकत्वंच स्वप्रतियोगितावच्छेदकसंबन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकत्वरूपं ग्राह्यम् । तथाच वह्न्यादिभावप्रकारकभ्रमस्थले तादृशः संबन्धः स्वरूपसंबन्ध एव भवति. अभावप्रकारकभ्रमस्थले तु यत्संबन्धावच्छिन्नप्रतियोगिताकाभावः प्रकारीभवति स संबन्ध एव तादृशो भवति, यथा समवायसंबन्धावच्छिन्नघटत्वत्वावच्छिन्नप्रतियोगिताकाभावप्रकारकभ्रमस्थले समवायः संबन्धः संयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावभ्रमस्थले संयोगः, एवं स्थलभेदेन स्वरूपकालिकादयोऽपि तादृशा भवन्ति ॥

शिष्यबुद्धिसौकर्याय ह्रदो वह्निमानिति भावप्रकारकभ्रमस्थले समन्वयरीतिः प्रदर्श्यते । तथाहि—स्वपदेन प्रकारीभूतवह्नेरभावो ग्राह्यः । तथाच स्वप्रतियोगितावच्छेदकसंयोगसंबन्धावच्छिन्नस्वप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता या प्रतिबन्धकता संयोगसंबन्धावच्छिन्नवह्नि-

त्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्र - कारतानिरूपितहृदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्धकता तदवच्छेदकीभूता या प्रकारता स्वरूपसंबन्धावच्छिन्न-वह्न्यभावत्वावच्छिन्ना प्रकारता तदवच्छेदकसंबन्धः .स्वरूपसंबन्धः तत्संबन्धावच्छिन्नवह्न्यभावनिष्ठाधेयतानिरूपिताधिकरणतावद्धृदनिष्ठविशेष्यतानिरूपकत्ववह्निप्रकारकत्वयोः संभव इति । घटत्वाभाववान् घट इत्यभावप्रकारकभ्रमस्थले स्वपदेन घटत्वाभावाभावस्य परिग्रहणे स्वप्रतियोगितावच्छेदकसंबन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्ना या प्रतिबध्यतास्वरूपसंबन्धावच्छिन्नघटत्वाभावत्वावच्छिन्नप्रकारताशालिबुद्धित्वाव - च्छिन्ना प्रतिबध्यता, तन्निरूपिता या प्रतिबन्धकता समवायसंबन्धावच्छिन्नघटत्वत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्धकता तदवच्छेदकप्रकारतावच्छेदकसंबन्धः समवायसंबन्धः तत्संबन्धावच्छिन्नतदभावात्मकघटत्वनिष्ठाधेयतानिरूपिताधिकरण - तावद्घटविशेष्यकत्वघटत्वाभावप्रकारकत्वयोः सत्त्वात्समन्वयः । एवमन्यत्रापि ग्राह्यम् । (तेन संबन्धेन तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्येव तदभाववत्ताबुद्धिं प्रति तेन संबन्धेन तद्वत्तानिश्चयस्यापि प्रतिबन्धकत्वं ग्राह्यम् ॥)

तदभावनिष्ठाधेयतायां तादृशाभावत्वावच्छिन्नत्वं विशेषणीयम् । अन्यथा प्रमेयत्वादिव्यापकधर्मावच्छिन्नाधेयतामादाय रजते इदं रजतमिति प्रमायामतिव्याप्तेः । नन्वत्रापि लक्षणे शुक्ताविदं रजतमिति निरवच्छिन्नप्रकारकभ्रमस्थले प्रकारतावच्छेदकधर्माप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । प्रमालक्षणोक्तदिशा प्रकारताव्याप्यधर्मावच्छिन्न (प्रकारताव्याप्य) प्रतियोगिताकाभावघटितस्य वा

(प्रकारतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभाववद्विशेष्यकानुभव-वृत्त्यनुभवत्वव्याप्यजातिमत्त्वरूपस्य) तल्लक्षणस्य वा परिष्कारे दोषाभावात् । अथवा तन्निष्ठप्रकारत्वावच्छिन्नप्रतियोगिताका-भावघटितस्य लक्षणस्य वा परिष्कारे पूर्वोक्तदोषो न सङ्गच्छते । अत्र तदभाववन्निष्ठविशेष्यतातन्निष्ठप्रकारतयोः निरूप्यनिरूपक-भावनिवेशाद्वा तादृशविशेष्यतानिरूपितविशेष्यितायाः तन्निष्ठप्र-कारतानिरूपितप्रकारिताया अवच्छेद्यावच्छेदकभावनिवेशाद्वा न रङ्गरजतयोरिमे रङ्गरजते इति समूहालम्बनप्रमायामतिव्याप्तिः ॥ तत्र रजतत्वाभाववद्रङ्गविशेष्यकत्वरजतत्वप्रकारकत्वयोः रङ्गत्वाभा-ववद्रजतविशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वेऽपि रङ्गत्वाभावव-द्रजतनिष्ठविशेष्यतानिरूपितरङ्गत्वनिष्ठप्रकारतायाः रजतत्वाभावव-द्रङ्गनिष्ठविशेष्यतानिरूपितरजतत्वनिष्ठप्रकारताया वा अभावात् तादृशविशेष्यित्वावच्छिन्नतादृशप्रकारिताया वा अभावाच्च (य-योर्विषयतयोर्निरूप्यनिरूपकभावः तन्निरूपितविषयितयोरवच्छेद्या-वच्छेदकभाव इति नियमोऽत्रानुसन्धेयः) ॥

नन्विदं संयोगीति प्रमायामतिव्याप्तिरिति * अत्र संयोगपदं प्राचीनमते संयोगत्वावच्छिन्नपरमपीति वक्तुं शक्यते; तन्मते संयोगत्वेन संयोगोऽपि अव्याप्यवृत्तिः, नवीनमते तत्पदं कपि-संयोगत्वावच्छिन्नपरमेव । अस्मिन्मते संयोगत्वेन संयोगस्य अव्या-प्यवृत्तित्वानङ्गीकारात् । अत्रायं भावः, कपिसंयोगतदभावयोरव्या-प्यवृत्तित्वेन "अग्रे वृक्षः कपिसंयोगी मूले न" इति प्रतीत्या अग्रावच्छेदेन तदभावात्मककपिसंयोगाभावाधिकरणवृक्षविशेष्यक-त्वकपिसंयोगप्रकारकत्वयोः सत्त्वात् तत्प्रमायामतिव्याप्तिरिति । * यदवच्छेदेनेति * वाक्यार्थस्तु, यदवच्छेदेन मूलावच्छेदेन यत्सं-

बन्धाभावः समवायादियत्संबन्धावच्छिन्नकपिसंयोगादियन्निष्ठप्रति-योगिताकाभावः तदवच्छेदेन मूलावच्छेदेन तत्सबन्धज्ञानस्य तत्सं-बन्धावच्छिन्नतन्निष्ठप्रकारताशालिज्ञानस्य विवक्षणीयत्वादिति। तथा च तदभावावच्छेदकदेशावच्छेद्यत्वावच्छिन्नतन्निष्ठप्रकारताशाल्य-नुभवत्व लक्षण परिष्करणीयमिति भावः। तथा च मूलावच्छिन्नो वृक्षः कपिसयोगी अग्रावच्छिन्नो वृक्षः कपिसयोगाभाववान् इत्यादिभ्रमा-णामेतल्लक्षणलक्ष्यत्व ज्ञेयम्। पूर्वोक्तस्थले तदभावेन नातिव्याप्तिः। * सयोगाभावावच्छेदेनेति * वाक्यार्थस्तु सयोगाभावावच्छेदेन संयोगाभावावच्छेदकदेशावच्छेदेन सयोगसबन्धस्य समवायेन सयोगस्य इति॥

इदमत्रावधेयम्, अव्याप्यवृत्तिकपिसयोगादिप्रकारकभ्रमाणामे-वेद लक्षणम्, व्याप्यवृत्तिरजतत्वादिप्रकारकभ्रमलक्षणं तु यथाश्रुतं तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभवत्वमि-त्येव वक्तव्यम्। अन्यथा व्याप्यवृत्तेरवच्छेदकसद्भावे प्रमाणाभावेन रजतत्वाभावाद्यवच्छेदकदेशाप्रसिद्ध्याव्याप्तेः। तथाच व्याप्यवृत्त्य-व्याप्यवृत्तिप्रकारकभ्रमभेदेन लक्षणभेदोऽवश्यमङ्गीकार्य इति पर्य-वस्यति। नन्वेवं वृक्षः कपिसयोगीति प्रमायामव्याप्यवृत्तिप्रकारक-भ्रमलक्षणस्य निरुक्तस्याभावेनातिव्याप्त्यसभवेऽपि निरुक्तस्य व्या-प्यवृत्तित्वप्रकारकभ्रमलक्षणस्यातिव्याप्तिर्दुर्वारा। तत्र मूलावच्छे-देन तदभाववद्वृक्षविशेष्यतानिरूपिततत्प्रकारतायाः सत्त्वादिति वाच्यम्। तदभावाधिकरणतायां निरवच्छिन्नत्वस्य निवेशनी-यत्वात्। तन्निवेशे तु वृक्षादिनिष्ठाधिकरणताया मूला-वच्छिन्नतया निरवच्छिन्नत्वाभावान्नातिव्याप्तिः। अत एव अलक्ष्ये-ऽव्याप्यवृत्तिप्रकारकभ्रमे मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादावप्य-

तिव्याप्तिरिति शङ्का निरस्ता। वृक्षादौ तदधिकरणताया निरवच्छिन्नत्वाभावात्। ननु तदभावनिष्ठाधेयतायां स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्नत्वस्य तदधिकरणतायां निरवच्छिन्नत्वस्य वा निवेशेनैव इदं संयोगीति प्रमायामतिव्याप्तिर्वार्यते, तथाहि, इदं सयोगीति ज्ञानं प्रति इदं संयोगाभाववदिति निश्चयस्याव्याप्यवृत्तित्वज्ञानास्कन्दितत्वे किञ्चिदवच्छेद्यस्वरूपसंबन्धेन सयोगाभावावगाहितयाऽप्रतिबन्धकत्वेन अव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वे निरवच्छिन्नस्वरूपसंबन्धेन संयोगाभावावगाहिनः तादृशबाधनिश्चयस्य प्रतिबन्धकत्वस्य वक्तव्यतया तादृशस्वप्रतियोगिमत्ताग्रहविरोधिताघटकनिरवच्छिन्नस्वरूपसम्बन्धेन तदभावाधिकरणगुणविशेष्यकत्वस्य निरवच्छिन्नतदभावाधिकरणताश्रयगुणविशेष्यकत्वस्य वा निरुक्तप्रमायामभावेनैवातिव्याप्तिवारणेन व्याप्यवृत्त्यव्याप्यवृत्तिप्रकारकस्थलभेदेन तल्लक्षणभेदाङ्गीकरणमनावश्यकमिति वाच्यम्। वृक्षः कपिसंयोगीति बुद्धिं प्रति अव्याप्यवृत्तित्वज्ञानानास्कन्दितशुद्धस्वरूपसंबन्धावच्छिन्नकपिसंयोगाभावत्वावच्छिन्नप्रकारतानिरूपितवृक्षत्वावच्छिन्नविशेष्यताशालिनिश्चयस्यैव प्रतिबन्धकत्वमङ्गीक्रियते, नतु निरवच्छिन्नस्वरूपसबन्धावच्छिन्नप्रकारताशालिनिश्चयत्वेन ; तथा च स्वप्रतियोगिमत्ताग्रहविरोधिताघटकशुद्धस्वरूपसबन्धेन तदभावाधिकरणत्वस्य वृक्षादावपि सत्त्वादतिव्याप्तिसङ्गतेः। निरवच्छिन्नस्वरूपसबन्धेन तदभाववत्तानिश्चयस्य प्रतिबन्धकतास्वीकारे मूलावच्छिन्नो वृक्षः कपिसंयोगीति अव्याप्यवृत्तित्वप्रकारकभ्रमेऽव्याप्त्यापत्तेः। तत्र वृक्षे निरवच्छिन्नस्वरूपसंबन्धेन तदभावाधिकरणतायाः निरवच्छिन्नतदभावाधिकरणताया वा विशेष्ये मूलावच्छिन्नवृक्षेऽभावात्। अतः स्थलभेदेन लक्षणद्वयमङ्गीकार्यमेवेति सिद्धम्॥

(ननु स्वप्रतियोग्यनधिकरणतदभावाधिकरणविशेष्यकत्वघटित-सर्वभ्रमसाधारणं लक्षणमेकमेवोच्यते इद संयोगीति प्रमायां तद-भावाधिकरणवृक्षादेः स्वप्रतियोगिसयोगाधिकरणत्वेनातिव्याप्त्य-भावादिति चेन्न, मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादौ "विशिष्ट शुद्धान्नातिरिच्यते" इति न्यायेन मूलावच्छिन्नवृक्षस्य वृक्षानति-रिक्ततया तत्र स्वप्रतियोग्यधिकरणत्वमेव वर्तते, विशिष्टशुद्धयोर्भे-दाभ्युपगमेऽपि भेदस्य व्याप्यवृत्तित्वे प्रमाणाभावेन मूलावच्छिन्न-वृक्षे (मूलावच्छेदेन वृक्षे) स्वप्रतियोग्यधिकरणभेदस्याप्रसिद्धत्वेन स्वप्रतियोग्यनधिकरणतदभावाधिकरणमूलावच्छिन्नवृक्षरूपविशेष्या-प्रसिद्ध्या तत्राव्याप्तेर्दुर्वारत्वात् । अतस्तदभावावच्छेदकदेशावच्छे-द्यत्वावच्छिन्नतन्निष्ठप्रकारताघटितमव्याप्यवृत्तिप्रकारकभ्रमलक्षणं, स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नाधेयतानिरूपित-निरवच्छिन्नाधिकरणताघटित स्वप्रतियोग्यनधिकरणतदभावाधि-करणनिष्ठविशेष्यताघटितं वा व्याप्यवृत्तिप्रकारकभ्रमलक्षणं च पृथगङ्गीकार्यमेवेत्यलं विस्तरेण ॥

ननु घटे पटत्वमिति भ्रमे प्रकारतावच्छेदकाधेयतासम्बन्धाव-च्छिन्नप्रतियोगिताकाभावस्याप्रसिद्ध्याव्याप्तिः, तादात्म्यसम्बन्धाति-रिक्तवृत्त्यनियामकसंबन्धावच्छिन्नप्रतियोगिताया अप्रसिद्धत्वात्, अन्योन्याभावानुरोधेन तादात्म्यरूपवृत्त्यनियामकसम्बन्धावच्छि-न्नायाः प्रतियोगितायाः केवलमङ्गीकृतत्वात्, वृत्त्यनियामकसम्बन्धा-वच्छिन्नप्रतियोगित्वानङ्गीकारपक्षेऽपि वृत्त्यनियामकसम्बन्धावच्छि-न्नावच्छेदकताकप्रतियोगिताकभेदस्याङ्गीकृततया तद्वारणाय प्रकार-तावच्छेदकसंबन्धावच्छिन्नतन्निष्ठावच्छेदकताकप्रतियोगिताकभेदस्य प्रसिद्धस्य तदभावस्थाने निवेशेऽपि अग्रावच्छिन्नवृक्षः कपिसंयोगा-

भाववानित्यत्र भ्रमे कपिसंयोगाभावस्य केवलान्वयितया कपिसंयोगाभाववद्भेदस्याप्रसिद्धयाऽव्याप्तिस्तदवस्थैवेति चेन्न, प्रकारतावच्छेदकसम्बन्धावच्छिन्नतन्निष्ठसम्बद्धतानिरूपितसम्बन्धित्वाभावघटितस्य (तादृशसम्बन्धितावद्भेदघटितस्य) लक्षणस्य परिष्कारे दोषाभावात् इत्यलं विचारेण ॥

**मू * यथार्थानुभवं विभजते * यथार्थेति * प्रसङ्गात् प्रमाकरणं विभजते * तत्करणमिति * प्रमाकरणमित्यर्थः । प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणम् ॥**

व्या * प्रमाकरणमिति * प्रमाकरणत्वं च प्रमानिष्ठकार्यतानिरूपितकारणताश्रयत्वे सति प्रमाव्यापारजनकत्वम् । अयं नीलः अयमुष्णः अयं भेरीशब्दः अयं मधुरः अयं सुरभिः अहं सुखीत्यादिप्रत्यक्षप्रमानिष्ठकार्यतानिरूपितकारणताश्रयत्वं तत्तदिन्द्रियमनस्संयोगरूपव्यापारजनकत्वं च इन्द्रियरूपे प्रत्यक्षप्रमाणे सर्वत्रापि वर्तत इति समन्वयो ग्राह्यः । पर्वतो वह्निमानित्यनुमित्यात्मकप्रमाकरणत्व वह्निव्याप्यधूमवानिति परामर्शात्मकव्यापारजनकत्वं च व्याप्तिज्ञानात्मकानुमानप्रमाणे वर्तत इति समन्वयः । अय (गवयो) गवयपदवाच्य इत्याद्युपमित्यात्मकप्रमाकरणत्वस्य गोसदृशो गवयपदवाच्य इति स्मृत्यात्मकव्यापारजनकत्वस्य च गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थज्ञानरूपोपमानप्रमाणे सत्त्वात्समन्वयः । नीलाभिन्नो घट इत्यादिशाब्दबोधात्मकप्रमाकारणत्वस्य नीलो घट इत्याद्युपस्थित्यात्मकव्यापारजनकत्वस्य च नीलो घट इत्यादिज्ञानात्मकशब्दप्रमाणे सत्त्वात्समन्वयः । नच स्मृत्यात्मकप्रमाकारणत्वस्य संस्काररूपव्यापारजनकत्वस्य च अनुभवे

सत्त्वेनातिव्याप्त्यानुभवस्यापि प्रमाणान्तरतापत्तिरिति वाच्यम्। प्रमात्वस्य स्मृतिव्यावृत्तानुभवत्वघटिततया स्मृतौ प्रमात्वाभावेन दोषाभावात्। नचेश्वरादृष्टादौ दलद्वयसत्त्वादतिव्याप्तिरिति वाच्यम्। प्रमात्वावच्छिन्नकार्यतानिरूपितकारणत्वस्य तदर्थत्वात्, कार्यसाधारणकारणे तत्र तस्याभावान्नातिव्याप्तिः। नच प्रमाविशेष प्रत्येव तत्तत्प्रमाणानां कारणत्वस्याङ्गीकृततया प्रमात्वावच्छिन्नं प्रति कस्यापि प्रमाणस्य कारणत्वाभावेन प्रमात्वावच्छिन्नकार्यताया अप्रसिद्ध्या असम्भवप्रसङ्ग इति वाच्यम्। प्रमात्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणताया विवक्षितत्वात्, प्रत्यक्षत्वादिकं प्रमात्वव्याप्यं भवतीति नासम्भवः। (अत्र न्यूनदेशवृत्तित्वरूपस्य अनतिरिक्तवृत्तित्वरूपस्य वा व्याप्यत्वस्य निवेशेऽपि न क्षतिः। अत्र न साक्षाद्व्याप्यत्वं विवक्षणीयम् प्रत्यक्षानुमितित्वादेरेव साक्षात्प्रमात्वव्याप्यतया तद्धर्मावच्छिन्नकार्यताया अप्यप्रसिद्ध्याऽसम्भवापत्तेः। परन्तु साक्षात्परम्परासाधारणमेव व्याप्यत्वं तन्न्यूनदेशवृत्तित्वरूपं तदनतिरिक्तवृत्तित्वरूपं वा भवतु। साक्षाद्व्याप्यत्वं तु तद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वम्) नच भ्रमात्मकानुमित्यादिजनकानुमानादिषु प्रमाकरणत्वाभावेनाव्याप्तिरिति वाच्यम्, अत्र यथार्थानुभवस्यैव चतुर्धा विभजनेन तत्करणानामेव प्रमाणत्वेन विभजनेन च अन्येषां प्रमाणत्वव्यवहारविरहेऽपि न क्षतिः (अनुभवत्वव्याप्यधर्मावच्छिन्नप्रमावृत्तिकार्यतानिरूपितकारणत्वं वा तल्लक्षणं विवक्षणीयम्। प्रमावृत्तित्वानिवेशे भ्रमजनकानुमानेऽतिप्रसङ्गः। नच सम्भवैतिह्यचेष्टादीनामपि प्रमाकरणत्वात्प्रमाणान्तरतापत्तिरिति वाच्यम्, दीपिकायामेव शब्दपरिच्छेदे तेषां प्रमाणान्तरत्वस्य निराक्रियमाणत्वात्)

मू * करणलक्षणमाह * असाधारणेति * दिक्कालादावतिव्याप्तिवारणाय साधारणेति ॥ कारणलक्षणमाह * कार्येति * पूर्ववृत्तिकारणमित्युक्ते रासभादावतिव्याप्तिः स्यादतो नियतेति । तावन्मात्रे कृते कार्येऽतिव्याप्तिरतः पूर्ववृत्तीति । ननु तन्तुरूपमपि पटं प्रति कारणं स्यादिति चेन्न, अनन्यथासिद्धत्वे सतीति विशेषणात् अनन्यथासिद्धत्वमन्यथासिद्धिरहितत्वम् ॥

व्या * असाधारणेतीति * यद्विलम्बात्प्रकृतकार्यानुत्पादः तत्कारणत्वमेवासाधारणकारणत्वम्, अत ईश्वरादृष्टादौ नातिप्रसङ्गः * कार्येतीति * कार्यनियतत्व च कार्यव्यापकत्वम्, तच्च कार्यनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्यत्यन्ताभावीयप्रतियोगिताशून्यत्वम्, अत्र कार्यनिष्ठाधेयतायां कार्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । अन्यथा कालिकसम्बन्धेनानुमित्यात्मककार्याधिकरणे कालादौ विद्यमानस्यात्यन्ताभावस्य प्रतियोगित्वेन व्याप्तिज्ञानादावनुमितिकारणत्वाभावप्रसङ्गः । तत्र प्रतियोगितायां कारणतावच्छेदकसम्बन्धावच्छिन्नत्व विशेषणं देयम्, अन्यथा अनुमित्याद्यात्मककार्याधिकरणे आत्मनि विद्यमानस्याभावस्य संयोगसम्बन्धेन प्रतियोगित्वेन व्याप्तिज्ञानादावव्याप्तेः । नन्वेवमपि अनुमित्यात्मककार्याधिकरणे आत्मनि विद्यमानस्य पूर्वक्षणवृत्तित्वविशिष्टव्याप्तिज्ञानाभावस्य व्याप्तिज्ञानघटत्वोभयाभावस्य च प्रतियोगित्वेन व्याप्तिज्ञानस्याव्याप्तिरिति चेन्न, प्रतियोगितायां वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नत्वयोर्निवेशनीयत्वात्, (एकत्वान-

वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्व व्यासज्यवृत्तित्वम्, तेच धर्मा उभयत्वत्रित्वादयः)

अथवा विशिष्टाभावाभयाभावादिकमादाय दोषवारणाय कार्याधिकरणवृत्त्यत्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वरूपं वा लक्षण परिष्करणीयम्। वैशिष्ट्योभयत्वादेस्तादृशाभावप्रतियोगितावच्छेदकत्वेन व्याप्तिज्ञानत्वस्य तदनवच्छेदकत्वेन तद्वत्त्वमादाय समन्वयसम्भवात्। नच व्याप्तिज्ञानत्वस्यापि निरुक्ताभावप्रतियोगितावच्छेदकत्वेनाव्याप्तिस्तदवस्थेति वाच्यम्, कार्याधिकरणवृत्त्यत्यन्ताभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक यद्रूप तद्रूपभिन्न यद्रूप तद्रूपावच्छिन्नावच्छिन्नत्वं कारणलक्षण वक्तव्यम, विशिष्टाभावीयप्रतियोगितायाः परिग्रहणे तादृश रूप वैशिष्ट्यव्याप्तिज्ञानत्वोभयगतं द्वित्व भवति, उभयाभावीयप्रतियोगितायाः परिग्रहणे व्याप्तिज्ञानत्वघटत्वोभयत्वगतत्रित्व भवति, तद्भिन्नरूप व्याप्तिज्ञानत्वगतमेकत्वमेव तदवच्छिन्नं व्याप्तिज्ञानत्व तदवच्छिन्नत्व व्याप्तिज्ञाने वर्तत इति समन्वयः। (अत्रोभयत्रावच्छिन्नत्व विशिष्टत्वरूपम्) नचैवमपि अनुमित्यात्मकंकार्याधिकरणे आत्मनि प्रमेयाभावस्यासम्भवेन तादृशाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकप्रमेयत्वगतैकत्वावच्छिन्नावच्छिन्नत्वस्य अनुमित्याद्यकारणीभूतपटादावपि सत्त्वेनातिव्याप्तिरिति वाच्यम्, तादृशाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं यत् कारणतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक तदवच्छिन्नावच्छिन्नत्वं लक्षण बोध्यम्। नच कारणलक्षणे कारणताप्रवेशने आत्माश्रायादिदोषप्रसङ्ग इति वाच्यम्,

एतल्लक्षणघटककारणत्वस्य स्वरूपसम्बन्धरूपस्य विवक्षितत्वेन दोषाभावात्। अत्र कारणतावच्छेदकत्वं च स्वरूपसम्बन्धरूपावच्छेदकत्वमेव नानतिरिक्तवृत्तित्वरूपम्।

ननु दण्डरूपादावतिव्याप्तिवारणाय अनन्यथासिद्धत्वस्य निवेशनीयतया रासभादेः कार्यस्य घटादेश्च घटं प्रत्यन्यथासिद्धत्वेन एतद्दलेनैव रासभघटादिष्वतिव्याप्तिवारणसम्भवात्कार्यानियतत्वपूर्ववृत्तित्वदलयोर्वैयर्थ्यं दुर्वारमिति चेन्न, अननुगतपूर्ववृत्तित्वघटितत्वेन अन्यथासिद्धत्वस्य सर्वानुगतस्य निर्वक्तुमशक्यतया यत्र यत्र प्रामाणिकानामन्यथासिद्धत्वव्यवहारः प्रातिस्विकरूपेण तत्तद्भेदकूटस्य निवेशनीयतया नियतत्वदलाभावे कार्यनियतानां तदनियतानां च अन्यथासिद्धानां बहूना प्रत्येकं भेदकूटस्य निवेशनीयतया महागौरवम्। एवं पूर्ववृत्तित्वदलाभावे कार्यपूर्ववृत्तीनां तत्पूर्ववृत्तिभिन्नानां च अन्यथासिद्धानां भेदकूटस्य निवेशनीयतया तथा गौरवम्। तद्दलद्वयनिवेशे तु नियतत्वदलेनानियतान्यथासिद्धानां पूर्ववृत्तित्वदलेनापूर्ववृत्तीना च अन्यथासिद्धानां वारणं सम्भवति। ततश्च नियतपूर्ववृत्तीनामेवान्यथासिद्धानामल्पसंख्याकानां भेदकूटस्य लक्षणे निवेशनीयतया अनियतापूर्ववर्त्यन्यथासिद्धभेदकूटानिवेशप्रयोज्यमहागौरवपरिहारकत्वेन तद्दलसार्थक्य बोध्यम्। अत्र पूर्ववृत्तित्वं च कार्याव्यवहितप्राक्क्षणवृत्तित्वरूपं ग्राह्यम्, न तु तत्पूर्वकालवृत्तित्वमात्रम्। तथा सति कार्यव्यवहितपूर्ववृत्तीनामप्यन्यथासिद्धानां भेदकूटस्य निवेशनीयतया गौरवं बोध्यम्। कार्याव्यवहितप्राक्क्षणवृत्तित्वनिवेशादेव कार्यनियतत्वपूर्ववृत्तित्वयोः सत्त्वेन उत्तरदिवसीयानुमितिं प्रति पूर्वदिवसीयपरामर्शस्य कारणत्वप्रसङ्ग इति शङ्का निरस्ता, तत्परामर्शस्य कार्याव्यवहितपूर्ववृत्तित्वाभावात्॥

**मू ॐ अन्यथासिद्धिस्त्रिविधा, येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तत्तेनान्यथासिद्धम्, यथा तन्तुना तन्तुरूपं तन्तुत्वं च पटं प्रति। अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम्। यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञात एव पटं प्रत्याकाशस्य। अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तत्सहभूतमन्यथासिद्धम्, यथा पाकजस्थले गन्धं प्रति रूपप्रागभावः। एवमनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम् ॥**

व्या ॐ अन्यत्रान्यथासिद्धस्य पञ्चविधत्वेऽपि मणिकारमताभिप्रायेण त्रैविध्यमाह ॐ त्रिविधेति ॐ प्रथमान्यथासिद्धमाह ॐ येन सहेति ॐ वाक्यार्थ इत्थम्, येन तन्तुना सहैव (तन्तुद्वारा) यस्य तन्तुत्वतन्तुरूपादे., य पट प्रति, पूर्ववृत्तित्वमवगम्यते तं पटं प्रति तत् तन्तुरूपादिक तेन तन्तुना (तन्त्वपेक्षया) अन्यथासिद्धमित्यर्थः, येन सहेत्यत्र सहितत्व एकज्ञानविषयत्वं बोध्यम्। तन्तुत्वतन्तुरूपयोः पटकारणत्वे ज्ञायमाने तज्ज्ञानस्य नियतं स्वाश्रयतन्तुविषयकत्वेन तन्तुविषयकज्ञानविषयस्यैव तन्तुत्वस्य तन्तुरूपस्य च कारणत्वस्यावगम्यमानतया तन्तुरूपादिक पटं प्रत्यन्यथासिद्धमिति भावः। येनेत्यस्य स्वतन्त्रान्वयव्यतिरेकशालिना येनेत्यर्थो वक्तव्यः, अन्यथा तन्तुत्वेन सह तन्तोरपि पूर्ववृत्तित्वस्य अवगम्यतया तन्तुत्वविषयकज्ञानविषयत्वेन तन्तोरप्यन्यथासिद्धत्वप्रसङ्गः, तन्निवेशे तु न तत्प्रसङ्गसम्भव., तथाहि स्वतन्त्रान्वयव्यतिरेकशालित्वं नाम इतरान्वयव्यतिरेकानधीनान्वयव्यतिरेकशालित्वम्। तथाच तन्तुत्वान्वयव्यतिरेकयोः तन्त्वन्वयव्यतिरे-

काधीनतैव, तथाहि, तन्तोस्तादात्म्यसम्बन्धेन पटं प्रत्यन्वयव्यतिरेकयोर्गृह्यमाणयोस्सतोः तन्तुत्वतन्तुरूपयोः स्वाश्रयतादात्म्यसम्बन्धेनान्वयव्यतिरेकौ गृह्येते इति तन्तुद्वारैव तयोरन्वयव्यतिरेकौ विद्येते; अतः स्वतन्त्रान्वयव्यतिरेकशालित्वं तन्तुत्वादेर्न सम्भवतीति न पूर्वोक्तदोषः। यस्येत्यत्र स्वतन्त्रान्वयव्यतिरेकशून्यस्य यस्येत्यर्थो वक्तव्यः, अन्यथा तन्तुना सहैव तन्तुसंयोगस्य पटं प्रति पूर्ववृत्तित्वस्य गृह्यमाणतया तन्तुविषयकज्ञानविषयत्वेन तन्तुसंयोगस्यापि पटं प्रत्यन्यथासिद्धत्वप्रसङ्गः, तन्निवेशे तन्तुसंयोगस्यापि तन्तुद्वारतां विनैव साक्षात्समवायेनैव पटं प्रति अन्वयव्यतिरेकसद्भावेन स्वतन्त्रान्वयव्यतिरेकशून्यत्वं तन्तुसंयोगस्य न सम्भवतीति न निरुक्तातिप्रसङ्गः। एवं दण्डादिना दण्डत्वदण्डरूपादिकं घटं प्रत्यन्यथासिद्धमिति ज्ञेयम्॥

अत्रायं भावः, तन्तुत्वतन्तुरूपादिनिष्ठपटपूर्ववृत्तित्वज्ञानस्य तन्तुविषयकत्वेन तन्तुत्वतन्तुरूपादेस्तन्त्वपेक्षयाऽन्यथासिद्धिरिति। तथाच यद्रूपावच्छिन्नविषयता यत्कार्यनिरूपितपूर्ववृत्तित्वनिष्ठप्रकारतानिरूपितयद्रूपावच्छिन्नविषयताव्यापिका तद्रूपावच्छिन्नापेक्षया तद्रूपावच्छिन्नस्य तत्कार्यं प्रत्यन्यथासिद्धत्वमिति, अत्र प्रथमयद्रूपतद्रूपपदे तन्तुत्वादिपरे द्वितीययद्रूपतद्रूपपदे तन्तुरूपत्वादिपरे ग्राह्ये। केचित्तु इतरान्वयव्यतिरेकाधीनान्वयव्यतिरेकशालित्वं (स्वतन्त्रान्वयव्यतिरेकशून्यत्वम्) अन्यथासिद्धत्वमिति वदन्ति, तन्तुत्वतन्तुरूपादौ तन्त्वन्वयव्यतिरेकाधीनान्वयव्यतिरेकशालित्वं सम्भवतीति समन्वयः। एवं दण्डत्वदण्डरूपादावपि, तन्तौ तन्तुसंयोगे च तन्नास्तीति पटं प्रति नान्यथासिद्धत्वम्॥

द्वितीयान्यथासिद्धमाह * अन्यं प्रतीति * वाक्यार्थस्तु, अन्यं

प्रति प्रकृतकार्यान्यशब्द प्रति, पूर्ववृत्तित्वे ज्ञात एव, यस्य आकाशस्य, यं पट प्रति, पूर्ववृत्तित्वमवगम्यते, तं पटं प्रति, तत् आकाशः अन्यथासिद्धः। प्रकृतकार्यान्यनिरूपितपूर्ववृत्तित्वप्रकारकग्रहाधीनप्रकृतकार्यनिरूपितपूर्ववृत्तित्वप्रकारकग्रहविषयत्व द्वितीयान्यथासिद्धत्व ज्ञेयम्। अयं भावः, आकाशत्व शब्दसमवायिकारणत्वम्, तच्च शब्दपूर्ववृत्तित्वघटितम्। तथाचाकाश पटपूर्ववृत्तीत्याकारकज्ञान प्रति "घटितबुद्धौ घटकज्ञानस्य कारणत्वम्" इति न्यायेन आकाशत्वज्ञानं कारणम्, तच्चाकाशत्वज्ञान प्रकृतकार्यान्यशब्दनिरूपितपूर्ववृत्तित्वविषयक, तथाच प्रकृतकार्यान्यनिरूपितपूर्ववृत्तित्वप्रकारकग्रहः शब्दनिरूपितपूर्ववृत्तित्वप्रकारकग्रहः (गगनत्वग्रहः) तदधीनो यः प्रकृतकार्यनिरूपितपूर्ववृत्तित्वग्रहः गगन पटादिपूर्ववृत्तीति ग्रहः, तद्विषयत्व गगने वर्तत इति पटादिकं प्रति गगनमन्यथासिद्धमिति भावः। कुलालजनकस्यापि घटं प्रति द्वितीयान्यथासिद्धत्वमेव, प्रकृतकार्यान्यकुलाल प्रति पूर्ववृत्तित्वे ज्ञात एव प्रकृतघटादिकं प्रति तस्य पूर्ववृत्तित्वस्य ज्ञायमानत्वात्॥

तृतीयान्यथासिद्धमुदाहरति * अन्यत्रेति * अन्यत्र अपाकजस्थले, गन्ध प्रति कॢप्तनियतपूर्ववृत्तिना गन्धप्रागभावेनैव पाकजस्थलेऽपि गन्धरूपकार्यसम्भवे तत्सहभूतो रूपप्रागभावः गन्धं प्रत्यन्यथासिद्ध इति। अत्रायमाशयः, पुनस्तत्कार्योत्पत्त्यापत्तिवारणाय कार्यमात्रे कार्यप्रागभावस्य कारणत्व वाच्यम्, तथाच गन्धं प्रति गन्धप्रागभावस्य रूपं प्रति रूपप्रागभावस्य एवमन्यत्रापि तत्तत्कार्यं प्रति तत्तत्कार्यप्रागभावानां कारणत्व विद्यते। एवञ्च अपाकजस्थले रूपरसाद्युत्पत्त्यनन्तरं गन्धे जायमाने सति

तदा गन्धं प्रति गन्धप्रागभावस्यैव कारणत्वमङ्गीकार्यम्। न तु रूपप्रागभावस्य, तदानीं रूपस्यैव सत्त्वात्, पाकजस्थले रूपगन्धादीनां युगपदेवोत्पद्यमानतया रूपगन्धादिप्रागभावानां सर्वेषामप्येकदा वर्तमानत्वेन गन्धं प्रति गन्धप्रागभावो रूपप्रागभावो वा हेतुरिति संशयस्सम्भवति, तथापि अपाकजस्थल इव पाकजस्थलेऽपि गन्धं प्रति गन्धप्रागभावस्यैव कारणत्वे वक्तव्ये तत्सहभूतरूपप्रागभावस्यान्यथासिद्धत्वमेव वक्तव्यमिति ॥

ननु विश्वनाथपञ्चाननभट्टाचार्यमते अन्यथासिद्धस्य पञ्चविधत्वेन तन्मतीयप्रथमद्वितीयान्यथासिद्धयोः दण्डत्वदण्डरूपयोः एतन्मतीयप्रथमान्यथासिद्धे तन्मतीयतृतीयचतुर्थान्यथासिद्धयोः व्योमकुलालजनकयोरेतन्मते द्वितीयान्यथासिद्धेऽन्तर्भावसम्भवे तन्मते पञ्चमान्यथासिद्धस्य रासभस्यैतन्मते कुत्राप्यन्तर्भावासम्भवेन तस्यान्यथासिद्धत्वानुपपत्तिः, प्रकृततृतीयान्यथासिद्धलक्षणेनाप्यनाक्रान्तत्वादिति चेन्न, लघुनियतपूर्ववर्तिभिन्नत्वस्यैव तृतीयान्यथासिद्धत्वेन विवक्षितत्वात्, रासभादौ लघुनियतपूर्ववर्तिकपालादिभिन्नत्वस्य सत्त्वेनानुपपत्त्यभावात्। लघुत्वं च शरीरकृतमुपस्थितिकृतं सम्बन्धकृतं चेति त्रिविधम्, तत्राद्यं प्रत्यक्ष प्रति अनेकद्रव्यसमवेतत्वा (समवेतसमवेतवृत्तिद्रव्यत्वा) पेक्षया प्रत्यक्षकारणत्वेन क्लृप्ते महत्त्वे वर्तते, अत्र महत्त्वजातिरूपकारणतावच्छेदकस्य तदपेक्षया लघुशरीरत्वात्। द्वितीयं गन्धं प्रति रूपप्रागभावापेक्षया गन्धप्रागभावे वर्तते, कार्यरूपतया प्रतियोगिनो गन्धस्य शीघ्रोपस्थितत्वात्। तृतीयं दण्डत्वदण्डरूपाद्यपेक्षया दण्डादौ विद्यते, तत्र स्वाश्रयजन्यभ्रमिजन्यभ्रमिवत्त्वरूपकारणतावच्छेदकसंबन्धापेक्षया स्वजन्यभ्रमिजन्यभ्रमिवत्त्वसम्बन्धस्य लघोः दण्डस्य

कारणत्वे सम्भवात् । नचैवं सति सर्वेषामप्यन्यथासिद्धानामत्रैवा-न्तर्भावात्त्रैविध्यकथनमसङ्गतामिति वाच्यम्, शिष्यबुद्धिवैशद्यायैव तथा कथनात् ॥

**मू * कार्यलक्षणमाह * कार्यमिति * कारणं विभजते * कारणमिति * समवायिकारणलक्षणमाह * यत्समवेत-मिति * यस्मिन् समवेतमित्यर्थः । असमवायि कारणं लक्षणयति * कार्येति * कार्येणेत्येतदुदाहरति * तन्तु-संयोग इति * कार्येण पटेन सह एकस्मिन् तन्तौ समवे-तत्वात्तन्तुसंयोगः पटस्यासमवायिकारणमित्यर्थः । कारणे-नेत्युदाहरति * तन्तुरूपमिति * कारणेन पटेन सह एक-स्मिन् तन्तौ समवेतत्वात् तन्तुरूपं पटरूपस्यासमवायिकारण-मित्यर्थः । निमित्तकारणं लक्षयति * तदुभयेति * सम-वाय्यसमवायिकारणभिन्नं कारणं निमित्तकारणमित्यर्थः । करणलक्षणमुपसंहरति * तदेतदिति ***

व्या * असमवायिकारण लक्षयतीति * समवायसम्बन्धाव-च्छिन्नकार्यतानिरूपितसमवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धा-वच्छिन्नकारणताश्रयत्व समवायस्वसमवायिसमवेतत्वान्यतरसम्ब-न्धेन समवायिकारणवृत्तित्वे सति प्रकृत कार्यकारणत्व वा प्रथम-द्वितीयासमवायिकारणसामान्यलक्षण बोध्यम्, एकैकसम्बन्धमात्र-निवेशने एकैकासमवायिकारणेऽव्याप्तिः, अतोऽन्यतरसबन्धनि-वेशः । नचैव सति तुरीतन्तुसयोगस्य पटं प्रति वेगादीना-मभिघातसंयोगं प्रति ज्ञानस्येच्छां प्रति इच्छायाः कृति प्रति च

असमवायिकारणत्वं स्यात्, एतेषां तत्सामान्यलक्षणद्वयाक्रान्तत्वा-दिति वाच्यम्, आत्मविशेषगुणानां कुत्राप्यसमवायिकारणत्वानङ्गी-कारेण तत्सामान्यलक्षणे ज्ञानेच्छादिभिन्नत्वनिवेशे बाधकाभावेऽपि तुरीतन्तुसंयोगस्य तुरीपटसंयोगं प्रति वेगस्य वेगान्तरस्पन्दादिकं प्रति च असमवायिकारणत्वेन तत्तद्भिन्नत्वस्य सामान्यलक्षणे निवेशे तन्तुसंयोगवेगादावव्याप्तिरूपबाधकसद्भावेन पटासमवायि-कारणलक्षणे (विशेषलक्षणे) तुरीतन्तुसंयोगभिन्नत्वस्य अभि-घातासमवायिकारणलक्षणे वेगभिन्नत्वस्य निवेशः सामान्यलक्षणे ज्ञानेच्छादिनिवेशश्च कार्यः। नच तद्विशेषलक्षणयोः तुरीतन्तु-संयोगवेगादावतिव्याप्त्यसम्भवेऽपि तत्सामान्यलक्षणस्य तत्राति-व्याप्तिर्दुर्वारैवेति वाच्यम्, तत्रातिव्याप्तिसम्भवेऽपि तत्राप्याद्यायां तुरीतन्तुसंयोगे पटासमवायिकारणत्वापत्तौ तुरीतन्तुसंयोगभिन्नत्व-घटितपटासमवायिकारणत्वस्यैव विषयत्वाङ्गीकारेण तत्र तस्य बाधान्नानुपपत्तिः। नच द्वितीयसामान्यलक्षणस्य तन्तुत्वतन्तु-रूपादावपि सत्त्वादतिव्याप्तिरिति वाच्यम्। प्रकृतकार्यकारण-त्वस्यापि निविष्टत्वात् तन्तुत्वादौ पटकारणत्वाभावान्नाति-व्याप्तिः॥

**मू * प्रत्यक्षप्रमाणलक्षणमाह * तत्रेति * प्रमाण-चतुष्टयमध्य इत्यर्थः। प्रत्यक्षज्ञानस्य लक्षणमाह * इन्द्रि-येति * इन्द्रियं चक्षुरादिकम् अर्थो घटादिः तयोः सन्नि-कर्षः संयोगादिः तज्जन्यं ज्ञानमित्यर्थः। तद्विभजते * तद्द्विविधमिति * निर्विकल्पकस्य लक्षणमाह * निष्प्र-कारकमिति * विशेष्यविशेषणसम्बन्धानवगाहिज्ञानमि-**

त्यर्थः । ननु निर्विकल्पके किं प्रमाणमिति चेन्न, गौरिति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् दण्डी पुरुष इति विशिष्टज्ञानवदित्यनुमानस्य प्रमाणत्वात्, विशेषणज्ञानस्यापि सविकल्पकत्वेऽनवस्थाप्रसङ्गान्निर्विकल्पकत्व-सिद्धिः। सविकल्पकं लक्षयति * सप्रकारकमिति * नामजात्यादिविशेष्यविशेषणसम्बन्धावगाहिज्ञानमित्यर्थः । सविकल्पकमुदाहरति–यथेति ।

व्या * प्रत्यक्षज्ञानलक्षणमिति * (ननु योगिप्रत्यक्षस्य योगजन्यत्वेन सामान्यलक्षणज्ञानलक्षणजन्यप्रत्यक्षयोः सामान्यज्ञानजन्यत्वेन ईश्वरप्रत्यक्षस्य नित्यत्वेन च इन्द्रियार्थसन्निकर्षजन्यत्वघटितलक्षणस्य तत्राभावेनाव्याप्तिरिति चेन्न, याकाञ्चित्प्रत्यक्षव्यक्तिमादाय तद्व्यक्तिवृत्तिः अनुमित्यवृत्तिः या जातिः तादृशजातिमत्त्वस्य लक्षणत्वेन विवक्षितत्वात् प्रत्यक्षत्वजातिमादाय समन्वयसम्भवात्। यद्वा जन्यलौकिकप्रत्यक्षस्यैवेद लक्षणमिति नानुपपत्तिः। न च प्रत्यक्षे विषयस्य कारणतया इन्द्रियार्थसन्निकर्षविषयकप्रत्यक्षेऽपि तज्जन्यत्वस्य सत्त्वादतिव्याप्तिरिति वाच्यम्, तस्यापि लक्ष्यत्वात्) ननु तुरीयविषयतामात्रनिरूपकस्य निर्विकल्पकप्रत्यक्षस्य प्रकारकत्वानिरूपकत्वमिव विशेष्यत्वानिरूपकत्वसंसर्गानिरूपकत्वघटितं विनिगमनाविरहाल्लक्षणत्रयं सम्भवतीत्याह * विशेष्यविशेषणसम्बन्धानवगाहीति * निर्विकल्पकप्रत्यक्षस्यातीन्द्रियत्वेन तत्साधनायानुमानं प्रमाणयति * गौरितीति * ननु सविकल्पक इव निर्विकल्पकेऽपि मनस्संयुक्तसमवायरूपस्य लौकिकसन्निकर्षस्य विद्यमानतया कुतस्तस्याप्रत्यक्षत्वमिति वाच्यम्,

तस्य प्रत्यक्षत्वे घटमहं जानामीत्यनुव्यवसायात्मकप्रत्यक्षेण सविकल्पकस्यैव विषयीकर्तव्यत्वात्, तत्तु न सङ्घटते, तथाहि, वैशिष्ट्यावगाहिज्ञानमेव प्रत्यक्षविषयः भवति, न तु तदनवगाहिज्ञानम् घटमहं जानामीति ज्ञाने अहम्पदार्थे आत्मनि ज्ञानं प्रकारीभवति, ज्ञाने विषयतासम्बन्धेन घटः, घटे घटत्वम्, तथा च घटमहं जानामीति ज्ञान घटत्वविशिष्टस्य घटस्य ज्ञाने विषयतासम्बन्धेन वैशिष्ट्यावगाहि भवति, एतज्ज्ञानं विशिष्टवैशिष्ट्यावगाहितया विशेषणतावच्छेदकप्रकारकज्ञानसव्यपेक्षं (विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकं) तथा च घटत्वविशिष्टघटज्ञान विषयीभूतं सत् अनुव्यवसायात्मकप्रत्यक्षे कारणं भवतीति ज्ञायते, तादृशमिदं ज्ञानं सविकल्पकमेवेत्यस्यैव प्रत्यक्षतो ग्रहणम्. निर्विकल्पके घटत्ववैशिष्ट्यभानं नास्त्येव । अतो नास्य प्रत्यक्षतो ग्रहणं किन्त्वनुमानेनैवेति सिद्धम् । सविकल्पकलक्षण मदीयतर्कसङ्ग्रहसर्वस्वे सम्यग्विवृतम् । * नामजात्यादीति * पूर्ववदत्रापि विशेष्यत्वादिघटित लक्षणत्रय सम्भवतीति बोध्यम् ॥

**मू * इन्द्रियार्थसन्निकर्ष विभजते * प्रत्यक्षेति * संयोगसन्निकर्षमुदाहरति * चक्षुषेति * द्रव्यप्रत्यक्षे सर्वत्र संयोगस्सन्निकर्षः, इन्द्रियाणां प्राप्यप्रकाशकारित्वनियमात् "आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन ततः प्रयक्षमुत्पद्यते" इत्यर्थः ॥ संयुक्तसमवायमुदाहरति * घटरूपेति * तत्र युक्तिमाह * चक्षुस्संयुक्त इति * संयुक्तसमवेतसमवायमुदाहरति * रूपत्वेति * समवायमुदाहरति * श्रोत्रेणेति * तदुपपादयति * कर्णेति ***

व्या * द्रव्यग्राहकानीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव, अन्यानि घ्राणरसनश्रवणानि तु गुणादिग्राहकाणि, तत्र रसनघ्राणयोः रसगन्धतद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः सन्निकर्षयोरेव तत्र रसगन्धादिप्रत्यक्षे कारणत्व वाच्यम् , संयोगसन्निकर्षमितीति * अत्राय भाव:, द्रव्यनिष्ठलौकिकविषयतासम्बन्धेन जायमान चाक्षुष त्वाच मानस प्रत्यक्ष प्रति चक्षुस्संयोगस्य त्वक्संयोगस्य मनस्संयोगस्य समवायसम्बन्धेन क्रमेण कारणत्वम् संयोगसम्बन्धेन तत्तदिन्द्रियाणा वा कारणत्व ग्राह्यमिति * प्राप्यप्रकाशकारित्वमिति * विषयेण सह संयुज्य प्रत्यक्षजनकत्वमिन्द्रियाणा स्वभाव इत्यर्थः । * आत्मा मनसेति * बाह्यप्रत्यक्ष प्रति आत्ममनस्संयोगस्य विषयेन्द्रियसम्बन्धस्य च कारणत्व ग्राह्यमित्याशयः * संयुक्तसमवायमिति * द्रव्यसमवेतनिष्ठलौकिकविषयतासम्बन्धेन जायमानचाक्षुष त्वाच रासन घ्राणीय मानस प्रत्यक्ष प्रति तत्तदिन्द्रिया संयुक्तसमवायस्य (स्वरूपसम्बन्धेन) प्रतियोगितासम्बन्धेन कारणत्व स्वसंयुक्तसमवायसम्बन्धेन तत्तदिन्द्रियस्य वा कारणत्व वाच्यम् । * संयुक्तसमवेतसमवायमिति * अय भावः, द्रव्यसमवेतसमवेतनिष्ठलौकिकविषयतासम्बन्धेन जायमान पूर्वोक्तपञ्चविधप्रत्यक्ष प्रति तत्तदिन्द्रियसंयुक्तसमवेतसमवायस्य प्रतियोगितासम्बन्धेन स्वसंयुक्तसमवेतसमवायसम्बन्धेन तत्तदिन्द्रियस्य वा कारणत्व ग्राह्यमित्याशय । * समवायमिति * शब्दनिष्ठलौकिकविषयतासम्बन्धेन जायमानश्रावणप्रत्यक्षं प्रति श्रोत्रसमवायस्य प्रतियोगितया स्वानुयोगिकसमवायेन श्रोत्रस्य वा कारणत्व बोध्यम् । शब्दत्वनिष्ठलौकिकविषयतासम्बन्धेन जायमानश्रौत्रप्रत्यक्षं प्रति श्रोत्रसमवेतसमवायस्य प्रतियोगितया स्वसमवेतसमवायेन श्रोत्रस्य वा कारणत्वं ग्राह्यम् ॥

नचैवं सति परमाणूनां वायोः (इन्द्रियाणां) अन्धकारस्थघटादीनां प्रत्यक्षं इन्द्रियसंयोगरूपसन्निकर्षवशात् स्यात्, संयुक्तसमवायसद्भावेन तत्समवेतरूपादीनां संयुक्तसमवेतसमवायसद्भावेन तादृशरूपसमवेतसत्तादीनाञ्च प्रत्यक्षं स्यादिति वाच्यम्, महत्त्वोद्भूतरूपालोकसंयोगानां त्रयाणामपि द्रव्यप्रत्यक्षे समवायेन द्रव्यसमवेतप्रत्यक्षे स्वसमवायसमवेतत्वसम्बन्धेन द्रव्यसमवेतसमवेतविषयकप्रत्यक्षे स्वसमवायसमवेतसमवेतत्वसम्बन्धेन द्रव्यसमवेतसमवेतविषयकप्रत्यक्षे स्वसमवायिसमवेतसमवेतत्वसम्बन्धेन कारणताया अङ्गीकृततया तत्र तत्र तेन तेन सम्बन्धेन तेषामभावेन नापत्तिः। नचैवमपि पृथिवीपरमाणुतद्रूपवायुतत्स्पर्शान्धकारस्थघटतद्रूपेषु विद्यमानायाः सत्तायाः चक्षुषा प्रत्यक्षं कुतो न स्यात्, सत्तायाः स्वाश्रयेषु सर्वत्रापि विद्यमानाया एकत्वेन (आश्रयभेदप्रयुक्तभेदाभावेन) पृथिवीपरमाणुतद्रूपगतायां सत्तायां घटतद्रूपाद्यन्तर्भावेण महत्त्वसम्बन्धस्य वायुतत्स्पर्शगताया सत्तायां घटतत्स्पर्शान्तर्भावेण उद्भूतरूपसम्बन्धस्य अन्धकारस्थघटतद्रूपगताया च सत्तायां आलोकसम्बन्धघटतद्रूपान्तर्भावेण आलोकसम्बन्धस्य च सत्त्वादिति वाच्यम्, महत्त्वोद्भूतरूपालोकसयोगानां न पृथक् पृथक् चाक्षुषप्रत्यक्षकारणत्वमङ्गीक्रियते, किन्तु महत्त्वविशिष्टोद्भूतरूपविशिष्टालोकसंयोगविशिष्टचक्षुस्संयोगस्य तादृशचक्षुस्संयोगविशिष्टसमवायस्य तादृशचक्षुस्सयोगविशिष्टसमवेतसमवायस्य च तत्तत्कारणतावच्छेदकसम्बन्धत्वमङ्गीकार्यम् (उद्भूतरूपे महत्त्ववैशिष्ट्यम् आलोकसंयोगे उद्भूतरूपवैशिष्ट्य चक्षुस्सयोगे आलोकसंयोगवैशिष्ट्यञ्च समवायसमवायोभयघटितसामानाधिकारण्यसम्बन्धेन ग्राह्यम्, समवायानुयोगिनि चक्षुस्संयोगवैशिष्ट्यन्तु समवायेनैव

ग्राह्यम्) परमाणौ चक्षुस्संयोगस्य महत्त्वविशिष्टत्वाभावेन वायौ तस्य उद्भूतरूपविशिष्टत्वाभावेन अन्धकारस्थघटादौ तस्य आलोकसंयोगविशिष्टत्वाभावेन च पूर्वोक्तदोषप्रसक्त्यभावात्। चक्षुस्संयोगे आलोकसंयोगावच्छिन्नत्वं च आलोकसंयोगावच्छेदकदेशावच्छिन्नत्वरूपं ग्राह्यम्। अन्यथा एकदेशावच्छेदेनालोकसंयोगस्य देशान्तरावच्छेदेन चक्षुस्संयोगस्य च सत्त्वदशायां घटादेः प्रत्यक्षत्वापत्तिः। एतेन चक्षुस्संयुक्तपरमाणुसमवायस्य परमाणुरूपे सत्त्वेन तत्प्रत्यक्षापत्तिवारणाय चक्षुस्संयुक्ते योग्यत्वं चक्षुस्संयुक्तपरमाणुसमवेतद्व्यणुकसमवायस्य द्व्यणुकरूपे सत्त्वात् तस्यापि प्रत्यक्षापत्तिवारणाय द्रव्यान्यत्वं चक्षुस्संयुक्तसमवेते विशेषणीयमिति शङ्का निरस्ता, चक्षुस्संयोगे महत्त्वाद्यवच्छिन्नस्य निवेशितत्वात् परमाणुषु महत्त्वाभावात्॥

ननु आत्मनो निरवयवत्वेन आत्मतदीयसुखादिप्रत्यक्षानुरोधेन मानसप्रत्यक्षे संयोगसंयुक्तसमवाययोः कारणत्वस्याङ्गीकर्तव्यत्वेऽपि चाक्षुषादिप्रत्यक्षे संयोगसंयुक्तसमवाययोः कारणत्वाङ्गीकारे प्रयोजनाभावः, परमाणुद्व्यणुकयोः प्रत्यक्षत्वस्यैवाभावेन त्र्यणुकस्य प्रत्यक्षत्वेऽपि चक्षुस्संयुक्तपरमाणुसमवेतद्व्यणुकसमवायस्य सन्निकर्षस्य त्र्यणुके सत्त्वेन तत्प्रत्यक्षत्वोपपत्त्या एकस्य संयुक्तसमवेतसमवायस्यैव चाक्षुषादिहेतुत्वमुच्यत इति चेन्न, पृथिवीपरमाणुरूपगतरूपत्वादौ चक्षुस्संयुक्तपरमाणुसमवेतरूपसमवायस्य सत्त्वेन तत्प्रत्यक्षापत्तिवारणाय पूर्वोक्तरीत्या महत्त्वोद्भूतरूपालोकसंयोगावच्छिन्नचक्षुस्संयोगविशिष्टसमवेतसमवायस्य कारणताया अङ्गीकर्तव्यतया तादृशमहत्त्वाद्यवच्छिन्नचक्षुस्संयुक्तसमवेतसमवायस्य त्र्यणुके त्र्यणुकरूपे च परमाणुद्व्यणुकान्तर्भावेणोपपादयितुमशक्यतया

*गुक तद्रूपचाक्षुपप्रत्यक्षानुपपत्तिवारणाय महत्त्वाद्यवच्छिन्नसयागत। दृशसंयुक्तसमवायसमवाययोस्सन्निकर्षयोः चाक्षुषादिकारणत्वस्यावश्यमङ्गीकर्तव्यत्वात् ॥

केचन . संयोगादिसन्निकर्षत्रयस्थले योग्यवृत्तिसंयोगस्य योग्यं यत्संयुक्तं तत्समवायस्य योग्यं यत्संयुक्तं तत्समवेतसमवायस्य च कारणत्वमङ्गीकार्यम्, योग्यत्वञ्च प्रत्यक्षविषयत्वयोग्यत्वम्; तदपि महत्त्वादिकारणसामग्रीप्रयुक्तमेव, तथा च परमाणुवाय्वन्धकारस्थघटादीनां तत्समवेतरूपादीनां तत्समवेतरूपत्वादीनाञ्च न प्रत्यक्षापत्तिरिति वदन्ति ॥

**म * ननु दूरस्थशब्दस्य कथं श्रोत्रसम्बन्ध इति चेन्न, वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दाच्छब्दान्तरोत्पत्तिक्रमेण श्रोत्रदेशे जातस्य शब्दस्य श्रोत्रेण सम्बन्धात् प्रत्यक्षसम्भवः। समवेतसमवायमुदाहरति * शब्दत्वेति ***

व्या * ननु श्रोत्रेन्द्रियस्याकाशरूपतया तस्य च विभुत्वेन श्रोत्रसमवायस्य दूरस्थदेशान्तरीयशब्देष्वपि सत्त्वात् तादृशशब्द-प्रत्यक्षप्रसङ्ग इति चेन्न, कर्णविवरावच्छिन्ननभोऽनुयोगिकत्वविशिष्टसमवायस्य तत्प्रत्यक्षहेतुत्वाङ्गीकारात्। विशेषणाभावाद्विशिष्टाभाव इति न्यायेन दूरस्थशब्दे विशेष्यस्य नभोरूपश्रोत्रानुयोगिकत्वविशिष्टसमवायस्य सत्त्वेऽपि तन्नभासि कर्णविवरावच्छिन्नत्वरूपविशेषणाभावेन तादृशसमवायाभावेनानुपपत्त्यभावात्। भेर्यादित उत्पन्नानां शब्दानां सर्वदिगवच्छेदेन शब्दात् शब्दान्तरोत्पत्तिक्रमेण शब्दोपलब्धिसम्भवेन तन्निर्वाहाय एकदिगवच्छेदेन शब्दानुवृत्तिनिर्वाहकवीचीतरङ्गन्यायानन्तरं कदम्बमुकुलन्यायं

सर्वादिगवच्छेदेन शब्दानुवृत्त्यनुरूप न्यायं दर्शयति * कदम्बेति * वीचिभिस्तरङ्गा एकस्यामेव दिशि उत्पद्यन्ते, कदम्बकुसुमेषु मुकुलानि सर्वदिक्षूत्पद्यन्ते, इत्यनयोर्भेदः । न च श्रोत्रसंयुक्तगगनसमवायश्रोत्रसंयुक्तगगनसमवेतशब्दसमवाययोः सन्निकर्षयोः शब्दशब्दत्वयोरपि विद्यमानतया तदुभयसाक्षात्कारेऽपि संयुक्तसमवेतसमवाययोरेव सन्निकर्षत्वसम्भवे समवायसमवेतसमवाययोः तत्सन्निकर्षत्वकथनमनुचितमिति वाच्यम् । गगनस्य विभुत्वेन तादृशसमवाययो. दूरस्थशब्देऽपि सत्त्वात् तत्साक्षात्कारप्रसङ्गात् । श्रोत्रसमवायस्य हेतुत्वे तु विशेषकर्णस्य परिच्छिन्नतया कर्णविवरावच्छिन्ननभोरूपश्रोत्रस्यापि परिच्छिन्नत्वेन देशान्तरे तस्याभावेनानुपपत्त्यभावात् । न च श्रोत्रसयोगावच्छिन्नसमवायश्रोत्रसयोगावच्छिन्नसमवेतसमवाययोरेव तत्कारणत्व भवतु, अतो न निरुक्तानुपपत्तिरिति वाच्यम्, श्रोत्रावच्छिन्नसमवायश्रोत्रावच्छिन्नसमेतसमवायापेक्षया तयोर्गुरुत्वात् ॥

**मू * विशेषणविशेष्यभावमुदाहरति * अभावेति * तदुपपादयति * घटाभाववदिति * भूतले घटो नास्तीत्यत्राभावस्य विशेष्यत्वं द्रष्टव्यम् ॥**

व्या * ननु विशेषणतासन्निकर्षस्य संयुक्तविशेषणत्वादिना बहुविधत्वेन सन्निकर्षाणां षाड्विध्यं भज्येतेति चेन्न, विशेषणतानां बहुविधानामपि विशेषणतात्वेन परिगणितत्वेन षाड्विध्यभङ्गाभावात्, न च तर्हि समवायत्वेन संयुक्तसमवायादीनामप्यनुगमः कुतो न कृत इति वाच्यम्, स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हस्य मुनेस्तथा सम्मतत्वेन दोषाभावात् । तथा च

समवायप्रत्यक्षे अभावप्रत्यक्षे च इन्द्रियसंयुक्तविशेषणतासन्निकर्ष इति फलितम् । "वैशेषिकमते समवायस्य प्रत्यक्षत्वं नाङ्गीक्रियते ।" किन्त्वनुमानेनैवं तत्सिद्धिरङ्गीक्रियते । बहुविधा विशेष्यताविशेषणत्वादिसन्निकर्षाः मदीयतर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे निरूपितास्तत्र द्रष्टव्याः ॥

मू * एतेनानुपलब्धेः प्रमाणान्तरत्वं निरस्तम् । यद्यत्र घटोऽभविष्यत्तर्हि भूतलमिव द्रक्ष्येत तद्दर्शनाभावात्तन्नास्तीति तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धिसहकृतेन्द्रियेणैवाभावज्ञानोत्पत्तावनुपलब्धेः प्रमाणान्तरत्वायोगात् । अधिकरणज्ञानार्थमपेक्षणीयेन्द्रियस्यैव करणत्वोपपत्तावनुपलब्धेः करणत्वायोगात् । विशेषणविशेष्यभावोऽपि विशेष्यविशेषणस्वरूप एव नातिरिक्तः सम्बन्धः । प्रत्यक्षज्ञानमुपसंहरन् तस्य करणमाह* एवमिति* असाधारणकारणत्वादिन्द्रिय प्रत्यक्षज्ञानकरणमित्यर्थः । प्रत्यक्षज्ञानमुपसंहरति* तस्मादिति *

इति प्रत्यक्षपरिच्छेदः

---

व्या * एतेनेति * एतेन अभावप्रमाया विशेषणविशेष्यभावसन्निकर्षजन्यत्वप्रतिपादनेन प्रमाणान्तरत्व प्रत्यक्षादिक्लृप्तप्रमाणातिरिक्तप्रमाणत्वम् । अनुपलब्धेः प्रमाणान्तरत्वमङ्गीकुर्वतां मीमांसकानामयमाशयः, अभावप्रत्यक्ष प्रति अनुपलब्धिः कारणम्, अनुपलब्धिः उपलम्भाभावः, उपलब्धिः प्रत्यक्षं तथाच अभावप्रत्यक्षं प्रति प्रतियोग्युपलम्भाभावः कारणमिति फलितम् । यत्र च घटादिप्रतियोगिप्रत्यक्षं न जायते तत्र

घटाभावप्रत्यक्षं जायते, अतोऽभावप्रत्यक्ष प्रति प्रतिबन्धकाभावविधया प्रतियोग्युपलम्भाभाव: कारणम्। उपलब्धेरभावोऽनुपलब्धिरिति करणपक्षे नोपलब्धि: (प्रतियोगिप्रत्यक्षम्) अनुपलब्धिरिति फलपक्षे च व्युत्पत्ति:। तत्पुरुषीयतदिन्द्रियजन्यतत्सम्बन्धावच्छिन्नतत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावप्रकारकानाहार्यप्रत्यक्ष प्रति तत्पुरुषीयतदिन्द्रियजन्यतत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताशालिप्रतियोगिप्रत्यक्षाभावस्य कारणत्व तन्मतेऽभिमतम्। चैत्रस्य घटप्रत्यक्षसत्त्वेऽपि मैत्रस्य घटाभावप्रत्यक्षोत्पत्त्या चक्षुषा घटादिप्रत्यक्षे जातेऽपि त्वचा घटाभावप्रत्यक्षस्य जननेन व्यतिरेकव्यभिचारवारणाय तत्पुरुषीयत्वतदिन्द्रियजन्यत्वयो: कार्यकारणकोट्यो: प्रत्यक्षे विशेषणत्वमङ्गीकार्यम्। संयोगेन घटवत्ताप्रत्यक्षसत्त्वेऽपि समवायादिना घटाभावप्रत्यक्षोत्पत्त्या केवलघटवत्ताप्रत्यक्षसत्त्वेऽपि घटपटोभयाभावप्रत्यक्षोत्पत्त्या च व्यतिरेकव्यभिचारवारणाय कार्यकोटौ प्रतियोगितायां कारणकोटौ प्रकारतायां च एकसम्बन्धावच्छिन्नत्वं विशेषण देयम्। घटवद्भूतलमिति प्रत्यक्षसत्त्वेऽपि इच्छया घटाभाववद्भूतलमित्यादिप्रत्यक्षोत्पत्त्या व्यतिरेकव्यभिचारवारणाय कार्यतावच्छेदककोटावनाहार्यत्व निवेशनीयम्। किञ्च प्रतियोगिप्रत्यक्षाभाववति सर्वस्मिन्नपि काले तदभावप्रत्यक्षानुत्पत्त्या तदभावप्रत्यक्षकारणविशेषणज्ञानादिविशिष्टप्रतियोगिप्रत्यक्षाभावस्य कारणत्व वक्तव्यम। अनुपलब्धे: प्रत्यक्षनातिरिक्तप्रमाणान्तरत्वमनङ्गीकुर्वतां नैयायिकानामयमाशय:, योग्यानुपलब्धिसहकृतेन्द्रियस्यैवाभावप्रत्यक्ष प्रति कारणत्वम्, अनुपलब्धे: सहकारित्वमात्रम्। प्रत्यक्षमात्र प्रतीन्द्रियस्यैव करणत्वेन अभावप्रत्यक्ष

प्रत्यपीन्द्रियस्यैव करणत्वस्वीकारस्समुचितः, अधिकरणज्ञानार्थमिन्द्रियस्यापेक्षितत्वेन तेनैव अभावप्रत्यक्षस्यापि निर्वाहेऽनुपलब्धेः करणत्वं न स्वीकर्तव्यमिति । * यद्यत्रेति * अत्र चक्षुस्संयोगालोकसंयोगादिप्रत्यक्षसामग्रीमति भूतले तर्कस्यापादकाभावसाधकविपर्ययप्रतियोग्यापाद्यकत्वरूपं विपर्ययतत्कोटिपर्यवसायित्वं दर्शयति * तद्दर्शनाभावादिति * वाक्यार्थस्तु, तर्किता आपादिता प्रतियोगिनः घटादेः सत्त्वस्य सत्त्वप्रसक्तेः विरोधिनी या उपलब्धिः तदभावसहकृतेनेन्द्रियेणेत्यर्थः । (तादृशविरोधित्वस्य अनुपलब्धिप्रतियोग्युपलब्ध्यावन्वयः) योग्यताविशिष्टानुपलब्धेरेव इन्द्रियसहकारित्वमङ्गीकर्तव्यमित्याह * विरोध्यनुपलब्धीति * केवलानुपलब्धिसहकृतेन्द्रियस्याभावप्रत्यक्षकारणत्वाङ्गीकारे अन्धकारदशायामपि घटादिप्रतियोग्युपलम्भकालोकादिसाधनसामग्र्यभावेन घटादिप्रतियोग्युपलम्भाभावस्य सत्त्वात् घटाभावप्रत्यक्षापत्तिः । योग्यतानिवेशे तु न दोषः, तथाहि योग्यत्वञ्च तर्कितप्रतियोगिसत्त्वविरोधित्वम्, तच्च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपम्, तच्च प्रतियोगिसत्त्वापादनजन्यापत्तिविषयप्रतियोगिकत्वरूपमिति फलितम् । (अस्य चानुपलब्ध्यावन्वयः) प्रतियोगिसत्त्वापादनं यद्यत्र घटः स्यादित्यापादनम्, तज्जन्या या आपत्तिः भूतलमिव घटो द्रक्ष्येतेत्यापत्तिः तादृशापत्तिविषया घटोपलब्धिः, आलोकादिकारणसामग्रीदशायां तादृशापत्तिविषयत्वं घटाद्युपलब्धौ सम्भवति, अन्धकारदशायाञ्च तादृशसामग्र्यभावेन तादृशापत्तिविषयप्रतियोगिताकानुपलब्धिः न सम्भवतीति पूर्वोक्तदोषाभावेन योग्यानुपलब्धेरेवाभावाच्चाक्षुषं प्रति इन्द्रियसहकारित्वमङ्गीकर्तव्यमिति सिद्धम् । संसर्गाभावप्रत्यक्षे

प्रतियोगिनो योग्यतापेक्षिता, नातोऽयोग्यगुरुत्वाभावप्रत्यक्षम् । अन्योन्याभावप्रत्यक्षेऽधिकरणस्य योग्यतापेक्षिता, अत एव स्तम्भादौ पिशाचादिभेदचाक्षुषोपपत्तिरिति सङ्क्षेपः । ननु इन्द्रियस्यैवाभावप्रत्यक्षं प्रति करणत्वस्वीकारे तद्ग्राहकः विशेष्यविशेषणभावरूपोऽतिरिक्तस्सन्निकर्षः कल्पनीय इत्येतन्मतेऽपि गौरवमित्याशङ्कायामाह * विशेषणविशेष्यरूपमिति * अर्थापत्तिप्रमाणस्यानुमानान्तर्भावः शब्दपरिच्छेदे निरूपयिष्यते ॥

इति श्रीमदान्ध्रदेशविद्योतमानतेनालिसंस्कृतकलाशालायां
तर्कालङ्कारशास्त्राध्यापकेन तर्कसंग्रहसर्वस्वपञ्चलक्षणी-
सर्वस्वकृता कुरुगण्टयुपाख्यश्रीरामशास्त्रिणा
विरचिते अन्नम्भट्टविरचिततर्कसङ्ग्रहदीपिका
व्याख्यानरूपे दीपिकासर्वस्वे प्रत्यक्ष -
परिच्छेदः समाप्तः ॥



श्रीशिवायनमः

# दीपिकासर्वस्वे

## अनुमानपरिच्छेदप्रारम्भः



**मू * अनुमानं लक्षयति * अनुमितिकरणमिति * अनुमितिं लक्षयति * परामर्शेति ॥**

व्या * प्रत्यक्षोपजीवकत्वसङ्गत्यानुमानं निरूपयति. तथाच प्रत्यक्षातिरिक्तप्रमाणत्वं अनुमानस्य सिध्यतीति भावः बहुप्रमाणमूलत्वाद्बहुवादिसम्मतत्वाच्च प्रत्यक्षप्रमाणस्य प्रथमतो निरूपणम्, प्रत्यक्षोपजीवकत्वसङ्गत्या अनन्तरमनुमाननिरूपणं कृतम्, अवसरसङ्गत्या अनन्तरमुपमाननिरूपणम्, उपमानोपजीवकसङ्गत्याअनन्तरं शब्दप्रमाणनिरूपणम्। उपमितेः पदशक्तिज्ञानरूपत्वेन शाब्दबोधं प्रति हेतुतयानयोरुपजीव्योपजीवकभावस्सङ्गच्छते। सङ्गतिविचारः तर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे सम्यक् प्रपञ्चितस्तत्र द्रष्टव्यः ॥ * अनुमितिकरणमिति* अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वविशिष्टानुमितिजनकव्यापारजनकत्वमनुमानस्य लक्षणम् (वैशिष्ट्यञ्च स्वरूपघटितसामानाधिकरण्यसम्बन्धेन) न चेश्वरादृष्टादौ दोषवारणायानुमितित्वावच्छिन्नत्वस्य कार्यतायां निवेशे केवलानुमितित्वा-

वच्छिन्नं प्रति पक्षविशेष्यकसाध्यविधेयकानुमितित्वावच्छिन्नं प्रति वा कस्याप्यनुमानस्य कारणत्वाभावेनासम्भवः, अनुमितिपरामर्शयोर्विशेषरूपेणैव कार्यकारणसद्भावादिति वाच्यम्, अनुमितित्वव्याप्यधर्मावच्छिन्नत्वस्य कार्यताया निवेशनीयत्वात्, तादृशधर्मस्य पर्वतो वह्निमानित्यनुमितित्वादेः प्रसिद्धत्वान्नासम्भवः। नच पक्षधर्मताज्ञानस्यापि परामर्शद्वाराऽनुमितिकरणत्वेन तत्रातिव्याप्तिरिति वाच्यम्, पक्षधर्मताज्ञानस्य परामर्शं प्रत्येव विशेषणज्ञानविधया कारणत्वेन अनुमितिं प्रत्यकारणत्वेन च दोषाभावात्. व्याप्तिज्ञानस्य तु पक्षधर्मताज्ञानवत् परामर्शं प्रति कारणत्वेऽपि अनुमितिकरणत्वप्रतीत्या अनुमितिं प्रत्यपि कारणत्वेन समन्वयः॥

विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य घटितबुद्धिं प्रति घटकज्ञानस्य च कारणत्वेन अनुमानलक्षणघटकीभूतानुमितिलक्षणमाचष्टे* परामर्शेति * परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम् (वैशिष्ट्यञ्च स्वरूपसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन) परामर्शध्वंसे अतिव्याप्तिवारणाय ज्ञानत्वदलम्। न च ध्वंसं प्रति प्रतियोगिनः कारणत्वं प्रतियोगित्वेन रूपेण तत्तद्ध्वंसत्वावच्छिन्नं प्रति तत्तत्प्रतियोगिव्यक्तेः तत्तद्व्यक्तित्वेनेति परामर्शत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वघटितलक्षणकरणे परामर्शध्वंसत्वावच्छिन्नं प्रति परामर्शत्वेन कारणत्वाभावेनैव तत्र दोषवारणसम्भवात् ज्ञानत्वदलं व्यर्थमिति वाच्यम्, परामर्शजन्यसंस्कारेऽतिव्याप्तेः, तत्र परामर्शत्वेन कार्यकारणभावसत्त्वात्। न च वह्निव्याप्यधूमवत्पर्वतवानयं देश इति निरुक्तधूमविशिष्टपर्वतवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकज्ञानमुद्रया वह्निव्याप्यधूमवान् पर्वत इति निश्चयस्य कारणत्वेन तादृशविशिष्टवैशिष्ट्याव-

गाहिबुद्धौ परामर्शजन्यत्वघटितलक्षणसत्त्वादतिव्याप्तिरिति वाच्यम्, हेत्वविषयकत्वदलस्यापि स्वातन्त्र्येण निवेशनीयत्वात्, तत्र हेतुविषयकत्वस्यैव सत्त्वान्नातिव्याप्तिः । न च धूमवत्पर्वतो वह्निमानिति हेतुरूपधूमधर्मितावच्छेदकानुमितौ हेत्वविषयकत्वाभावादव्याप्तिरिति वाच्यम्, परामर्शजन्यं हेत्वविषयकं यज्ज्ञानं तद्वृत्तिः अनुभवत्वव्याप्या या जातिः तद्वत्त्वस्यैव लक्षणत्वाङ्गीकारात् । अनुमितित्वजातिमादाय समन्वयो ग्राह्यः । अथ वा व्याप्तिज्ञानकरणकज्ञानत्वमनुमितेर्लक्षणम्, तथा च कुत्रापि नाति प्रसङ्गः ॥

अथ वा पक्षतासहकृतपरामर्शजन्यत्वस्य तल्लक्षणत्वेन मूले वक्ष्यमाणतया निरुक्तविशिष्टवैशिष्ट्यावगाहिबुद्धौ पक्षतायाः कारणत्वाङ्गीकारे प्रयोजनाभावेन पक्षताविशिष्टपरामर्शजन्यत्वस्याभावान्नातिव्याप्तिः । न च पक्षताजन्यत्वमेव लक्षणं भवतु परामर्शजन्यत्वनिवेशे प्रयोजनाभाव इति वाच्यम्, पक्षताध्वंसेऽतिव्याप्तिवारणाय तत्सार्थक्यात्, न च सिद्धान्ते पक्षतायाः सिध्यभावरूपतया तस्य नित्यत्वेन ध्वंसाप्रसिध्या तत्र दोषवारणाय परामर्शजन्यत्वस्य प्रयोजनकथनमसङ्गतमिति वाच्यम्, प्रत्यक्षविषयस्य कारणतया पक्षताप्रत्यक्षेऽतिव्याप्तिवारणाय तत्सार्थक्यात् । न चैव ज्ञानत्वदलं व्यर्थं, परामर्शध्वंसे पक्षताजन्यत्वाभावेनैवातिव्याप्तिवारणसम्भवादिति वाच्यम्, अस्मिन् लक्षणे तद्दलवैयर्थ्यस्येष्टत्वात् (पक्षतासहकृतपरामर्शजन्यत्वञ्च पक्षताजन्यत्वे सति परामर्शजन्यत्वमेव) न च पक्षतासहकृतपरामर्शजन्यत्वस्य पक्षतापरामर्शविषयके समूहालम्बनप्रत्यक्षे सत्त्वादतिव्याप्तिरिति वाच्यम्, पक्षतानिष्ठकारणतायां स्वरूपसम्बन्धावच्छिन्नत्वस्य परामर्शनिष्ठकारणतायां समवायसम्बन्धावच्छिन्नत्वस्य वा निवेशनीयत्वात् प्रत्यक्षे विषयस्य तादात्म्येनैव कारणत्वेनातिव्याप्त्यभावात् ॥

वस्तुतस्तु या काश्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिः प्रत्यक्षावृत्तिः या जातिः तद्वत्त्वमेव निष्कृष्टमनुमितिलक्षणम्, एतल्लक्षणे परामर्शजन्यत्वहेत्वविषयकत्वादीनां प्रवेशोऽनावश्यकः। अनुमितित्वजातिमादायैव हेतुधर्मितावच्छेदकानुमितौ समन्वयसम्भवात् प्रत्यक्षावृत्तित्वनिवेशात् निरुक्तसमूहालम्बनप्रत्यक्षे निरुक्तविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे वा अनुभवत्वजातिमादाय नातिव्याप्तिरित्यलम् ॥

**मू * ननु संशयोत्तरप्रत्यक्षेऽतिव्याप्तिः, स्थाणुपुरुषसंशयानन्तरं पुरुषत्वव्याप्यकरादिमानयमिति परामर्शे सति पुरुष एवेति प्रत्यक्षजननात्। न च तत्रानुमितिरेवेति वाच्यम्, पुरुषं साक्षात्करोमीत्यनुव्यवसायविरोधादिति चेन्न, पक्षतासहकृतपरामर्शजन्यत्वस्य विवक्षितत्वात् ॥**

व्या * नन्विति * प्रथमं चक्षुस्सन्निकर्षेणायं स्थाणुर्वा न वेति संशये जाते सति तदनुजातेन पुरुषत्वव्याप्यकरादिमानयमिति विशेषदर्शनरूपेण परामर्शेन जायमाने अयं पुरुष इति प्रत्यक्षेऽपि (विशेषदर्शनोत्तरप्रत्यक्षे) परामर्शजन्यत्वसत्त्वादतिव्याप्तिरिति भावः। इदमुपलक्षणम्. स्थाणुपुरुषसंशयानन्तरं स्थाणुत्वव्याप्यवक्रकोटरादिमानयमिति विशेषदर्शनरूपपरामर्शजन्ये अयं स्थाणुरिति प्रत्यक्षेऽतिव्याप्तिरिति ॥ * नच तत्रानुमितिरेवेति * नचात्रानुमित्सायाः परिकल्पने कुतो नानुमितिरिति वाच्यम्, अत्रानुमित्साया इव प्रत्यक्षेच्छाया अपि परिकल्पयितुं शक्यतया समाने विषये प्रत्यक्षसामग्री प्रबला भिन्ने विषयेऽनुमितिसामग्री प्रबलेति न्यायानुसारेण अत्र विषयसाम्येन प्रत्यक्षेच्छारूपायाश्चक्षुस्सन्नि-

कर्णादिसहितायाः प्रत्यक्षसामग्र्य अप्यनुमितिसामग्रीतः प्रबलाया विद्यमानत्वेन प्रत्यक्षस्यैवाङ्गीकर्तव्यत्वात् * अनुव्यवसायाविरोधादिति * इदमुपलक्षणम् । पुरुषमनुमिनोमीत्यनुव्यवसायाभावाच्चेति * पक्षतासहकृतेनेति * संशयोत्तरप्रत्यक्षे परामर्शस्य कारणत्वेऽपि पक्षतायाः कारणत्वाभावेन तादृशलक्षणाभावान्नातिव्याप्तिरिति भावः । पक्षतासहकृतपरामर्शजन्यत्वञ्च सामानाधिकरण्यसम्बन्धेन पक्षताविशिष्टो यः परामर्शः तज्जन्यत्वम् ॥

**मू * सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता, साध्यसिद्धिरनुमितिप्रतिबन्धिका । सिद्धिसत्त्वेऽनुमिनुयामितीच्छायामनुमितिदर्शनात्सिषाधयिषोत्तेजिका । ततश्चोत्तेजकाभावविशिष्टमण्यभावस्य दाहकरणत्ववत् सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यानुमितिकारणत्वम् ॥**

व्या * पक्षतासहकृतेत्यनुमितिलक्षणे प्रसक्तां पक्षतां निरूपयति * सिषाधयिषेति * परामर्शदशायां साध्यसिद्धिसत्त्वेऽनुमित्यापत्तिवारणाय सर्वैरपि पक्षतायाः कारणत्वमङ्गीकृतम् । ननु साध्यसंशयस्य पक्षतात्वाङ्गीकारेणैव सिद्धिकालेऽनुमितिवारणसम्भवात् सिषाधयिषाविरहविशिष्टसिद्ध्यभावपर्यन्तानुसरणं व्यर्थमिति चेन्न, घनगर्जितेन गृहमध्यस्थपुरुषस्य मेघानुमानस्थले गगनं मेघवद्वा नवेति संशयाभावेऽपि गगनं मेघवदित्यनुमित्युत्पत्त्या व्यतिरेकव्यभिचारप्रसङ्गेन संशयस्य पक्षतात्वाङ्गीकरणस्यानुचितत्वात् । नचानुमित्युद्देश्यत्वस्यैव पक्षतात्वमङ्गीक्रियते, तच्च मेघानुमानस्थलेऽप्यक्षतमिति वाच्यम्, अनुमितेः पूर्वं तदुद्देश्यत्वस्याभावेन तद्रूपायाः पक्षतायाः तत्पूर्ववर्तित्वघटितकारणत्वानु-

पपत्तेः । न च केवलसिषाधयिषाया एव पक्षत्वमङ्गीक्रियते, केवलसाध्यसिद्धिदशायां सिषाधयिषाया अभावेनैवानुमित्यनुत्पत्तिनिर्वाहादिति वाच्यम् । केवलपरामर्शदशायामनुमित्यनुत्पत्तिप्रसङ्गात् । तदा सिषाधयिषाया अभावात्, घनगर्जितेन मेघानुमानस्थलेऽपि सिषाधयिषाया अभावेनानुमित्यनुत्पत्तिप्रसङ्गात् । अतः सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वमङ्गीकार्यमेवेति सिद्धम् ॥

अथ सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वस्वीकारे परामर्शात्मकासिद्धि (परामर्शकालीनसिद्धि) दशायां सिषाधयिषाऽकालीनायां सिषाधयिषाविरहविशिष्टसिद्धेरेव सत्त्वेन अनुमितिविरह उपपद्यते । अत्र सिद्धौ सिषाधयिषाविरहवैशिष्ट्य स्वरूपसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन बोध्यम् । अत्र सिद्धिर्विशेष्यम् । सिषाधयिषाविरहो विशेषणं सिद्धौ, सिषाधयिषाविरहविशिष्टसिद्धिः विशिष्टं वस्तु सिषाधयिषा साध्यानुमितिर्मे भूयादितीच्छा, सिद्धिः पक्षस्साध्यवानिति निश्चयः । केवलपरामर्शदशायां विशेषणस्य सिषाधयिषाविरहस्य सत्त्वेऽपि विशेष्यभूतसिद्धेरभावेन विशेष्याभावप्रयुक्तविशिष्टाभावस्य प्रतिबन्धकाभावरूपस्य सत्त्वेन अनुमित्युपपत्तिः । सिषाधयिषाकालिकपरामर्शात्मकसिद्धिदशायान्तु विशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्त्वेन अनुमित्युपपत्तिः । सिषाधयिषाकालिकसिद्ध्यात्मकपरामर्शदशायान्तु विशेषविशेष्योभयाभावप्रयुक्तविशिष्टाभावस्य सत्त्वेन अनुमित्युपपत्तिः । परामर्शविरहकालीनसिषाधयिषाविशिष्टसिद्धिदशायान्तु विशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्त्वेऽपि परामर्शात्मककारणाभावादेव नानुमितिः । तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि

पक्षता । यत्र सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता । यत्र सिद्धिरस्ति सिषाधयिषा नास्ति तत्र प्रतिबन्धिकायास्सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वान्न पक्षतेति भावः । ननु सिषाधयिषाविशिष्टसिद्धेरेव पक्षतात्वं कुतो नाङ्गीक्रियते, एवमपि केवलसिध्यात्मकपरामर्शदशायामनुमितिवारणसम्भव इति चेन्न, सिध्यनात्मककेवलपरामर्शदशायां सिषाधयिषाकालिकपरामर्शदशायाञ्चानुमित्यनुत्पत्तिप्रसङ्गः, तदा सिषाधयिषाविशिष्टायाःसिद्धेरभावात्"

अथात्र सिद्धौ सिषाधयिषाविरहविशिष्टत्वानिवेशे सिषाधयिषाकालिकसिध्युत्तरमनुमित्यभावप्रसङ्गः, तत्र सिध्यभावरूपायाः पक्षताया अविद्यमानत्वात्, तन्निवेशे तु सिषाधयिषाविशिष्टसिद्धेऽभावेन तादृशसिध्यभावस्याक्षततया तत्र पक्षतोपपत्तिः । नन्वत्र सिषाधयिषाकालिकासिद्धिदशायामनुमित्यभावप्रसङ्गवारणेन सिद्धौ सिषाधयिषाविरहवैशिष्ट्यस्य सार्थक्यमभिहितम् । तच्च न घटते, तथा हि, यत्र प्रथमक्षणे सिषाधयिषा द्वितीयक्षणे परामर्शः तृतीयक्षणे साध्यसिद्धिः तत्रापाद्यते वा दोषः, यत्र प्रथम परामर्शः तदनु सिषाधयिषा तदनु सिद्धिः तत्र दोषः प्रदर्श्यते वा, यत्र प्रथमं सिद्धिः तदनु सिषाधयिषा तदनु परामर्शः तत्र दोषो निरूप्यते वा । नाद्यः पक्षः, विभुविशेषगुणानां स्वोत्तरोत्पन्नविभुविशेषगुणनाश्यत्वनियमेन ज्ञानेच्छयोः द्विक्षणावस्थायित्वस्याङ्गीकर्तव्यतया सिषाधयिषायाःसिद्धिकाल एव नष्टतया तदा सिषाधयिषाविशिष्टायाः सिद्धेरेव दुर्निरूपत्वात् । न द्वितीयः पक्षः, अनुमितेः पूर्वं सिषाधयिषाविशिष्टसिद्धेः सत्त्वेऽपि परामर्शरूपकारणस्य नष्टतया अनुमितेरेवानङ्गीकारेणानुमित्यनुत्पत्त्यापत्तेर्दुर्निरूपत्वात्। न तृतीयः, सिद्धेः परामर्शकाल एव नष्टतयाऽनुमितेः पूर्वं सिषाधयिषाविशि-

ष्टायास्सिद्धेर्दुर्निरूपत्वात् । एवं सिद्धिपरामर्शसिषाधयिषाः सिद्धि-सिषाधयिषापरामर्शा वा यत्र सम्भवन्ति तत्राप्येवमेवानुपपत्तयो दुर्वारा इति चेन्न, यत्र प्रथमं साध्यव्याप्यहेतुमत्पक्षः साध्यवानिति साध्यव्याप्यहेतुधर्मितावच्छेदककसाध्यप्रकारकपरमर्शात्मकं प्रत्यक्ष स्मरण वा साध्यव्याप्यहेतुमान् पक्ष. पक्षस्साध्यवांश्चेति समूहालम्बनात्मक प्रत्यक्ष स्मरण वा तदनु सिषाधयिषा तत्र प्रथम यत्र सिषाधयिषा तदनु पूर्वोक्त प्रत्यक्ष स्मरणं वा तत्र चानुमित्यभावप्रसङ्गवारणाय सिद्धौ सिषाधयिषाविरहवैशिष्टयस्य सार्थक्यात, तन्निवेशे तु न पक्षताहानिः ॥

अत्र सिद्धि साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयरूपा ग्राह्या । अत्र प्रकारताया साध्यतावच्छेदकावच्छिन्नत्वानिवेशे वह्निव्याप्यधूमवान् पर्वत घटवान् तेजस्वीति वा सिषाधयिषारहितानिश्चयदशाया पर्वतो वह्निमानित्यनुमित्युत्वत्यनुपपत्ति स्यात्, तदा सिषाधयिषाविरहविशिष्टतादृशसिद्धे सत्त्वात् । तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे वह्निव्याप्यधूमवान् पर्वत समवायेन वह्निमानिति सिषाधयिषाऽसहकृतसिद्धिदशाया पर्वतस्संयोगेन वह्निमानित्यनुमित्यभावप्रसङ्गः । विशेष्यताया पक्षतावच्छेदकावच्छिन्नत्वानिवेशे वह्निव्याप्यधूमवान् पर्वतः घटः पाषाणमयो वा वह्निमानिति निश्चयोत्तर पर्वतो वह्निमानित्यनुमित्यभावप्रसङ्गः । (सिद्धौ सिषाधयिषाविरहवैशिष्टयं स्वरूपसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन बोध्यम्)

नन्वत्र सिषाधयिषा अनुमितिविषयकेच्छा अनुमितित्वप्रकारकेच्छा वा, नाद्यः परामर्शात्मकसिद्धकालीनायां ज्ञानत्वेनानुमिति

मवगाहमानायां ज्ञानं मे भूयादितीच्छायां सत्यामपि तादृशपक्षता-सम्पत्त्यानुमित्यापत्तिः। (वस्तुतस्तत्रानुमितिर्नोत्पद्यते, किन्तु सिद्धि-धारैव) न द्वितीयः तादृशसिद्धिकालीनायां प्रत्यक्षातिरिक्तज्ञानं भूयादितीच्छायां सत्यामनुमितिर्न स्यात्, तत्रानुमितित्वप्रकारकेच्छाया अभावेन तादृशेच्छाविरहविशिष्टसिद्धेरेव सत्त्वात् (वस्तुतस्तत्रानुमितिर्निराबाधा) इति वाच्यम्, यादृशयादृशेच्छासत्त्वे सिद्धिसत्त्वे यल्लिङ्गिका (यद्धेतुविषयकपरामर्शाव्यवहितोत्तरजायमाना)नुमितिर्जायते तादृशतादृशेच्छाविरहविशिष्टसिद्ध्यभावः तल्लिङ्गकानुमितौ पक्षता (तल्लिङ्गकपरामर्शाव्यवहितोत्तरजायमानानुमितिजनकीभूता पक्षता) इति व्यवस्था क्रियते, तथा चाद्यस्थले निरुक्तायां ज्ञानं भूयादितीच्छायाः सत्त्वे सिद्धिसत्त्वेऽनुमितेरनुत्पन्नतया तादृशतादृशेच्छासु नैतस्याः प्रवेशः, किन्त्वनुमितिर्भूयादितीच्छान्तराणामेव अतस्तादृशतादृशेच्छाविरहविशिष्टसिद्धेरेव सत्त्वात् नानुमित्यापत्तिः। द्वितीयस्थले प्रत्यक्षातिरिक्तज्ञानं जायतामितीच्छासत्त्वे सिद्धिसत्त्वेऽनुमितेरनुभवसिद्धतया तादृशतादृशेच्छास्वस्याः प्रविष्टतया तादृशेच्छाविरहविशिष्टसिद्ध्यभावस्यात्राक्षततया नानुमित्यनुपपत्तिः। अनुमितौ तल्लिङ्गकत्वनिवेशेन आलोकेन वह्निमनुमिनुयामितीच्छासत्त्वे सिद्ध्यात्मकपरामर्शसत्त्वेऽनुमित्युदयेन तादृशेच्छाविरहविशिष्टसिद्ध्यभावस्य तत्र सत्त्वेन धूमलिङ्गकानुमित्यापत्तिर्वार्यते ॥

अत्र सिषाधयिषाविरहः सिषाधयिषानिष्ठप्रतियोगिताकाभावः, तत्र सिषाधयिषानिष्ठप्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वसिषाधयिषात्वावच्छिन्नत्वे निवेशनीये, अन्यथा सिषाधयिषाकालीनसिद्धिदशायामपि संयोगसम्बन्धेन सिषाधयिषाभावविशिष्टायाः सिषाधयिषाघटत्वोभयाभावविशिष्टायाश्च सिद्धेरनुमितिप्रतिबन्धि-

काया: सत्त्वेन अनुमित्यभावप्रसङ्ग:। सिध्यभाव इत्यत्रापि सिद्धि-निष्ठप्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वसिद्धित्वावच्छिन्नत्वे निवेशनीये, अन्यथा केवलसिध्यात्मकपरामर्शदशायामपि सिषाध-यिषाविरहविशिष्टसिद्धे: सयोगेनाभावस्य तादृशसिद्धिघटितोभयाभावस्य च सत्त्वेनानुमित्यापत्ति:। ननु यत्र पक्षतावच्छेदकसामानाधिकरण्येन सिद्धिरस्ति सिषाधयिषा नास्ति तत्र पक्षतावच्छेदकावच्छेदेनानुमितिर्जायते, न स्यात्, तत्र सिषाधयिषाविरहविशिष्टाया: सामानाधिकरण्येन सिद्धे: सत्त्वात् इति चेन्न, पक्षतावच्छेदकावच्छेदेनानुमितिस्थले सिषाधयिषाविरहविशिष्टा या पक्षतावच्छेदकावच्छेदेन सिद्धि: तदभावस्यैव पक्षतात्वेनाङ्गीकारात्। सामानाधिकरण्येनानुमितिं प्रति अवच्छेदकावच्छेदेन सामानाधिकरण्येन च सिद्धे:प्रतिबन्धकतया सामानाधिकरण्येनानुमितिस्थले सिषाधयिषाविरहविशिष्टा या (निरुक्तनिश्चयद्वयसाधारणसिद्धित्ववती) सिद्धि: तदभाव एव पक्षतेति बोध्यम्। न च यत्र स्थाणुर्वा पुरुषो वेति संशयोत्तर पुरुषत्वव्याप्यकरादिमानयमिति ज्ञानं जातं तत्र एतद्रूपस्य परामर्शस्य सिद्धेरभावेन विशेष्याभावप्रयुक्तविशिष्टाभावस्य सम्भवेन तादृशसिध्यभावरूपपक्षतायाश्च सत्त्वेन अयं पुरुष इत्यनुमितिप्रसङ्ग: (वस्तुतस्तु तत्र सिषाधयिषाऽभावेन नानुमिति:, किन्तु प्रत्यक्षसामग्रीरूपसन्निकर्षविशेषदर्शनयो: सत्त्वेन प्रत्यक्षमेव भवति) इतिवाच्यम्। अनुमितिं प्रति अनुमित्साविरहविशिष्टसिद्धेरिव अनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्र्या: पृथक् प्रतिबन्धकत्वस्याङ्गीकृतत्वेन दोषाभावात् ॥

केचित्तु, सिषाधयिषाविरहविशिष्टासिद्धिप्रत्यक्षसामग्र्यन्यतराभावस्यैव पक्षतात्वमङ्गीकृत्य पूर्वोक्तस्थले तादृशान्यतरान्तर्गतप्रत्यक्षसा-

मग्राहकत्वेन तदन्यतराभावस्याभावेनानुमित्यभावोपपत्तिरिति वदन्ति । सिषाधयिषा उत्तेजिकेति * अत्रोत्तेजकत्वञ्च प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वम्, अत्र सिषाधयिषाविरहविशिष्टसिद्धेः प्रतिबन्धकत्वेन प्रतिबन्धकतावच्छेदकीभूतसिषाधयिषाभावप्रतियोगित्वस्य सिषाधयिषायां सत्त्वात् समन्वयः ॥

**मूलम्— * परामर्शं लक्षयति * व्याप्तीति * व्याप्तिविषयकं यत्पक्षधर्मताज्ञानं स परामर्श इत्यर्थः । परामर्शमभिनीय दर्शयति * यथेति * अनुमितिमभिनीय दर्शयति * तज्जन्यमिति * परामर्शजन्यमित्यर्थः ।**

व्या * व्याप्तिविषयकमिति * व्याप्तिविशिष्टे पक्षधर्मतेति सममीतत्पुरुषादरे पर्वतो धूमवान् वह्नेरित्यादिव्यभिचारिहेतौ व्याप्तिविशिष्टत्वस्याभावेन तत्र पक्षधर्मताया अप्रसिध्या धूमव्याप्यवह्निमान इति परामर्शेऽव्याप्तिशङ्कायां प्रसक्तायां व्याचष्टे * व्याप्तिविशिष्टं यत्पक्षधर्मताज्ञानमिति * ननु वह्निव्याप्यो धूमः आलोकवान्पर्वत इति समूहालम्बनज्ञानेऽपि व्याप्तिविषयकत्वपक्षसम्बन्धविषयकत्वयोः सत्त्वेन परामर्शभिन्ने तस्मिन्नतिव्याप्तिरिति वाच्यम्, साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नप्रकारता निरूपितहेतुतावच्छेदकधर्मसंबंधावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वस्य परामर्शलक्षणत्वेन विवक्षिततया अत्र समूहालम्बनज्ञाने धूमांशे व्याप्तेः प्रकारत्वेऽपि पर्वतांशे तादृशधूमस्याप्रकारत्वेन निरुक्तलक्षणस्य तत्राभावेन दोषाभावात् । अतएव वह्निव्याप्यो धूमः धूमवान् पर्वत इति समूहालम्बनेऽपि नातिव्याप्तिः, पर्वतत्वावच्छिन्नविशेष्य-

तानिरूपितधूमत्वावच्छिन्नप्रकारतायां व्याप्तित्वावच्छिन्नप्रकारतानिरूपितत्वाभावात्। परामर्शे तु साध्यस्य व्याप्तौ व्याप्तेर्हेतौ हेतोः पक्षे च यथाक्रमं प्रकारतया समन्वय। नच वह्निव्याप्यवान् पर्वत इत्यादिनिश्चयात्परामर्शरूपादनुमित्युत्पत्तेः तत्र हेतुतावच्छेदकावच्छिन्नप्रकारताया अभावादव्याप्तिरिति वाच्यम्. तादृशव्याप्तित्वावच्छिन्नप्रकारतानिरूपिता या प्रकारता तन्निरूपिता या पक्षतावच्छेदकावच्छिन्ना विशेष्यता तच्छालित्वस्य लक्षणत्वेन विवक्षिततया तल्लक्षणस्य वह्निव्याप्यधूमवान् वह्निव्याप्यालोकवान् वह्निव्याप्यवानित्यादिनिश्चयेषु हेतुतावच्छेदकावच्छिन्नविषयकेषु तदविषयकेषु च साधारणतयाऽव्याप्त्यभावात् ॥

(न च वह्निव्याप्यधूमवान्पर्वतो घटवानिति निश्चते परामर्शत्वेनाभिमते धूमपर्वतत्वादौ विशेष्यतावच्छेदकताया एव सत्त्वेन व्याप्तिधूमादौ प्रकारताया अभावेनाव्याप्तिरिति वाच्यम्। प्रकारतात्वस्यावच्छेदकतासाधारणस्यैवात्र विवक्षितत्वात्) न च वह्निव्याप्यधूमवत्पर्वतवान्देश इति निश्चये परामर्शरूपेऽव्याप्तिः, तत्र पर्वतस्यापि प्रकारत्वेन लक्षणघटकविशेष्यत्वाभावादिति वाच्यम्, तत्र मुख्यविशेष्यताया निवेशाभावेन तत्र प्रकारतायाः सत्त्वेऽपि अमुख्यविशेष्यताया अपि सत्त्वान्नाव्याप्तिः। न च पर्वतो वह्निव्याप्यधूमवान्नवेति संशयेऽपि अनुमित्यजनकेऽतिव्याप्तिरिति वाच्यम्, निश्चयत्वस्य संशयान्यत्वरूपस्य ज्ञानत्वदलार्थत्वात्। न च आहार्ये (बाधनिश्चयकालीनेच्छाजन्ये) अप्रामाण्यज्ञानास्कन्दिते (वह्निव्याप्यधूमवान् पर्वत इति ज्ञानमप्रमेत्यप्रामाण्यज्ञानास्कन्दिते) वह्निव्याप्यधूमवान्पर्वत इति निश्चये अनुमित्यजनकेऽपि तल्लक्षणसत्त्वादतिव्याप्तिरिति वाच्यम्, अनाहार्यत्वाप्रामाण्यज्ञानानास्क-

न्दितत्वयोरपि विशेषणीयत्वात् । तथा च निरूपितत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्नव्याप्तित्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वं परामर्शस्य लक्षणम्. अतो न कुत्रापि दोषप्रसक्तिः ॥

अथवा अनाहार्यत्वादिकं लक्षणेऽप्रवेश्य अनुमितिकारणतावच्छेदककोटौ तत्प्रवेशनं समुचितं भवति । अत्र साध्यव्याप्यवान् पक्ष इति परामर्शात् पक्षस्साध्यवानिति पक्षे साध्यव्याप्य इति परामर्शात् पक्षे साध्यमिति च अनुमितिर्भवतीति केचन वदन्ति, साध्यव्याप्यवान् पक्षः पक्षे साध्यव्याप्यमिति द्विविधादपि परामर्शात् पक्षस्साध्यवानित्येवानुमितिरिति सिद्धान्तः । अन्तराभासमानवस्तुनिष्ठप्रकारताविशेष्यतयोरभेदावच्छेद्यावच्छेदकभावाङ्गीकर्तृमतभेदेन घटकपूर्वपक्षीयसिद्धान्तव्याप्तिभेदेन च अनुमितिपरामर्शयोः कार्यकारणभावः एतदीयपारिभाषिकपदार्थसंग्रहे निरूपितस्तत्र द्रष्टव्यः ॥

**मूलम्. * व्याप्तिलक्षणमाह * यत्रेति * यत्र धूमस्तत्राग्निरिति व्याप्तेरभिनयः । साहचर्यनियम इति लक्षणम् । साहचर्यं समानाधिकरण्यं, तस्य नियमः हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः ॥**

व्या * अभिनयः अभिलापकशब्दप्रयोगः तद्बोधकशब्दप्रयोग इत्यर्थः * हेतुसमानाधिकरणेति * हेत्वधिकरणवृत्त्यत्यन्ताभावा-

प्रतियोगिसाध्याधिकरणवृत्तित्व व्याप्तिः (इयं सिद्धान्तव्याप्तिरिति व्यवह्रियते) मद्वह्नौ समन्वय. असद्धेतावतिव्याप्तिवारणादिकं तर्कसङ्ग्रहसर्वस्वे निरूपितम् । अत्र हेतुसमानाधिकरणाभावीय-प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्व विशेषणं देयम्, अन्यथा वह्निमान् धूमादित्यत्र धूमरूपेहेतावव्याप्तिः, हेत्वधिकरण-महानसादिनिष्ठस्य समवायेन वह्न्यभावस्य साध्यस्य वह्नेः प्रति-योगित्वात्, तन्निवेशे तु तदीयसमवायसम्बन्धावच्छिन्नप्रतियोगि-तायाः साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वाभावान्नोक्तदोषः ।

---

सिद्धान्तव्याप्तिलक्षणे, अत्र हेतुनिष्ठाधेयतायां हेतुतावच्छेदकता-न्यूनवारकपर्याप्तिर्निवेशनीया, अन्यथा द्रव्यं विशिष्टसत्त्वादित्यत्र अव्याप्तिः हेतुतावच्छेदकसत्तात्वावच्छिन्नाधिकरणे गुणादौ विद्यमानस्य अभावस्य प्र-तियोगित्वात् द्रव्यत्वरूपसाध्यस्य । एवं महानसीयवह्न्यभाववत्ववान् प्रति-योगितासम्बन्धेन महानसीयवह्निरित्यत्राप्यव्याप्तिः हेतुतावच्छेदकवह्नि-त्वावच्छिन्नाधिकरणे वह्न्याव विद्यमानस्याभावस्य प्रतियोगित्व तु महा-नसीयवह्न्यभावत्वस्य । तद्गर्भनिवेशप्रकारश्च, हेतुतावच्छेदकतापर्याप्त्य-धिकरणधर्मावच्छिन्नत्वमिति वा स्वावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगि-तावच्छेदकत्वसम्बन्धेन हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-प्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति वा ग्राह्यः, हेतुतावच्छेदकताप-र्याप्त्यधिकरणधर्मः गुणकर्मान्यत्ववैशिष्ट्यसत्तात्वधर्मद्वयं महानसीयत्वव-ह्नित्वधर्मद्वयञ्च भवतीति न दोषः । तत्रैवाधेयतायां हेतुतावच्छेदकते-तरवारकपर्याप्ति निवेशनीया । अन्यथा पर्वतो वह्निमान् धूमादित्यत्र वह्निद्रव्यत्वान्यतरत्वावच्छिन्नाधेयतामादाय दोषः । एवं वह्न्यभावत्व-वान् प्रतियोगितासम्बन्धेन वह्निरित्यत्र महानसीयवह्नित्वाव च्छिन्नाधेय-तामादायातिव्याप्ति. । तद्गर्भनिवेशप्रकारः, हेतुतावच्छेदक [illegible] क्तध-र्मावच्छिन्नत्वमिति वा स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-नुयोगितावच्छेदकत्वसम्बन्धेन हेतुतावच्छेदकताप्रतियोगिकपर्याप्त्यनु-

हेत्वधिकरणं यत्र हेतुनिष्ठाधेयतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम्, अन्यथा वह्निमान् धूमादित्यत्राव्याप्तिः कालिकसमवायादिसम्बन्धेन हेत्वधिकरणह्रदधूमावयवादिषु विद्यमानस्य संयोगेन वह्न्यभावस्य साध्यस्य वह्नेः प्रतियोगित्वात्। तन्निवेशे तु हेतुतावच्छेदकसंयोगेन धूमाधिकरणत्वं ह्रदधूमावयवादौ नास्तीति नाव्याप्तिः। तत्राधेयतायां हेतुतावच्छेदकावच्छिन्नत्वमपि विशेषणीयम्, अन्यथा वह्निमान् धूमादित्यत्राव्याप्तिः, हेतुनिष्ठद्रव्यत्वावच्छिन्नाधेयतानिरूपिताधिकरणा वति ह्रदादौ विद्यमानस्याभावस्य प्रतियोगित्वात्साध्यस्य, तन्निवेशे तु धूमत्वावच्छिन्नाधिकरणत्वस्य ह्रदादावभावान्नाव्याप्तिः ॥

योगितावच्छेदकरूपवृत्तित्वमिति वा ग्राह्यम्। अत्र हेतुतावच्छेदकातिरिक्तधर्मः तदन्यतरत्वं महानसीयत्वं च भवतीति न दोषः। पर्याप्तिद्वयमेलने निवेशप्रकारः। स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति रीत्या ग्राह्यः॥

तत्राधेयतायां हेतुतानिरूपितसंसर्गतावच्छेदकतान्यूनवारकपर्याप्तिर्निवेशनीया। अन्यथा महानसो महानसीयवह्निमान् महानसानुयोगिकसंयोगसम्बन्धेन धूमादित्यत्र केवलसंयोगसम्बन्धेन धूमाधिकरणपर्वतादिकमादायाव्याप्तिः। तद्धर्मनिवेशप्रकारस्तु हेतुतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वमिति वा स्वानिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन हेतुतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति वा ग्राह्यः, तथा च तत्पर्याप्त्यधिकरणधर्मः महानसानुयोगिकत्वसंयोगत्वरूपधर्मद्वयं (संयोगत्वसमवायत्वतदन्यतरत्वरूपधर्मत्रितयं च भवतीति न दोषः) तत्रैवाधेयतायां हेतुतानिरूपितसंसर्गतावच्छेदकतरवारकपर्याप्तिर्निवेशनीया। अन्यथा वह्निमान् संयोगेन धूमा

अत्र हेत्वधिकरणवृत्तित्व स्वप्रतियोगिमत्ताग्रहविरोधिताघटक-सम्बन्धावच्छिन्न ग्राह्यम्, अन्यथा हेत्वधिकरणपर्वतादौ कालिक-सम्बन्धेन विद्यमानं वन्ह्यभावमादायाव्याप्तिः । स्वरूपसम्बन्धाव-च्छिन्नत्वनिवेशे तु घटत्वाभाववान् द्रव्यत्वादित्यत्रातिव्याप्तिः; हेत्व-धिकरणनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तितावदभावपदेन घटत्वा-भावाभावस्य ग्रहीतुमशक्यत्वात् । स्वरूपसमवायान्यतरसम्बन्धा-वच्छिन्नत्वनिवेशे तु परमाण्वभाववान् द्रव्यत्वादित्यत्रातिव्याप्तिः,

---

दित्यत्र संयोगसमवायान्यतरसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणता-वद्भावयवमादायाव्याप्तिः । तद्गर्भनिवेशप्रकारस्तु पर्यवसाने स्वनिरूपि-तसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेद-कत्वसम्बन्धेन हेतुतानिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयो-गितावच्छेदकरूपवृत्तित्वं वा यथाश्रुते हेतुतानिरूपितसंसर्गतावच्छेदकातिरि-क्तधर्मानवच्छिन्नसंसर्गताकत्वमिति वा ग्राह्यः। पर्याप्तिद्वयमेलने स्वनिरूपि-तसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक-त्वसम्बन्धेन हेतुतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिता-कपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति तन्निवेशप्रकारो ग्राह्यः ॥

एवं हेतुसमानाधिकरणाभावीयप्रतियोगितायां निवेशितं साध्यता-वच्छेदकसम्बन्धावच्छिन्नत्वमपि न्यूनेतरवारकपर्याप्तिघटितं ग्राह्यम् । तत्र साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनवारकपर्याप्त्यनिवेशे संयोगसम-वायान्यतरसम्बन्धेन वह्निमान् धूमादित्यत्र हेत्वधिकरणगतं समवायेन वह्न्यभावमादायाव्याप्तिः । एवं महानसीयवह्न्यभावो महानसीयवह्नित्वाव-च्छिन्नप्रतियोगितासंबन्धेन महानसीयवह्निमान् महानसीयवह्न्यभावत्वादि-त्यत्र हेत्वधिकरणगतं वह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन महानसीयवह्न्य-भावं व्यधिकरणसम्बन्धावच्छिन्नाभावरूपमादायाव्याप्तिः । साध्यतानिरू-पितसंसर्गतावच्छेदकेतरवारकपर्याप्त्यनिवेशे वह्निमान् धूमादित्यत्र महा-नसानुयोगिकसंयोगसम्बन्धेन संयोगसमवायसम्बन्धद्वयेन वा वह्नेरभाव-

निरुक्तान्यतरसम्बन्धावच्छिन्नवृत्तितायाः संयोगसम्बन्धेन विद्यमाने परमाण्वभावाभावे अभावात्। स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बंन्धावच्छिन्नत्वस्य वृत्तिताया निवेशे तु न पूर्वोक्तदोषावकाशः। तथाहि, स्वप्रतियोगिमत्ताग्रहविरोधिताघटकत्वञ्च स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकत्वम्। तादृशसम्बन्धो भावसाध्यकस्थले स्वरूप एव। अभावसाध्यकस्थले साध्यात्मकाभावप्रतियोगितावच्छेदकः यथा यथ समवायादिरेवेति नानुपपत्तिः ॥

ननु वह्निमान्धूमादित्यादौचालिनीन्यायेन हेतुसमानाधिकरणाभावप्रतियोगित्वस्यैव सर्वस्मिन्नपि साध्ये सत्त्वादव्याप्तिरिति चेन्न, साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात्। न च रूपत्वव्याप्यजातिमद्वान् रूपादित्यत्रा-

मादायाव्याप्तिः। एव वह्न्यभावो वाह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन वह्निमान् वह्न्यभावत्वादित्यत्र हेत्वधिकरणवह्निसामान्याभावगतं महानसीयवह्नित्वावच्छिन्नप्रतियोगिता संबन्धेन वह्नेरभावं व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावरूपमादायाव्याप्तिः। ननु तत्तदवच्छेदकतापर्याप्त्यधिकरणत्वनिवेशेनैव सामञ्जस्ये किं तदवच्छेदकतात्वावच्छिन्नप्रतियोगिताकत्वघटितगुरुतरन्यूनवारकपर्याप्तिगर्भनिवेशेनेति चेन्न, समुदायस्य प्रत्येकानतिरिक्ततया समुदायगततदवच्छेदकतापर्याप्त्यधिकरणत्वस्य प्रत्येकपदार्थेऽपि सत्त्वात् पूर्वोक्तदोषतादवस्थ्ये तादृशगुरुतरारम्भस्य युक्तत्वात्। ननु तत्तदवच्छेदकातिरिक्तधर्मानवच्छिन्नत्वरूपेतरवारकपर्याप्तिगर्भनिवेशेनैव सामञ्जस्ये किं गुरुतरारम्भेणेति चेन्न, पृथिवीवाय्वादिलक्षणेषु टिप्पण्यां निर्दिष्टेनानुपपत्तिप्रसङ्गेन गुरुतरस्येतरवारकपर्याप्तिगर्भनिवेशस्यावश्यकत्वात् इत्यलं विस्तरेण ॥

व्याप्तिः, सर्वासां नीलत्वपीतत्वादिरूपाणां रूपत्वव्याप्यजातीनां चालिनीन्यायेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य सत्त्वात् इति वाच्यम् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतानवच्छेदकं यत्साध्यतावच्छेदकतावच्छेदकं तदवच्छिन्नावच्छिन्नसामानाधिकरण्यस्य लक्षणत्वेन विवक्षितत्वात्, हेत्वधिकरणे रूपत्वव्याप्यजातिमान्नास्तीत्यभावस्यासम्भवेन रूपत्व - व्याप्यजातित्वरूप साध्यतावच्छेदकतावच्छेदके तादृशप्रतितावच्छेदकतानवच्छेदकत्वस्य अक्षततयाऽव्याप्त्यभावात् । न चैव वह्निमान्धूमादित्यादिनिरवच्छिन्नसाध्यतावच्छेदककस्थले ऽव्याप्ति, तत्र साध्यतावच्छेदकतावच्छेदकस्याप्रसिद्धत्वादिति वाच्यम्, अवच्छिन्नसाध्यतावच्छेदककस्थले तादृशसाध्यतावच्छेदकतावच्छेदकघटितलक्षणस्य निरवछिन्नसाध्यतावच्छेदकक - स्थले तादृशसाध्यतावच्छेदकघटितलक्षणस्य च लक्षणत्वेनाङ्गीकार्यतया एव स्थलभेदेन लक्षणभेदाङ्गीकारेऽनुपपत्त्यभा-वात् । न च द्रव्यं विशिष्टसत्त्वादिति निरवच्छिन्नसाध्यकस्थले तादृशसाध्यतावच्छेदकसाध्यतावच्छेदकतावच्छेदकयोरप्रसिध्द्याऽव्याप्ति - रिति वाच्यम् । तादृशाभावाप्रतियोगिसाध्यमिति रीत्या निरवच्छिन्नसाध्यकस्थलेऽपि लक्षणभेदस्याङ्गीकार्यत्वात् । नचास्मिन् लक्षणे विशिष्टाभावोभयाभावादिकमादाय वह्निमान्धूमादित्यादावव्याप्तिरिति वाच्यम् । हेतुसमानाधिकरणाभावीयप्रतियोगितायां वैशिष्ट्यव्यासज्यवृत्तिधर्मानवछिन्नत्वयोर्निवेशनीयत्वात् ॥

ननु वृक्षः कपिसयोगी एतद्वृक्षत्वादित्यत्र हेतावव्याप्तिः । हेत्वधिकरणे एतद्वृक्षे "अग्र वृक्षः कपिसयोगी मूले न इति नियमानुसारेण कपिसंयोगाभावस्य सत्त्वेन तत्प्रतियोगित्वस्य कपिसंयोगेऽक्षतत्वादिति वाच्यम्, हेतुसमानाधिकरणाभावे प्रति-

योगिवैयधिकरण्यस्य विवक्षितत्वात्, तच्च स्वप्रतियोग्यधिकरणावृत्तित्वरूपं, तथा च कपिसयोगाभावस्य अग्रावच्छेदेन प्रतियोग्यधिकरणे वृक्षे मूलावच्छेदेन वर्तमानतया स्वप्रतियोग्यधिकरणावृत्तित्वस्य तत्राभावेन तादृशघटाद्यभावप्रतियोगितावच्छेदकत्वस्य कपिसंयोगत्वे सत्त्वेनाव्याप्त्यभावात् । न चैव सति तुल्ययुक्तया कपिसंयोगी सत्त्वादित्यत्रातिव्याप्तिः, कपिसयोगाभावे स्वप्रतियोग्यधिकरणावृत्तित्वस्यासम्भवेन घटाभावे तत्सम्भवेऽपि तत्प्रतियोगितानवच्छेदकत्व साध्यतावच्छेदकेऽक्षतत्वात् इति वाच्यम् । स्वप्रतियोग्यनधिकरणवृत्तित्वस्य तदर्थत्वात् । कपिसयोगाभावस्य स्वप्रतियोग्यनधिकरणगुणादिवृत्तित्वेन लक्षणघटकतया तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वेनातिव्याप्त्यभावात् । न च कपिसयोग्येतद्वृक्षत्वादित्यादौ स्वप्रतियोग्यनधिकरणगुणादिवृत्तिकपिसंयोगाभावप्रतियोगितावच्छेदकत्वस्य कपिसंयोगत्वे सत्त्वेनाव्याप्तितादवस्थ्यमिति वाच्यम्, स्वप्रतियोगिव्यधिकरण हेतुसमानाधिकरणाभावान्तपदेन स्वप्रतियोग्यनधिकरणं यद्धेत्वधिकरण तद्वृत्त्यभावस्य विवक्षितत्वात्. कपिसयोगी सत्त्वादित्यादौ स्वप्रतियोग्यनधिकरणहेत्वधिकरणगुणादिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य कपिसंयोगत्वे सत्त्वेन नातिव्याप्तिः । कपिसंयोगी एतद्वृक्षत्वादित्यत्र स्वपदेन कपिसंयोगाभावपरिग्रहणे स्वप्रतियोग्यनधिकरणत्वं हेत्वधिकरणस्य न सम्भवति, तादृशाभावपदेन घटाद्यभावानां परिग्रहणे तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनाव्याप्त्यभावात् ॥

अत्र स्वप्रतियोग्यनधिकरणत्वं स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरण-

तावद्भिन्नत्वरूप परिष्करणीयम्, अधेयतायां स्वप्रतियोगितावच्छे-दकावच्छिन्नत्वानिवेशे विशिष्टसत्तावान् जातेरित्यत्र हेता-वतिव्याप्तिः हेत्वधिकरणवृत्त्यभावपदेन विशिष्टसत्ताभावस्य 'परिग्रहणे विशिष्ट शुद्धान्नातिरिच्यते' इति न्यायेन स्वप्रति-योगिनी सत्तापि भवति तन्निष्ठसत्तात्वावच्छिन्नधेयतानिरूपि-ताधिकरणतावान् न हेत्वधिकरणीभूतगुणो भवति तादृशस्य घटाद्यभावस्य परिग्रहणे तत्प्रतियोगितानवच्छेदकत्व साध्यता-वच्छेदकेऽक्षतमिति। तन्निवेशे तु हेतुसमानाधिकरणाभाव-पदेन विशिष्टसत्ताभावोग्रहीतु शक्यते, स्वप्रतियोगितावच्छेदक-तापर्याप्त्यधिकरणगुणान्यत्ववैशिष्ट्यसत्तात्वधर्मद्वयावच्छिन्नाधेयता-निरूपिताधिकरणतावद्भिन्नस्य गुणेऽक्षतत्वात्। (गुणे गुण-कर्मान्यत्वविशिष्टसत्तेति प्रतीतौ गुणनिरूपितसत्तात्वावच्छिन्न-वृत्तित्वविशिष्टसत्ताया भासते, गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति प्रतीतौ तु गुणकर्मान्यत्ववैशिष्ट्यसत्तात्वरूपधर्मद्वयावच्छिन्नाधे-यतानिरूपिताधिकरणत्वतदधिकरण ताद्वय वा भासते, गुणकर्मान्यत्वविशिष्टसत्तात्वस्याधेयतावच्छेदकत्व सम्भवति, 'एत त्सर्वल्लक्षणलक्षणविचारे निरूपितम्॥

एव तत्राधेयतायां स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्न-त्वानिवेशे ज्ञानवान् सत्त्वादित्यत्रातिव्याप्तिः, हेतुसमानाधिकरणा-भावपदेन ज्ञानाभावस्य परिग्रहणे स्वप्रतियोगितावच्छेदकज्ञानत्वा-वच्छिन्नस्य विषयतासम्बन्धेनाधिकरणमेव हेत्वधिकरणगुणादिकं भवति, घटाद्यभावस्य एतद्गुणासमानकालीनघटाद्यभावस्य वा परिग्रहणे कालिकादिसम्बन्धेनापि स्वप्रतियोग्यनधिकरणत्वमेत-द्गुणस्य सम्भवतीति तत्प्रतियोगितानवच्छेदकत्वं साध्यतावच्छेद-

केऽक्षतमिति । तन्निवेशे तु स्वप्रतियोगितावच्छेदकसमवायसम्ब-न्धावच्छिन्नज्ञानत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावदात्मभिन्न-त्वं हेत्वधिकरणगुणादौ वर्तत इति तादृशाभावपदेन समवायेन ज्ञानाभावस्यैव परिग्राह्यतया नातिव्याप्तिः । स्वप्रतियोगिनिष्ठा-धेयतायां स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वस्थाने साध्यता-वच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे तु हेतुसमानाधिकरणाभावी-यप्रतियोगितायाः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशो विफ-लः । तत्र समवायेन वह्न्यभावग्रहणेऽपि तत्प्रतियोगिनो वह्नेः साध्यतावच्छेदकसंयोगसम्बन्धेन हेत्वधिकरणपर्वतादेरधिकरणत्वेन तद्भिन्नवृत्तित्वस्य पूर्वोक्ताभावेऽभावात् (इदानीं स्वप्रतियोगिनिष्ठा-धेयतायां स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशनं हेतु-समानाधिकरणाभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धा-वच्छिन्नत्वनिवेशनञ्चानावश्यकं तद्वारणीयदोषाभावात्) अस्मिन् लक्षणे विचारान्तरं मुक्तावलीव्याख्यानावसरे निरूपयिष्यते ॥

**मू * पक्षधर्मतास्वरूपमाह * व्याप्यस्येति * अनु-मानं विभजते * अनुमानमिति * स्वार्थानुमानं दर्शयति * स्वयमेवेति * ननु पार्थिवत्वलोहलेख्यत्वादौ शतशः सहचारदर्शनेऽपि वज्रमणौ व्यभिचारोपलब्धेः भूयो दर्शनेन कथं व्याप्तिग्रह इति चेन्न, व्यभिचारज्ञानविरहसहकृतसह-चारज्ञानस्य व्याप्तिग्राहकत्वात्, व्यभिचारज्ञानं निश्चयश्श-ङ्का च तद्विरहः क्वचित्तर्कात् क्वचित् स्वतस्सिद्ध एव धूमा-ग्न्योः व्याप्तिग्रहे कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्को व्य-भिचारशङ्कानिवर्तकः ॥**

व्या * स्वार्थानुमानमिति * स्वस्यार्थः अनुमितिरूपं साध्यसंशयनिवृत्तिरूप वा प्रयोजनं यस्मात्तदिति व्युत्पत्तिः। सहचारदर्शनं सामानाधिकरण्यनिश्चयः * नन्विति * अत्राय भावः। बहुस्थलेषु पार्थिवत्वाधिकरणे लोहलेख्यत्वदर्शनेऽपि लोहलेख्यत्वाभाववत्यपि वज्रमणौ पार्थिवत्वदर्शनेन तयोः पूर्वं सहचारग्रहसत्त्वेऽपि व्यभिचारनिश्चयस्य व्याप्तिग्रहप्रतिबन्धकस्यसत्त्वेन व्याप्तिनिश्चयो न सम्भवतीति * इदमुपलक्षणम्, भूयोदर्शनमित्यत्र विग्रहः भूयसा दर्शनानां समाहार इति भूयसा साध्यहेतूनां दर्शनमिति भूयस्स्वधिकरणेषु दर्शनमिति वा। नाद्य., एकत्रैव सहचारदर्शनधारया व्याप्तिनिश्चयप्रसङ्गात्। न द्वितीयः एतद्रूपवानेतद्रसादित्यादौ एकव्यक्तिसाध्यसाधनकस्थले साध्यहेत्वोरनेकत्वरूपभूयस्त्वाभावेन व्याप्तिनिश्चयाभावप्रसङ्ग.। न तृतीयः, तत्रैव साध्यहेत्वधिकरणे भूयस्त्वाभावात् * व्यभिचारज्ञानविरहेति * अत्रायमाशयः, केवलसहचारनिश्चयस्य व्याप्तिनिश्चयं प्रति न हेतुत्वं, किन्तु व्यभिचारज्ञानाभावस्यापि हेतुत्वमङ्गीक्रियेत। तथाच प्रकृतस्थले सहचारदर्शनसत्त्वेऽपि व्यभिचारज्ञानाभावस्याभावेन न व्याप्तिनिश्चय इति (साध्यसामानाधिकरण्यज्ञानस्य विशेषणज्ञानमुद्रया व्यभिचारज्ञानाभावस्य प्रतिबन्धकाभावविधया च हेतुत्वं ज्ञेयम्) व्यभिचारज्ञानाभावविशिष्टसहचारज्ञानत्वेन वा व्यभिचारज्ञानाभावत्वेन सहचारज्ञानत्वेन पृथग्वा कार्यकारणभावो ग्राह्यः * शङ्का चेति * व्यभिचारसंशयस्यापि व्याप्तिग्रहप्रतिबन्धकत्वानुभवेन तत्संशयनिश्चयसाधारणज्ञानत्वावच्छिन्नाभावो हेतुरित्यर्थः * क्वचित्तर्कादिति * तर्काभावेतरसकलव्यभिचारज्ञानकारणसमवधानस्थले तर्कात्तद्विरहः सम्भवति *

क्वचित्स्वतस्सिद्ध इति * तर्काभावस्य तदितरकारणनाश्च विरह-स्थले इतरकारणाभावादेव व्यभिचारज्ञानाभावः * धूमाग्न्यो-रिति * पर्वते धूमोऽस्तु वह्निर्मास्तु इत्यप्रयोजकशङ्कायां प्रसक्तायां यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति तर्कः प्रयोक्तव्यः। तत्रापि यदीष्टापत्तिरभ्युपगम्येत, तन्मते भोजनाभावेऽपि तृप्ति-रङ्गीकार्या स्यात् ॥

**मू * ननु सकलवह्निधूमयोरसन्निकर्षात् कथं व्याप्तिग्रह इति चेन्न, वह्नित्वधूमत्वरूपसामान्यलक्षणप्रत्यासत्त्या सक-लवह्निधूमज्ञानसम्भवात् ॥**

* नन्विति * अयं भावः, असन्निकृष्टस्य पदार्थस्य प्रत्यक्षे भानासम्भवेन प्रत्यक्षविषये सर्वत्रापि सन्निकर्ष आवश्यकः। तथा च वह्निव्याप्यधूम इति व्याप्तिज्ञाने सर्वेषां वह्निधूमानां भासमानतया महानसीयवह्निधूमादिषु चक्षुस्संयोगरूपसन्निकर्षस्य सत्त्वेऽपि देशान्तरीयवह्निधूमयोस्तदभावेन कथं व्याप्तिनिश्चये तेषां सर्वेषां भानं? कथं वा पर्वतीयधूमदर्शनेन पर्वतीयवह्नेरपि स्मरणं, कथं वा तत्तद्विषयकपरामर्शोपपत्तिरिति। * वह्नित्वधूम-त्वेति * अयमाशयः, सर्वेषु वह्निधूमेषु लौकिकसन्निकर्षाभावेऽपि सामान्यलक्षणसन्निकर्षसम्भवेन न सर्वतद्विषयकव्याप्तिग्रहानु-पपत्तिः। तथा हि, इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामा-न्यं सामान्यलक्षणप्रत्यासत्तिः, प्रकृते इन्द्रियसम्बद्धं महानसीय-वह्निधूमादिकं, तद्विशेष्यकं ज्ञानं वह्नयः धूमा इति ज्ञानं तत्प्रका-रीभूतं सामान्यं वह्नित्वधूमत्वादि, अस्य वह्निधूमेषु सर्वेष्वपि सत्त्वेन सामान्यलक्षणप्रत्यासत्त्या सकलवह्निधूमभानोपपत्तिरिति"

अलौकिकसन्निकर्षस्त्रिविः सामान्यलक्षणो ज्ञानलक्षणो योगजलक्षणश्चेति । समानानां भावः सामान्यम् । इदं जातिरूपं घटादिरूपमपि भवति, नतु जातिरूपमेव सामान्य, तथा सति घटादिसामान्यलक्षणप्रत्यासत्त्या घटवद्भूतलादीनां प्रत्यक्ष न स्यात् सामान्यलक्षणेन । ननु इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूत-सामान्यस्यैव प्रत्यासत्तित्वे तादृशसामान्यस्य नित्यस्यानित्यस्य वा कालान्तरेऽपि सम्भवेन तदापि तदाश्रयप्रत्यक्षापत्तिरिति चन्न, इन्द्रियसम्बद्धविशेष्यकसामान्याविषयकज्ञानमेव सामान्यलक्षणप्रत्या-सत्तिः, तादृशज्ञानस्य कालान्तरेऽभावान्नानुपपत्तिः । (सामान्यं लक्षणं स्वरूप यस्येति पूर्वोक्तसामान्यस्य प्रत्यासत्तित्वपक्षे सामान्य लक्षण विषयो यस्येति तादृशसामान्यविषयकज्ञानस्य प्रत्यासत्तित्वपक्षे च व्युत्पत्तिः ग्राह्या) ॥

अथ ज्ञानलक्षणसन्निकर्षो निरूप्यते, ज्ञान लक्षण स्वरूपं यस्येति व्युत्पत्तिः, तथा च ज्ञानरूपः सन्निकर्षः ज्ञानलक्षणप्रत्या-सत्तिः । दूरतश्चन्दने दृष्टे सुरभिचन्दनमिति सौरभ्यविषयकं प्रत्यक्ष जायते, तच्च प्रत्यक्षं पूर्वोत्पन्नलौकिकप्रत्यक्षजनितसस्का-राधीनस्मरणरूपज्ञानलक्षणसन्निकर्षाज्जायते, अतो ज्ञानलक्षणस-न्निकर्षावश्यकता । नन्विन्द्रियसम्बद्धगन्धविशेष्यकज्ञानप्रकारी-भूतसुरभिगन्धत्वरूपसामान्यलक्षणसन्निकर्षादेव सौरभ्यप्रत्यक्षो-पपत्तौ ज्ञानलक्षणप्रत्यासत्त्यङ्गीकारे प्रयोजनाभाव इति चेन्न, सामान्यलक्षणसन्निकर्षात्सौरभ्यभानेऽपि सुरभिगन्धत्वभानार्थं ज्ञा-नलक्षणसन्निकर्षस्यावश्यकत्वात् । न चैवं सामान्यलक्षणस्यापि ज्ञानरूपतया ज्ञानलक्षणसन्निकर्षभेद इति वाच्यम् । सामान्य-लक्षणस्तु सामान्याश्रयस्य ज्ञानं जनयति, ज्ञानलक्षणस्तु सन्निकर्षः

स्वविषयविषयकं ज्ञानं जनयतीतीयान्भेदः ॥

अथ योगजलक्षणस्सन्निकर्षो निरूप्यते, योगाज्जायत इति योगजः योगजनितधर्मविशेषरूपः तथा च योगजनितधर्मविशेषेण योगिनामतीतानागतपदार्थविषयकं प्रत्यक्षं जायते, स च धर्मो योगजलक्षणस्सन्निकर्षः। स च द्विविधः युक्तयोगजन्यो युञ्जानयोगजन्यश्चेति, आद्यश्चिन्ताऽसहकृतमनोवृत्तिमात्रसहायः धर्मविशेषः। द्वितीयस्तु चिन्तासहकृतमनोवृत्तिसहायो धर्मः। तथा च विषयतासम्बन्धेन जायमानसामान्यलक्षणसन्निकर्षजन्यप्रत्यक्षं प्रति स्वविषयसामान्याश्रयत्वसम्बन्धेन सामान्यलक्षणसन्निकर्षस्य कारणत्वम्। विषयतासम्बन्धेन जायमानज्ञानलक्षणसन्निकर्षजन्यप्रत्यक्षं प्रति विषयतासम्बन्धेन ज्ञानलक्षणसन्निकर्षस्य कारणत्वम्। विषयतासम्बन्धेन जायमानतत्तद्विषयकयोगजलक्षणसन्निकर्षजन्यप्रत्यक्षं प्रति स्वसमवायिसंयुक्तसम्बद्धत्वसम्बन्धेन योगजलक्षणसन्निकर्षस्य कारणत्वम् (स्वं योगजधर्मः स्वसमवायी आत्मा तत्संयुक्तो घटादिः तत्सम्बद्धत्वं गगनादावन्यत्र च सम्भवति) सम्बद्धत्व च सम्बन्धसामान्येन ग्राह्यं न तु सम्बन्धविशेषेण, अन्यथा परमाणुषु समवायावच्छिन्नायाः गुणेषु संयोगावच्छिन्नायाः अभावेषु तदन्यतरावच्छिन्नायाश्च सम्बन्धताया अभावेन योगिनस्तेषामप्रत्यक्षप्रसङ्गः ॥

**मू * तस्मादिति * लिङ्गपरामर्शादित्यर्थः। परार्थानुमानमाह * यत्त्विति * यच्छब्दस्य तत्परार्थानुमानमिति तच्छब्देनान्वयः। पञ्चावयववाक्यमुदाहरति * यथेति * अवयवस्वरूपमाह * प्रतिज्ञेति * उदाहृतवाक्ये प्रतिज्ञादिविभागमाह * पर्वतो वह्निमानिति ***

व्या * तत्परार्थानुमानमिति * अस्मिन् शब्दे व्युत्पत्तिसमन्वयादिविचारः तर्कसङ्ग्रहसर्वस्वे प्रतिपादितः । * पञ्चावयववाक्यमुदाहरतीति * पञ्चावयवा यत्रेति व्युत्पत्त्या उचितानुपूर्वीकप्रतिज्ञाद्यवयवपञ्चकसमुदायत्वं न्यायलक्षणं फलितम् । तादृशसमुदायत्वस्य "समुदायः प्रत्येकान्नातिरिच्यते" इति नियमेन प्रत्येकावयवे सत्त्वेऽपि तादृशसमुदायत्वपर्याप्त्यधिकरणत्वस्य लक्षणत्वेन तस्य प्रत्येकावयवेऽभावान्नातिव्याप्तिः । उचितानुपूर्विकत्वनिवेशनेन व्युत्क्रमप्रयुक्तावयवकपञ्चावयववाक्यसमुदाये नातिव्याप्तिः । वस्तुतस्तु. अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशब्दज्ञानजनकवाक्यत्व न्यायलक्षणम्, अनुमितिकारणभूतो यो लिङ्गपरामर्शः प्रकृते वह्निव्याप्यधूमवानयमिति परामर्शः, तत्प्रयोजकं यच्छाब्दज्ञान वाक्यार्थपञ्चकविषयकं समूहालम्बनज्ञानं, तज्जनकवाक्यत्वमेतद्वाक्यसमुदाये वर्तत इति समन्वयः । अत्र पूर्वपूर्ववाक्यार्थबोधोत्पन्नसंस्कारसहितात् चरमवाक्यात् वाक्यार्थपञ्चकविषयकस्समूहालम्बनबोधो जायते. तस्मान्मानसिको लिङ्गपरामर्श उत्पद्यते, ततोऽनुमितिरिति क्रमो बोध्यः ॥

अनेन प्रतिपादिताल्लिङ्गादिति मूलस्य एतदवयवपञ्चकसमुदायप्रयोज्यलिङ्गपरामर्शादित्यर्थः । परोऽप्यग्निं प्रतिपद्यत इत्यस्य वह्निविधेयकानुमितिमान् भवतीत्यर्थः * अवयवस्वरूपमाहेतीति * न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वमवयवलक्षणं न्यायानन्तर्गतप्रतिज्ञादिषु अतिव्याप्तिवारणाय न्यायान्तर्गतत्वनिवेशः । यथाक्रम प्रतिज्ञाद्यवयवपञ्चकसमुदायो न्यायः । वस्तुतस्तु अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकवाक्यत्वमवयवलक्षणं बोध्यम्, समन्वयो न्याय-

लक्षणवदेव, विशेषस्तु तादृशशाब्दज्ञानजनकं यच्छाब्दज्ञानं प्रत्येकावयवजन्यज्ञानं, वाक्यार्थपञ्चकविषयकसमूहालम्बनबोधे प्रत्येकवाक्यार्थबोधस्य हेतुत्वात्, तज्जनकवाक्यत्वं प्रत्येकावयवे वर्तत इति ॥

मू * साध्यवत्तया पक्षवचनं प्रतिज्ञा *

व्या * साध्यवत्तयेति * अत्र तृतीयायाःप्रकारतानिरूपकत्वं पक्षस्य वचनमित्यत्र षष्ठ्या विशेष्यतानिरूपकत्वं चार्थः । साध्यवत्ता च "प्रकृत्यर्थे प्रकारीभूतधर्मो भावप्रत्ययार्थः" इति न्यायेन साध्यरूपा, तथा च साध्यनिष्ठप्रकारताकपक्षनिष्ठविशेष्यताकबोधजनकवाक्यत्वं प्रतिज्ञालक्षण बोध्यम् । (पर्वतो वह्निमानिति वाक्यात् निपातातिरिक्तेति नियमानुसारेण वह्निमतः अभेदेन पर्वते भानेवह्निमदाभिन्नः पर्वत इति बोधः) नन्वत्र पर्वते वह्निमत एवाभेदसम्बन्धेन प्रकारत्वेन भासमानतया साध्यप्रकारकत्वस्य तज्जन्यबोधेऽभावादसम्भव इति चेन्न, साध्यप्रकारकमानसिकबोधाभिप्रायेण निपातातिरिक्तेति नियमस्यानित्यत्वाभिप्रायेण वा एतल्लक्षणस्योपपद्यमानत्वात् (अथ वा साध्यवत्तापदस्य साध्यवति लक्षणाङ्गीकारे अभेदसम्बन्धेन साध्यवत्प्रकारकपक्षविशेष्यकबोधजनकवाक्यत्वं लक्षणमस्तु, तथा च न कापि क्षतिः) समन्वयः सुगमः । अत्र साध्यप्रकारकत्वाभावे घटवान्पर्वत इति वाक्ये पक्षविशेष्यकत्वाभावे वह्निमान् घट इति वाक्ये च अतिव्याप्तिरित्युभयोपादानम् । अत्र प्रकारतायां साध्यतावच्छेदकावच्छिन्नत्वं विशेषणं पक्षतावच्छेदकावच्छिन्नत्वं विशेष्यतायाञ्च निवेशनीयम् । अन्यथा द्रव्यवान् महानसीयवह्निमान्पर्वतः इति

वाक्ये वह्निमान् पाषाणमयो द्रव्यं वा नीलपर्वतो वा इति वाक्ये- चातिव्याप्तेः । न चैवं न्यायबहिर्भूते पर्वतो वह्निमानिति वाक्येऽ तिव्याप्तिरिति वाच्यम्, न्यायान्तर्गतत्वस्यापि विशेषणीयत्वात् । नचैव सति न्यायान्तर्गतत्वनिवेशेनैव न्यायबहिर्भूतपूर्वोक्तवाक्येष्व- तिव्याप्तिवारणात् तद्घटकसाध्यादिपदानां वैयर्थ्यमिति वाच्यम्, पक्षतावच्छेदकावच्छिन्नत्वदलाभावे हेतुमान् हेतुव्यापकसाध्यवानि- त्यर्थबोधकोदाहरणवाक्ये हेतुमत्त्वेन पक्षावगाहिन्यतिव्याप्तिः । साध्यतावच्छेदकावच्छिन्नत्वदलाभावे साध्यव्याप्यहेतुमान् पक्ष इति बोधजनकोपनयवाक्येऽतिव्याप्तिः, तत्र न्यायान्तर्गतत्वस्यापि स- त्त्वात् ॥

मू * पञ्चम्यन्तं लिङ्गप्रतिपादकं वचनं हेतुः *

व्या * पञ्चम्यन्तमिति पञ्चम्यन्तत्वे सति लिङ्गप्रतिपादकत्वं हेतुवाक्यस्य लक्षणम् । धूमनिष्ठं हेतुत्वमिति बोधजनके धूमादिति वाक्ये पञ्चम्यन्तत्वधूमरूपलिङ्गप्रतिपादकत्वयोः सत्त्वात्समन्वयः । पञ्चम्यन्तत्वमात्रोक्तौ अयं न दण्डात् दण्डसंयोगाजन्यद्रव्यत्वा- दित्यत्र प्रतिज्ञावाक्ये दण्डाजन्यत्वरूपसाध्यबोधकेऽतिव्याप्तिः । तन्निवेशे तु तत्र दण्डसंयोगाजन्यद्रव्यत्वरूपहेतुबोधकत्वस्याभावा- न्नातिव्याप्तिः । लिङ्गप्रतिपादकत्वमात्रोक्तौ उदाहरणोपनयनि- गमनेष्वतिव्याप्तिः, अतो दलद्वयोपादानम् । न्यायबहिर्भूतवा- क्येऽतिव्याप्तिवारणाय न्यायान्तर्गतत्वदलम् अवयवलक्षणेषु सर्व- त्रापि निवेशनीयम् ॥

मू * व्याप्तिप्रतिपादकं वचनमुदाहरणम् *

व्या * व्याप्तिप्रतिपादकमिति * यो यो धूमवान् स सोऽग्नि-

मानित्यत्र अग्निपदस्य धूमव्यापकवह्नौ लक्षणा । यो य इत्यादेस्तात्पर्यग्राहकत्वम् (अथ वा प्रथमयत्पदार्थो महानसः द्वितियियत्पदार्थोऽमहानसान्यः, तत्पदार्थयोः महानसतदन्ययोः वह्निधूमभानमङ्गीक्रियते, तदुत्तरं व्यापकताबोधो मानसोऽङ्गीक्रियते) (धूमव्यापकत्वस्य वह्नौ भाने तुल्यवित्तिवेद्यतया वह्निव्याप्यत्वञ्च धूमे भासते, व्याप्यत्वस्य तदभाववदवृत्तित्वविशिष्टतत्सामानाधिकरण्यरूपत्वेऽपि प्रयोजनाभावेन विशेषणांशपरित्यागाङ्गीकारे विशेष्यांशस्य तत्सामानाधिकरण्यस्य भानाङ्गीकारे धूमव्यापकवह्निसामानाधिकरण्यमनेन वाक्येन बोध्यते) धूमवान् धूमव्यापकवह्निमानित्युदाहरणवाक्यजन्यबोधे धूमवति वह्निभाने तुल्यन्यायेन धूमव्यापकवह्निमति धूमभानमपि भवति, तत एव धूमे धूमव्यापकवह्निसामानाधिकरण्यलाभ इति प्राहुः । तथा च हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिप्रतिपादकत्वस्य सत्त्वादुदाहरणवाक्ये समन्वयः । (धूमवान् धूमव्यापकवह्निमानित्युदाहरणवाक्यजन्यो बोधः) ननु व्याप्तिप्रतिपादकत्वस्य उपनयनिगमनयोरपि सत्त्वादतिव्याप्तिरिति चेन्न, पक्षाविषयकत्वस्यापि निवेशनीयत्वात् । न च धूमवान् धूमव्यापकवह्निमानिति बोधे उदाहरणवाक्यजन्ये धूमवत्त्वेन पक्षस्यापि विषयतयाऽव्याप्तिरिति वाच्यम्, पक्षतावच्छेदकावच्छिन्नाविषयकत्वस्य तदर्थत्वात्, अत्र पर्वतत्वाद्यवच्छिन्नस्याविषयत्वेन समन्वयात् । न्यायान्तर्गतत्वं निवेशनीयमेव ॥

**मू * व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनमुपनयः ***

व्या * व्याप्तिविशिष्टलिङ्गेति * व्याप्तिविशिष्टलिङ्गविषयक

शाब्दबोधजनकवाक्यत्वमुपनयनवाक्यस्य लक्षणम् । वह्निव्याप्य धूमवान्पर्वत इति बोधजनके तथा चायमिति वाक्ये तादृशलिङ्ग-प्रतिपादकत्वस्य सत्त्वात्समन्वयः । ननु वह्निव्याप्यधूमज्ञानज्ञाप्यवह्निमान् पर्वत इति बोधजनके तस्मात्तथेति वाक्येऽपि व्याप्तिविशिष्टलिङ्गप्रतिपादकत्वस्य सत्त्वादतिव्याप्तिरिति वाच्यम्, पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या व्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्ना प्रकारता तच्छालिबोधजनकवाक्यत्वस्य लक्षणत्वेन विवक्षितत्वात् । निगमनवाक्यजन्यबोधे ज्ञानज्ञाप्यत्वांशे तादृशधूमस्य प्रकारत्वेऽपि पक्षे तस्याप्रकारत्वान्नातिव्याप्तिः । न च वह्निव्याप्यधूमवान् पर्वत इति परामर्शाभिनयवाक्येऽतिव्याप्तिरिति वाच्यम् । न्यायान्तर्गतत्वविशेपणेन तस्यापि वारणात् ॥

**मू * हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनं निगमनम् ***

व्या * हेतुसाध्यवत्तयेति * हेतोः साध्यवत्ता हेतुसाध्यवत्ता पञ्चम्या ज्ञानज्ञाप्यत्वमर्थः । साध्यवत्तेत्यत्र तृतीयायाःप्रकारतानिरूपकत्वमर्थः । हेतुपद साध्यव्याप्यहेतुपरम् । तथा च साध्यव्याप्यहेतुज्ञानज्ञाप्यसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिबोधजनकवाक्यत्व निगमनलक्षणम् । ज्ञानज्ञाप्यत्वं ज्ञानजन्यज्ञानविपयत्वम् । तथा च साध्यव्याप्यहेतुज्ञानं वह्निव्याप्यधूमवान् पर्वत इति ज्ञानं, तज्जन्य ज्ञानं पर्वतो वह्निमानित्यनुमितिरूपं ज्ञानम्, तद्विपयसाध्यप्रकारकबोधजनकवाक्यत्वं तस्मात्तथेति निगमनवाक्ये वह्निव्याप्यधूमज्ञानज्ञाप्यवह्निमान् पर्वत इति बोधजनके वर्तत इति समन्वयः । न्यायान्तर्गतत्वनिवेशान्न तदभिलापकवाक्यादावतिव्याप्तिः । एतादृशबोधानन्तर साध्य-

विशेष्यकः अबाधितत्वासत्प्रतिपक्षितत्वविषयको मानसो बोधो भवतीति ज्ञेयम् ॥

**मू * पक्षे साध्यज्ञानं प्रतिज्ञाप्रयोजनम् । लिङ्गज्ञानं हेतुप्रयोजनम् । व्याप्तिज्ञानमुदाहरणप्रयोजनम् । पक्षधर्मताज्ञानमुपनयप्रयोजनम् । अबाधितत्वं निगमनप्रयोजनम् । अनुमितिकरणमाह * स्वार्थेति ***

व्या * ननु प्रतिज्ञाहेतूदाहरणानां उदाहरणोपनयनिगमनानां वा त्रयाणामङ्गीकारेणैव साध्यवत्ताज्ञानहेतुज्ञानव्याप्तिज्ञानानामुपपत्तिसम्भवे पञ्चानामवयवानामङ्गीकरणे प्रयोजनाभाव इत्याशङ्कायां पञ्चानामपि पृथक्प्रयोजनानि निर्दिशति * पक्षे साध्यज्ञानमित्यादिना * अबाधितत्व अबाधितत्वज्ञान पक्षे साध्योऽबाधित इति ज्ञानम् ॥

**मू * ननु व्याप्तिस्मृतिपक्षधर्मताज्ञानाभ्यमेवानुमितिसम्भवे विशिष्टपरामर्शः किमर्थमङ्गीकर्तव्य इति चेन्न, वह्निव्याप्यवानयमिति शाब्दपरामर्शस्थले परामर्शस्यावश्यकतया लाघवेन सर्वत्र परामर्शस्यैव कारणत्वात् ॥**

व्या * नन्विति * अत्रायं प्राभाकराणामाशयः । अनुमिति प्रति विशिष्टवैशिष्ट्यावगाहि (व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहि) परामर्शस्यवह्निव्याप्यधूमवान् पर्वत इति निर्णयस्य कारणतास्वीकारे परामर्शं प्रति विशेषणज्ञानमुद्रया व्याप्तिज्ञानपक्षधर्मताज्ञानयोः कारणत्वम् अनुमिति प्रति परामर्शस्य च कारणत्वम् स्वीकार्यमितिकार्यकारणभावद्वैविध्येन गौरव स्यात्,

अनुमितिं प्रत्येव व्याप्तिज्ञानपक्षधर्मताज्ञानद्वयस्य कारणतास्वीकारे परामर्शं प्रति मध्ये कार्यकारणभावकल्पनापेक्षाया अभावेन एककार्यकारणभावस्यैव कल्पनीयतया ततो लाघवम्, अत एव तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन, इति न्यायोपपत्तिश्च भवतीति । ननु अनुमितिं प्रति व्याप्तिपक्षधर्मताज्ञानद्वयस्य कारणतास्वीकारेऽपि व्याप्तिज्ञानत्वेन पक्षधर्मताज्ञानत्वेन च पृथक्पृथक्कार्यकारणभावस्य कल्पनीयतया कार्यकारणभावद्वैविध्यप्रयुक्तं गौरवं मन्मत इव भवन्मतेऽपि तदवस्थमेवेति वाच्यम्, अनुमितिं प्रति विशिष्टपरामर्शस्य परामर्शं प्रतिव्याप्तिपक्षधर्मताज्ञानयोश्च पृथक्पृथक्कार्यकारणभावस्य नैयायिकमते कल्पनीयतया कार्यकारण भावत्रैविध्यस्य नियतमङ्गीकर्तव्यतया एतदपेक्षया भवतामेव गौरवस्यापरिहार्यत्वात् इति ॥

वह्निव्याप्यवानिति * (अत्र शाब्दातिरिक्तपरामर्शस्य स्वीकारे तत्र ज्ञानद्वयस्य कथञ्चित्कल्पयितुं शक्यतया शाब्दपरामर्शाङ्गीकरणम्) अत्राय भावः, ज्ञानद्वयस्यानुमितिं प्रति कारणतास्वीकारे शाब्दातिरिक्तपरामर्शस्थले कथञ्चिदुपपत्तावपि शाब्दस्थले शब्दानुसारेणैव बोधस्याङ्गीकर्तव्यतया अत्र ज्ञानद्वयसम्पादकशब्दाभावेन एको विशिष्टवैशिष्ट्यावगाहिपरामर्शो नियतमङ्गीकर्तव्य एव नैयायिकमत इति ॥ * लाघवेनेति * ज्ञानद्वयस्य अनुमितिं प्रति कारणत्वकल्पनापेक्षया विशिष्टवैशिष्ट्यावगाहिज्ञाने कारणताकल्पने लाघवेनेत्यर्थः । ननु परामर्शस्य अनुमितिकारणतावादिमत इव ज्ञानद्वयस्यानुमितिकारणतावादिमतेऽपि व्याप्तिज्ञानविशिष्टपक्षधर्मताज्ञानत्वेनैकस्यैव कार्यकारणभावस्याङ्गीकर्तुं शक्यतया कथमत्र गौरवं तत्र लाघवञ्चेति चेन्न, वैशिष्ट्यस्य सम-

वायघटितसामानाधिकरण्यरूपतया ज्ञानद्वयस्यानुमितिकारणतावादिमते व्याप्तिज्ञानविशिष्टपक्षधर्मताज्ञानत्वेनेव विनिगमनाविरहेण पक्षधर्मताज्ञानविशिष्टव्याप्तिज्ञानत्वेनापि कारणत्वाङ्गीकरणस्य शक्यतथा कार्यकारणभावद्वैविध्यप्रयुक्तगौरवस्यापरिहार्यत्वात् गुरुतरकारणतावच्छेदकधर्मद्वयप्रयुक्तगौरवस्याधिकस्य सम्भवाच्च। इतोऽधिकविचारो मुक्तावलीव्याख्यानावसरे स्फुटीकरिष्यते। ननु वह्निव्याप्यवानिति शाब्दपरामर्शे हेतुतावच्छेदकावच्छिन्नप्रकारताया विरहेण परामर्शलक्षणमव्याप्तमिति चेन्न, हेतुतावच्छेदकावच्छिन्नप्रकारतायाः तादृशव्याप्तित्वावच्छिन्नप्रकारतानिरूपितप्रकारतात्वेन निवेशनीयत्वात्। अस्य तत्राप्यक्षतत्वात्। अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयात्मकपरामर्शस्यैवानुमितिकारणत्वं वाच्यम्, अन्यथातिप्रसङ्गात्। अपिच धूमविषयकपरामर्शाद्रसमलिङ्गकानुमितिवारणाय धूमादिलिङ्गकानुमितित्वावच्छिन्नं प्रति धूमादिपरामर्शानाकारणत्वमङ्गीकार्यम्॥

**मू * लिङ्गं न करणं अतीतादौ व्यभिचारात्। व्यापारवत्कारणं करणमिति मते परामर्शद्वारा व्याप्तिज्ञानं करणम्। तज्जन्यत्वे सति तज्जन्यजनको व्यापारः। अनुमानमुपसंहरति * तस्मादिति ***

व्या * विषयतानिरूपकत्वसम्बन्धेन लिङ्गविशिष्टज्ञानस्यानुमितिकरणत्वे सिद्धे 'विशिष्टे कारणता विशेषणेऽपि सङ्क्रमति' इति न्यायानुसारेण विनिगमनाविरहेण च ज्ञायमानलिङ्गेऽपि अनुमितिकरणत्व वदतामाचार्याणां मत दूषयति * लिङ्ग न करणमिति अतीतादौ व्यभिचारादिति * व्यतिरेकव्यभिचारादि-

त्यर्थः। अयं भावः, ज्ञायमानलिङ्गस्यानुमितिकरणतावादिमते धूमाभावेऽपि धूमसदृशवृक्षादिसन्दर्शनेन जनितात् वह्निव्याप्यधूमवानयमिति परामर्शादनुमितिर्न स्यात्, ज्ञायमानलिङ्गस्य तत्र तदानीमभावात् इत्यनुपपत्तिः स्यात्, अथ वा वह्निव्याप्यातीत धूमवान् वह्निव्याप्यागामिधूमवान्वेति परामर्शाद्वस्तुतोऽनुमितिर्जायते, ज्ञायमानलिङ्गस्यानुमितिकारणत्वे तु तत्र तदानी अतीतानागतधूमादेर भावेन अनुमित्यभावप्रसङ्गापत्तिश्च स्यात्। लिङ्गज्ञानस्य तत्कारणत्वे तु तदानीमतीतानागतादिलिङ्गाभावेऽपि कारणस्य लिङ्गज्ञानस्य सत्त्वेन नानुमित्यनुपपत्तिरिति * व्यापारवत्कारणमिति * व्यापारवत्कारणं करणमिति मते परामर्शद्वारा व्याप्तिज्ञान करणम्। असाधारणकारणं करणमिति मते तु परामर्श एव करणमिति बोध्यम्। अमुमेवाभिप्रायं सूचयति स्म ग्रन्थकारः लिङ्गपरामर्शोऽनुमानमित्यादिना * तज्जन्यत्वे सतीति * तत्पद करणत्वेनाभिमतपरम्। तज्जन्यत्वमात्रोक्तौ फले तज्जन्यजनकत्वमात्रोक्तौ करणे चातिव्याप्तिरित्युभयोपादानम्॥

**मू * लिङ्गं विभजते * लिङ्गमिति * अन्वयव्यतिरेकिणं लक्षयति * अन्वयेनेति * हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः तदभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः। केवलान्वयिनो लक्षणमाह * अन्वयेनेति * केवलान्वयिसाध्यकं लिङ्गं केवलान्वयि। अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् ईश्वरीयप्रमाविषयत्वं सर्वपदाभिधेयत्वञ्च सर्वत्रास्तीति॥**

व्या * अन्वयेन व्यतिरेकेणेति मूले उभयत्रापि तृतीयायाः

ज्ञानज्ञाप्यत्वमर्थः । तच्च ज्ञानजन्यज्ञानविषयत्वम् । अन्वयः अन्वयसहचारग्रहः व्यतिरेको व्यतिरेकसहचारग्रहः तथा च अन्वयसहचारज्ञानज्ञाप्यव्याप्तिमत्त्वे सति व्यतिरेकसहचारज्ञानज्ञाप्य-व्याप्तिमत्त्वम् अन्वयव्यतिरेकिणो लक्षणम् । अमुमेवार्थं सूचयति * हेतुसाध्ययोरिति * अन्वयव्याप्तिग्रहं प्रति अन्वयसहचारग्रहस्य व्यतिरेकव्याप्तिग्रहं प्रति व्यतिरेकसहचारग्रहस्य च कारणत्वेन तादृशज्ञानज्ञाप्यव्याप्तिमत्त्व सम्भवतीति समन्वयः । त्रिविधलिङ्गलक्षणेषु समन्वयदलसार्थक्यादिक तर्कसङ्ग्रहसर्वस्वे निरूपितम् ॥

व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वस्य केवलान्वयिलक्षणत्वे सिध्यसिद्धिभ्यां व्याघातप्रसङ्गाल्लाघवाच्च लक्षणान्तरमनुसरति * केवलान्वयिसाध्यकमिति * सिध्यसिद्धिभ्यां व्याघातप्रकारश्च, अत्र व्यतिरेकव्याप्तिर्वर्तते वा नवा. नाद्यः तत्सत्त्वे तद्रहितत्वकथनानुपपत्तेः । न द्वितीयः, अभावबुद्धिं प्रति प्रतियोगिज्ञानस्य कारणत्वेन तत्प्रतियोगिव्यतिरेकव्याप्तिज्ञानाभावे तद्रहितत्वबुद्धिर्नोदेतीति ॥ केवलान्वयिसाध्यकत्वं च केवलान्वयिसाध्यकानुमितिजनकतावच्छेदकप्रकारताश्रयत्वम् । केवलान्वयिरूपं, यत्साध्यं अभिधेयत्वादि, तत्साध्यकायाऽनुमितिः घटोऽभिधेय इत्याकारकानुमितिः । तज्जनकः अभिधेयत्वव्याप्यप्रमेयत्ववान् घट इति परामर्शः, तज्जनकतावच्छेदकीभूता या प्रकारता तदाश्रयत्वम् अभिधेयत्वसाध्यकप्रमेयत्वहेतौ वर्तत इति समन्वयः । साध्य एव केवलान्वयित्वनिवेशात् हेतोर्व्यतिरेकित्वेऽपि (सर्वत्रावर्तमानत्वेऽपि) न केवलान्वयिहेतुत्वस्य क्षतिरिति सूच्यते । इदं हेतुनिष्ठं केवलान्वयित्वम् ॥

साध्यनिष्ठं केवलान्वयित्वं परिष्करोति * अत्यन्ताभावेति * अभिधेयत्ववस्तुत्ववाच्यत्वप्रमेयत्वादीनां सर्वत्रापि जगति वर्तमानतया तेषामभावस्य कुत्राप्यभावेन अत्यन्ताभावपदेन अभिधेयत्वाद्यभावस्य गृहीतुमशक्यतया घटाद्यभावस्यैव परिग्राह्यतया तदप्रतियोगित्वस्य अभिधेयत्वादौ सत्त्वात् समन्वयः। ननु गगननिष्ठप्रतियोगित्वस्य "अभावविरहात्मत्वं वस्तुनः प्रतियोगिते त्याचार्यवचनानुसारेण गगनाभावाभावस्वरूपत्वेन वक्तव्यतया गगनाभावस्य केवलान्वयित्वेऽपि गगनाभावाभावस्याङ्गीकर्तव्यतया गगनाभावाभावात्मकात्यन्ताभावप्रतियोगित्वस्य गगनाभावे सत्त्वेन गगनाभावे केवलान्वयिन्यव्याप्तिर्दुर्वारेति चेन्न, अत्यन्ताभावे वृत्तिमत्त्वस्य निवेशनीयत्वात्, गगनाभावाभावस्य गगनरूपत्वेन गगनस्य अवृत्तिपदार्थतया च (कालिकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नवृत्तित्वाभाववत्त्वेन) वृत्तिमदभावपदेन घटाद्यभावस्यैव ग्राह्यतया तदप्रतियोगित्वस्य गगनाभावेऽक्षतत्वेन अव्याप्त्यभावात्। न च सर्वमूर्तद्रव्यसंयोगित्वेन गगनस्य वृत्तिमत्त्वमप्यस्तीति वाच्यम्, तत्र संयोगसम्बन्धावच्छिन्नसम्बद्धतायाः सत्त्वेऽपि गगनवदिति प्रतीत्यभावेन वृत्तिमत्त्वस्यानङ्गीकृतत्वात्, न च गगनेऽपि कालिकसम्बन्धावच्छिन्नवृत्तितायाः सत्त्वेन अव्याप्तिस्तदवस्थेति वाच्यम्। अत्र वृत्तिमत्त्वस्य सर्वाधारताप्रयोजकभिन्नसम्बन्धावच्छिन्नवृत्तित्वरूपत्वेन विवक्षणीयत्वात् (सर्वाधारताप्रयोजकसम्बन्धः कालिकसम्बन्धः दिक्कृतविशेषणता च)। न च तथापि कपिसंयोगाभावाभावस्यसमवायसम्बन्धावच्छिन्नवृत्तिमदत्यन्ताभावप्रतियोगित्वेन कपिसंयोगाभावेऽव्याप्तिर्दुर्वारेति वाच्यम्, निरवच्छिन्नवृत्तितावत्त्वस्याप्यभावविशेषणत्वात्। गग-

नस्यावृत्तिपदर्थत्वेन कपिसंयोगस्याव्याप्यवृत्तित्वेन च तदभावयोः सर्वत्र विद्यमानतयापर्यवसन्नं केवलान्वयित्वं निर्विवादम् ॥

अथवा स्वविरोधित्वमत्यन्ताभावे विशेषणं देयम् । स्वपदं वृत्तिमदभावप्रतियोगिपरम् । स्वविरोधित्वञ्च स्वासमानाधिकरणत्वम् । स्वपदग्राह्यकपिसंयोगाभावविरोधित्वस्य अव्याप्यवृत्तिकपिसंयोगाभावाभावेऽभावेन नाव्याप्तिः । स्वाधिकरणावृत्तित्वञ्च स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वेन विशेषणीयम्, अन्यथा कालिकादिसम्बन्धावच्छिन्नवृत्तितामादाय स्वाधिकरणावृत्त्यभावाप्रसिद्ध्याऽसम्भवः । यद्वा, व्याप्यवृत्तित्वमत्यन्ताभावे विशेषणं देयम्, कपिसयोगाभावाभावस्य व्याप्यवृत्तित्वाभावान्नाव्याप्तिः । अथ वा स्वरूपसम्बन्धेन सर्वत्र वर्तमानत्वं साध्यनिष्ठं केवलान्वयित्वं वाच्यत्वाभिधेयत्वादौ तदक्षतमिति समन्वयः । अस्मदादिप्रमाविषयत्वस्य सर्वत्रासम्भवेन घटपटादिपदाभिधेयत्वस्य सर्वत्राभावेन च परिष्करोति * ईश्वरीयेति ॥

**मू * व्यतिरेको नामाभावः । केवलव्यतिरेकिणो लक्षणमाह * व्यतिरेकेति * तदुदाहरति * तथेति * ननु इतरभेदः प्रसिद्धो न वा, आद्ये यत्र प्रसिद्धस्तत्र हेतु सत्त्वेऽन्वयित्वम् असत्त्वेऽसाधारण्यम् । द्वितीये साध्यज्ञानाभावात्कथं तद्विशिष्टानुमितिः, विशेषणज्ञानाभावे विशिष्टज्ञानस्यानुदयात् प्रतियोगिज्ञानाभावाद्व्यतिरेकव्याप्तिज्ञानमपि न स्यात् इति चेन्न, जलादित्रयोदशान्योन्याभावानां त्रयोदशसु प्रत्येकं प्रसिद्धानां मेलनं पृथिव्यां साध्यते । त्रयोदशत्वावच्छिन्नभेदात्मकसाध्यस्य एकाधिकरणवृत्ति-**

**त्वाभावान्नान्वयित्वासाधारण्ये । प्रत्येकाधिकरणप्रसिध्द्या साध्यविशिष्टानुमितिः व्यतिरेकव्याप्तिनिरूपणञ्चेति ॥**

व्या * लक्षणतत्समन्वयादिकं तर्कसङ्ग्रहसर्वस्वे निरूपितम् । इतरभेदस्य प्रसिद्धिपक्षे हेतोस्सत्त्वासत्त्वाभ्यामनुपपत्तिमाह * आद्ये यत्रेति * अयं भावः, तत्र प्रसिद्धसाध्यवति हेतोरपि सत्त्वे हेतु-साध्ययोः सामानाधिकरण्यदर्शनेन तद्धेतोरन्वयव्यतिरेकित्वं स्यात्, हेतोः साध्यवत्यभावपक्षे सपक्षव्यावृत्तत्वस्य सम्भवेन तद्धेतोरसा-धारण्यप्रसङ्ग इति * द्वितीय इति * अत्रायं भावः, साध्यस्याप्र-सिद्धिपक्षे विशेषणरूपसाध्यस्य ज्ञानाभावे तद्विशिष्टबुध्यात्मकानु-मित्यभावप्रसङ्गः, प्रतियोगिनस्साध्यस्य ज्ञानाभावेन तत्प्रतियोगि-ताकाभावरूपसाध्याभावघटितव्यतिरेकव्याप्तिज्ञानाभावप्रसङ्ग इति । पूर्वनिर्दिष्टपक्षद्वयप्रसक्तदोषवारकं पन्थानमनुसरति * जलादि-त्रयोदशेति * जलादीनां ये चतुर्दशान्योन्याभावाः तत्समुदायः साध्यते, पूर्वोक्तपक्षे तादृशभेदसमुदायात्मकसाध्यस्य कुत्राप्यसत्त्वेन नान्वयव्यतिरेकित्वम् असाधारण्यं वा हेतोः सम्भवति, समुदाय-स्यप्रत्येकानतिरिक्ततया प्रत्येकभेदस्य स्थलान्तरेऽपि प्रसिद्धिसम्भ-वेन अपेक्षाबुद्धिविशेषविषयत्वस्वरूपसमुदायत्वस्य प्रसिध्द्याविशे-षणज्ञानप्रतियोगिज्ञानयोरबाधितत्वेन न अनुमितेर्व्यतिरेकव्याप्ति-ज्ञानस्य वाऽनुपपत्तिः । ननु पृथिव्यतिरिक्तानामष्टानां द्रव्याणां षण्णां गुणादीनाञ्च सत्त्वेन चतुर्दशान्योन्याभावेति कथनमुचितम्, न तु जलादित्रयोदशेतीति चेन्न, अभावस्याधिकरणरूपतां अर्थापत्तेः प्रमाणान्तरत्वं व्यतिरेकव्याप्तेरनुमित्यहेतुत्वं च अङ्गी-कुर्वतः प्राभाकरान् तन्मतानुसारेणाक्षेप्तुं त्रयोदशान्योन्याभाव-

कथनस्योचितत्वात् । अथवा, जलमादिर्येषां ते जलादयः, जलादयश्च ते त्रयोदश चेति विग्रहकरणे चतुर्दशान्योन्याभावानां सिद्धत्वेन न काचिदप्यनुपपत्तिः ॥

**मू * पक्षलक्षणमाह * संदिग्धेति * ननु श्रवणानन्तरभाविमननस्थलेऽव्याप्तिः, तत्र वेदवाक्यैरात्मनो निश्चितत्वेन संदेहाभावात् । किञ्च प्रत्यक्षेऽपि वह्नौ यत्रेच्छयाऽनुमितिः तत्राव्याप्तिः इति चेन्न, उक्तपक्षताश्रयत्वस्य लक्षणत्वात् ॥**

व्या ॥ पक्षसपक्षविपक्षाणां लक्षणतत्समन्वयपरिष्कारादिक तर्कसंग्रहसर्वस्वे निर्दिष्ट तत्र द्रष्टव्यम् * नन्विति * अत्र पूर्वपक्षिणोऽयभावः, "आत्मावारे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति, श्रुत्या श्रुतिजन्यात्मनिश्चयरूपश्रवणानन्तरमपि अनुमित्यात्मकमननस्य (युक्तिभिरनुचिन्तन मननम्) उत्पत्तेर्बोध्यमानतया पूर्वं साध्यसंशयाभावेऽप्यनुमित्युत्पत्त्या संदिग्धेतिपक्षलक्षणमव्याप्तम्, किञ्च वह्निप्रत्यक्षसत्त्वेऽपि परामर्शकाले पर्वते वह्नयनुमितिर्जायतामितीच्छयापि वह्नयनुमितेर्निर्विवादमङ्गीकृततया तत्रापि साध्यसंशयाभावेन अव्याप्तं तल्लक्षणमिति । प्रथमं शाब्दस्थले तदनु प्रत्यक्षस्थले चाव्याप्तिरभिहितेति भेदो बोध्यः * उक्तपक्षतेति * शाब्दस्थलेऽपि सिषाधयिषाऽङ्गीक्रियत इत्येव सिद्धान्तिनोऽभिप्रायः । अत्र तादृशसिद्धेर्विषयतासम्बन्धेनाभावाश्रयत्वं पक्षलक्षणं ज्ञेयम्, अन्यथा सिद्धिदशायामपि पक्षे समवायेन सिद्धेरभावस्य सत्त्वेन अनुमित्यापत्तिः । तदुद्देशस्य पक्षताप्राप्तिश्च निर्विवादेति ग्राह्यम् ॥

मू * सपक्षलक्षणमाह * निश्चितेति * विपक्षलक्षणमाह * निश्चितेति * एवं सद्धेतुं निरूप्यासद्धेतुं निरूपयितुं विभजते * सव्यभिचारेति * अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्व हेत्वाभासत्वम् ॥

व्या ॥ ("सादृश्यं तदभावश्च स्मारके परिकीर्तिते, इति न्यायानुसारेण पूर्वं सद्धेतुषु निरूपितेषु सत्सु सद्धेतुत्वरूपसादृश्यप्रतियोगिकाभावस्य असद्धेतुस्मारकस्य सत्त्वेनासद्धेतुनिरूपणं समञ्जसमिति भावः) । सद्धेतुनिरूपितसादृश्यस्य क्वचिद्व्याप्तिमत्त्वस्य क्वचिच्च साध्यसमानाधिकरणत्वादेः क्वचिच्च पक्षधर्मत्वादेः असद्धेतुषु विद्यमानतया सद्धेतुनिरूपणानन्तरमसद्धेतुनिरूपणम् । सामान्यलक्षणज्ञानमन्तरा विशेषजिज्ञासाऽनुदयेन विभागस्यानुपपन्नतया हेत्वाभाससामान्यलक्षणानिरूपणेन तद्विभागोऽनुपपन्न इत्याशंकां परिजिहीर्षुरन्नम्भट्टः दोषविशिष्टत्व दुष्टानां सुगमं लक्षणमिति विवक्षुः

---

हेत्वाभासलक्षणे । ननु हृदो वह्निमान्धूमादित्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवद्धृदेऽतिव्याप्तिः, तथाहि प्रकृतानुमितित्वव्यापकीभूता प्रतिबध्यता संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरूपितहृदत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता, तन्निरूपिता या प्रतिबन्धकता जलवान् वह्न्यभाववान् जलवान् हृद इति निश्चयनिष्ठा जलव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितजलावच्छिन्नविशेष्यताशालिनिश्चयविशिष्टजलत्वावच्छिन्नप्रकारतानिरूपितहृदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्धकता, सा वह्न्यभाववज्जलवद्वृत्तिजलवद्धृदत्वावच्छिन्नविषयकनिश्चयत्वव्यापिका भवतीति तद्रूपावच्छिन्नत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्धृदे विद्यमानत्वात् इति चेन्न, विशिष्टद्वयाघटितत्वस्य यद्रू-

तल्लक्षणघटकदोषस्य लक्षणं प्रथमनिरूपणीयं निरूपयति * अनु-
मितिप्रतिबन्धकेति * हेत्वाभासपदजन्यबोधप्रकारस्तर्कसङ्ग्रहस-
र्वस्वे निरूपितः। ह्रदो वह्निमान्धूमादित्यत्र वह्न्यभाववद्ध्रदरू-
पबाधे समन्वयप्रकार इत्थम्, अनुमितिः ह्रदो वह्निमानित्यनु-
मितिः, तत्प्रतिबन्धकं यद्यथार्थं ज्ञान ह्रदो वह्न्यभाववानिति-
रूपं यथार्थज्ञानम्, तद्विषयत्वं वह्न्यभाववद्ध्रदे वर्तत इति। अत्रा-
नुमितिपद पक्षस्साध्यवान् साध्यव्याप्यहेतुमानिति समूहालम्ब-
नानुमितिपरं साध्यव्याप्यहेतुमान्पक्षः साध्यवानिति साध्यव्या-
प्यहेतुधर्मितावच्छेदककानुमितिपरं वा। साध्यप्रकारकत्वानिवेशे
बाधसत्प्रतिपक्षविरोधाश्रयासिद्धिषु साध्यव्याप्यहेतुप्रकारकत्वानु-
पादाने साधारण्यासाधारण्यानुपसंहारित्वस्वरूपासिद्धिव्याप्यत्वा-
सिद्धिषु च अव्याप्तिः, बाधादीनां पक्षः साध्यवानित्यंशे साधा-
रण्यादीनां साध्यव्याप्यहेतुमान् पक्ष इत्यंशे च प्रतिबन्धकत्वं
ग्राह्यम्। अतः उभयनिवेशः। यथार्थपदाभावे पर्वतो
वह्निमानित्यनुमितिप्रतिबन्धकभ्रमविषयभूते वह्न्यभावे ह्रदे च
अतिव्याप्त्या तामादाय पर्वतो वह्निमान्धूमादित्यत्र धूमहेतोर्दुष्ट-
त्वापत्तिः। अत्र यथार्थपदं भ्रमभिन्नत्वार्थकं वक्तव्यम्, अन्यथा
पूर्वनिर्दिष्टे एकदेशे पर्वतत्वाद्यंशे प्रमारूपभ्रममादाय अतिव्याप्ति-
तादवस्थ्यात् ॥

---

पावच्छिन्नविषयकनिश्चये निवेशनीयत्वात्, विशिष्टद्वयाघटितत्वं च
यद्रूपावच्छिन्नविषयताशालिनिश्चयविशिष्टतत्कालीनयद्रूपावच्छिन्नविषय-
ताशालिनिश्चयत्वमनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतान-
तिरिक्तवृत्तितद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयताशून्यत्वरू-
पम्, तथा च वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताशालिनिश्चयविशिष्ट-

नन्वेवमपि ह्रदो वह्निमानित्यत्र वह्न्यभाववान् ह्रद इति यथार्थज्ञानविषये एकदेशे वह्न्यभावे ह्रदे च अतिव्याप्तिर्दुर्वारेति चेन्न, यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वस्य दोषलक्षणत्वात्, यद्रूपपदं दोषतावच्छेदकपरम्, वह्न्यभावत्वह्रदत्वाद्येकदेशवृत्तिधर्मावच्छिन्नविषयकेषु वह्न्यभाव: ह्रद: इत्यादिनिश्चयेषु तादृशप्रतिबन्धकताया अभावान्नातिव्याप्ति: । नचैवमपि ह्रदोवह्निमानित्यत्र घटवद्भूतलादावतिव्याप्ति:, ह्रदो वह्निमान् वह्निव्याप्यधूमवान् घटाभाववच्च भूतलमिति समूहालम्बनात्मकानुमितिनिरूपितप्रतिबन्धकताया: घटवद्भूतलत्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापिकाया: सत्त्वादिति वाच्यम् । प्रतिबध्यतायामपि प्रकृतानुमितित्वव्यापकताया निवेशनीयत्वात्, ह्रदो वह्निमानित्यनुमितित्वव्यापकत्वं न घटवद्भूतलज्ञानप्रतिबध्यतायामिति नातिव्याप्ति: । नन्वेवमपि ह्रदोवह्निमानित्यत्र वह्न्यभाववद्ध्रदेऽव्याप्ति:, यद्रूपावच्छिन्नविषयताशालिनिश्चयपदेन आहार्यस्य (बाधनिश्चयकालीनेच्छाजन्यस्य)

---

जलवद्ध्रदत्वावच्छिन्नविषयताशालिनिश्चयत्व प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति भवति तद्रूपावच्छिन्नविषयताविशिष्टा या तद्रूपावच्छिन्ना विषयता वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताविशिष्टा जलवद्ध्रदत्वावच्छिन्ना विषयता तच्छून्यत्वस्य तत्राभावेनातिव्याप्तेरभावात् (निश्चयवैशिष्ट्यञ्च निश्चये स्वसामानाधिकरण्यस्वसमानकालीनत्वोभयसम्बन्धेन बोध्यम् । विषयतायां विषयतावैशिष्ट्यमपि स्वरूपघटितसामानाधिकरण्यसम्बन्धेन बोध्यम्) नचैवमपि प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षेऽव्याप्ति:, तत्र जलव्यापको वह्न्यभाव: जलवान् ह्रद इति निश्चयविशिष्टनिश्चयस्यैवानुमितिप्रतिबन्धकत्वेन यद्रूपपदग्राह्यजलव्या-

अप्रामाण्यज्ञानास्कन्दितस्य (इदं ज्ञानमप्रमेत्यप्रामाण्यज्ञानसमानाधिकरणस्य) संशयरूपस्यच (ह्रदो वह्न्यभाववान्नवेति संशयरूपस्य) ज्ञानस्य वह्न्यभाववद्ध्रदविषयकज्ञानपदेन ग्रहीतुं शक्यतया तत्र तादृशानुमितिप्रतिबन्धकताया अभावादिति चेन्न, अनाहार्यत्वस्य (स्वजन्यत्वस्वसामानाधिकरण्योभयसम्बन्धेन इच्छाविशिष्टान्यत्वरूपस्य) अप्रामाण्यज्ञानानास्कन्दितत्वस्य (स्वविषयत्वस्वसामानाधिकरण्योभयसम्बन्धेन ज्ञानविशिष्टान्यत्वरूपस्य) निश्चयत्वस्य (संशयान्यत्वरूपस्य) यद्रूपावच्छिन्नविषयताशालिज्ञानपदेन विवक्षणीयत्वात्, तथाच नोक्तदोषप्रसक्तिः। नच यथार्थपदेनैव संशयवारणात् निश्चयत्वदलमनर्थकमिति वाच्यम्, यथार्थपदसत्त्वे निश्चयत्वाप्रवेशेऽपि क्षत्यभावात्। अथवा, यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वनिवेशेनैव भ्रमविषयवह्न्यभावादावतिव्याप्तिवारणसम्भवात् यथार्थपदवैयर्थ्यप्रसङ्गेन यथार्थपदस्य अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयात्मकज्ञानपरत्वमेवाङ्गीकार्यम्॥

---

पकवह्न्यभावत्वावच्छिन्नविषयताविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयताया यद्रूपावच्छिन्नविषयकनिश्चये सत्त्वादिति वाच्यम्, सत्प्रतिपक्षघटकदलद्वयविषयताभिन्नत्वस्य तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयतायां विशेषणीयत्वात् तादृशविषयताभिन्नत्वस्य तादृशविषयतायामभावेन दोषाभावात्॥

नचैवमपि ह्रदो वह्निमानित्यत्र प्रमेयत्वविशिष्टबाधेऽतिव्याप्तिः, तादृशप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपिता प्रतिबन्धकता वह्न्यभाववद्ध्रदविषयकनिश्चयत्वावच्छिन्ना प्रतिबन्धकता, सा प्रमेयत्वविशिष्टबाधविषयकनिश्चयत्वव्यापिका भवति, 'अधिकस्य प्रविष्टत्वेऽपि न तद्धानिः' इति न्यायेन तत्रापि निश्चये तत्प्रतिबन्धकताया अव्या-

तथाच प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनी प्रकृतसाध्यव्याप्यहेतुतावच्छेदकावच्छिन्नप्रकारताशालिनी याऽनुमितिः (साध्यव्याप्यहेतुतावच्छेदकावच्छिन्नावच्छेदकताकपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनी याऽनुमितिः) तादृशानुमितित्वव्यापकीभूता या प्रतिबध्यता तन्निरूपितप्रतिबन्धकता यद्रूपावच्छिन्नविषयताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दितानिश्चयत्वव्यापिका तद्रूपावच्छिन्नत्व हेत्वाभाससामान्यलक्षण बोध्यम् ॥ केचित्तु, इदं लक्षणं दुष्टानामेवेति वदन्ति, तत्समन्वयप्रकारस्तु. अस्मिन् पक्षे अनुमितिप्रतिबन्धकस्य

---

हतत्वात्, इति वाच्यम्। तस्मिन्नेव निश्चये विशिष्टान्तरविषयताशून्यत्वस्यापि निवेशनीयत्वात्, विशिष्टान्तरविषयताशून्यत्वं च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकः प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकश्च यो धर्मः तद्धर्मावच्छिन्नविषयताशून्यत्वरूपम् तथा च स्वपदेन मेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वस्य परिग्रहणे स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकः प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकश्च धर्मः वह्न्यभाववद्ध्रदत्वरूपो धर्मः तद्धर्मावच्छिन्नविषयताशून्यत्वस्य तत्राभावान्नातिव्याप्तिः ॥

न चैवमपि ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ध्रदरूपबाधेऽव्याप्तिः, तथाहि, जातित्वेन ह्रदत्वावगाहिनि जातिमान्वह्न्यभाववानिति निश्चयेऽपि जातित्वस्याधिकस्य प्रविष्टत्वेऽपि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताया अव्याहतत्वेन एतन्निश्चयान्तर्भावेण यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वव्यभिचारादिति वाच्यम्, यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वं यद्रूपावच्छिन्नविषयताशालिनिश्चये विशेषणं देयम्, तन्निवेशे तादृशविषयत्वाव्यापकीभूता याः जातित्वावच्छिन्नविषयताया

यथार्थज्ञानमिति विग्रहः कार्यः, षष्ठ्याः प्रकारत्वमर्थः, तथाच अनुमितिप्रतिबन्धकप्रकारकयथार्थज्ञानविशेष्यत्वं दुष्टलक्षणं पर्यवसितं भवति । अस्मिन् पक्षे ज्ञायमानदोषस्यैव प्रतिबन्धकत्वमभ्युपेयते, नतु दोषज्ञानस्य तत् । तथाच अनुमितिप्रतिबन्धकाः बाधव्यभिचारादयः, तत्प्रकारकं यद्यथार्थं ज्ञानं स्वज्ञानविषयप्रकृतहेतुतावच्छेदकधर्मवत्त्वसम्बन्धेन बाधव्यभिचारादिविशिष्टा इमे हेतव इति यथार्थज्ञानं, तद्विशेष्यत्वं दुष्टहेतुषु वर्तत इति समन्वयः । अनुमितिपदस्य प्रकृतानुमितिपरतया सद्धेतौ प्रकृ-

---

ज्ञातमान्वह्न्यभावादिति निश्चये सत्त्वेन तच्छून्यत्वस्य तत्राभावात् ॥

अत्रानुमितिप्रतिबन्धकत्वं साक्षादनुमितिं प्रति प्रतिबन्धकत्वरूपं निवेशनीयम्, अन्यथा व्यभिचारनिश्चयद्वारेण परम्परया परामर्शप्रतिबन्धके उपाधावप्यतिव्याप्तिः । नचैवमपि सिद्धिविषयेऽतिव्याप्तिर्दुर्वारा, सिद्धेरनुमितिं प्रति साक्षादेव प्रतिबन्धकत्वादिति वाच्यम्, सिषाधयिषासहितसिद्ध्यन्तर्भावेण तत्प्रतिबन्धकतायां यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वव्यभिचारात्, न च कामिनीविषयकनिश्चयेऽपि तत्प्रतिबन्धकताया अक्षतत्वेन कामिन्यामतिव्याप्तिरिति वाच्यम्, कामिनीज्ञानान्यज्ञानत्वावच्छिन्नं प्रति कामिनीजिज्ञासाया एव प्रतिबन्धकत्वाङ्गीकारात् कुत्रचित्प्राथमिकनिश्चयेऽपि ज्ञानान्तरप्रतिबन्धकतायामनुभूयमानायामपि सर्वत्र तन्निश्चयेषु तदनुभवाभावात्, न च तथापि निर्वह्निः पर्वतो वह्निमानित्यत्र वह्निमत्पर्वतरूपाश्रयासिद्धौ निर्वह्निर्वह्निमानित्यत्र वह्न्यभाववद्वह्न्यभाववद्रूपबाधे च अव्याप्तिः निर्वह्निर्वह्निमानिति ज्ञानस्य नियताहार्यतया 'परोक्षमनाहार्यमसन्दिग्धम्' इति नियमेन तत्रानुमितित्वाभावेन अनुमितिप्रतिबन्धकताघटितस्य हेत्वाभासलक्षणस्य अव्याप्तिरिति वाच्यम्, यत्पक्षकयत्साध्यकयद्धेतुकस्थले यावन्तो दोषाः सम्भवन्ति, तावदन्यान्यत्वं हेत्वाभासानां निष्कृष्टं लक्षणम्, अतो न कोऽपि दोषः ॥

तानुमितिप्रतिबन्धकज्ञायमानदोषाप्रसिद्ध्या नातिव्याप्तिः । अत्र यथार्थपदाभावे पूर्वोक्तसम्बन्धेन बाधादिप्रकारकभ्रमविशेष्यत्वस्य सद्धेतावपि सत्त्वेनातिव्याप्तिः ॥

**मू * सव्यभिचारं विभजते * स त्रिविध इति * साधारणं लक्षयति * तत्रेति * उदाहरति * यथेति ***

व्या ॥ साधारणाद्यन्यतमत्वं सव्यभिचारसामान्यलक्षणम् * तत्रेति * साध्यनिष्ठप्रतियोगिताकाभावाधिकरणानिरूपितवृत्तित्वरूपसाधारण्यघटकसाध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नत्वनिवेशप्रयोजनं तद्घटकवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशप्रयोजनञ्च तर्कसङ्ग्रहसर्वस्वे निरूपितम् । नन्वेवमपि वह्निमान्धूमादित्यत्र हेतावतिव्याप्तिः, वह्न्यभावात्मकसाध्याभावनिष्ठकालिकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावत्पर्वतमहानसादिनिरूपितवृत्तितायास्तत्र सत्त्वात् इति चेन्न, साध्याभावनिष्ठाधेयतायां स्वरूपसम्बन्धावच्छिन्नत्वस्य

---

व्यभिचारिलक्षणं । सधर्मितावच्छेदकहेतुमत्तानिश्चयकालीनयद्रूपावच्छिन्नविषयताशालिनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यप्रतिबन्धकं तद्रूपावच्छिन्नत्वं व्यभिचारसामान्यलक्षणम्, अत्रानुमितिपदं पक्षः साध्यवान् साध्यव्याप्यो हेतुरित्यनुमितिपरम् । पर्वतो धूमवान्वह्नेरित्यत्र धूमाभाववद्वृत्तिवह्निरूपसाधारण्ये समन्वयः । तथाहि, अत्र सधर्मितावच्छेदकहेतुमत्तानिश्चयः वह्निमान्पर्वतः घट इत्यादिनिश्चयः तत्कालीनो यो यद्रूपावच्छिन्नविषयताशालिनिश्चयः धूमाभाववृत्तिर्वह्निरिति निश्चयः, तत्सामान्यं व्याप्त्यंशे तादृशानुमितिसामान्यप्रतिबन्धकं भवतीति तद्रूपावच्छिन्नत्वमादाय समन्वयः । नवीनमते ह्रदो वह्निमान् जलादित्यत्र वह्निव्यापकीभू-

निवेशनीयत्वात्, पर्वतादेः स्वरूपेण वह्न्यभावानधिकरणत्वेन नातिव्याप्तिः। नचैवमपि घटत्वाभाववान् द्रव्यत्वादित्यत्राव्याप्तिः, घटत्वात्मकसाध्याभावस्य स्वरूपेणाधिकरणाप्रसिद्धेरिति वाच्यम्, स्वरूपसमवायान्यतरसम्बन्धेन साध्याभावाधिकरणत्वस्य विवक्षितत्वात्, घटत्वादेः समवायेनाधिकरणस्य प्रसिद्धत्वाद्घटादेरिति नाव्याप्तिः। नचैवमपि कपिसंयोगी एतद्वृक्षत्वादित्यत्र हेतौ निरुक्तान्यतरान्तर्गतस्वरूपसम्बन्धेन अव्याप्यवृत्तिकपिसंयोगाभावाधिकरणवृक्षनिरूपितवृत्तितायाः सत्त्वादतिव्याप्तिः, आत्मत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववानात्मत्वादित्यत्र आत्मत्वप्रकारकप्रमाविशेष्यत्वरूपस्य साध्याभावस्य निरुक्तान्यतरान्तर्गतस्वरूपेणाधिकरणे आत्मनि हेतोर्वृत्तेरतिव्याप्तिरिति वाच्यम्, साध्यवत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वस्य साध्याभावनिष्ठाधेयतायां निवेशनीयत्वात् ॥

साध्यवत्ताग्रहविरोधिताघटकत्वञ्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकत्वम्। वह्नि-

---

ताभावप्रतियोगिजलस्यैवासाधारण्यरूपतया तत्र समन्वयः क्रियते, तथा हि अत्र जलवान् ह्रद इति निश्चयविशिष्टस्य वह्निव्यापकीभूताभावप्रतियोगि जलमिति निश्चयस्यैव साक्षादनुमिति प्रति साध्यवत्पक्षांशे प्रतिबन्धकत्वादिति। व्यतिरेकव्याप्तिज्ञाने अत्यन्ताभावाप्रतियोगिसाध्यरूपानुपसंहारित्वरूपनिश्चयसामान्यस्य प्रतिबन्धकत्वेन अनुपसंहारित्वेऽपि समन्वयो ग्राह्यः। एवं प्राचीनमतेऽपि साध्यासमानाधिकरणहेतुरूपासाधारण्येऽपि सिद्धान्तपूर्वपक्षीयव्याप्तिघटकसामानाधिकरण्यांशे प्रतिबन्धकज्ञानविषये समन्वयः ॥

मान्धूमादिति भावसाध्यकस्थले स्वरूपसम्बन्धः घटत्वाभावा-द्यभावसाध्यकस्थले यथायथं समवायादिः आत्मत्वप्रकारकप्रमावि-शेष्यत्वाभावसाध्यकस्थले कालिकसम्बन्धः कपिसंयोग्येतद्वृक्षत्वा-दित्यत्र निरवच्छिन्नस्वरूपसम्बन्धश्च तादृशो भवतीति न दोषः। ("जन्यानां कालोपाधित्वम्" इति, न्यायानुसारेण कालिकेनात्म-त्वप्रकारकप्रमाविशेष्यत्वं घटादौ वर्तते, तेन सम्बन्धेन तन्नास्ती-त्यभावः "नित्येषु कालिकायोगः" इति, न्यायानुसारेण आत्मा-दिनित्यपदार्थे वर्तते, इति तादृशाभावसाध्यकात्मत्वहेतुस्सद्धेतुर्भ-वति। तत्सम्बन्धेन तद्वत्ताबुद्धिं प्रति तत्सम्बन्धेन तदभाववत्ता-निश्चयस्य यथायथं स्वरूपादिसम्बन्धावच्छिन्नप्रकारताशालिनि-श्चयत्वेन प्रतिबन्धकत्वम्। एवं तत्सम्बन्धावच्छिन्नतद्धर्मावच्छि-न्नप्रतियोगिताकाभावनिष्ठा या यथायथ स्वरूपादिसम्बन्धाव-च्छिन्नप्रकारता तच्छालिबुद्धिं प्रति तत्सम्बन्धावच्छिन्नतद्धर्माव-च्छिन्नप्रकारताशालिनिश्चयस्य एवं तत्सम्बन्धावच्छिन्नतद्धर्माव-च्छिन्नप्रतियोगिताकाभावनिष्ठा या यथायथं स्वरूपादिसम्बन्धाव-च्छिन्ना प्रतियोगिता तन्निरूपकाभाववत्तानिश्चयस्य च प्रतिबन्ध-कत्वमास्थेयम्। अव्याप्यवृत्तिभावाभावस्थले तत्सम्बन्धावच्छिन्न-भावरूपतदव्याप्यवृत्तिनिष्ठप्रकारताशालिबुद्धिं प्रति तत्सम्बन्धाव-च्छिन्नतन्निष्ठप्रतियोगिताकाभावनिष्ठनिरवच्छिन्नस्वरूपसम्बन्धाव-च्छिन्नप्रकारताशालिनिश्चयस्य प्रतिबन्धकत्वम् तत्सम्बन्धाव-च्छिन्नतन्निष्ठप्रतियोगिताकाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रकार-ताशालिबुद्धिं प्रति तत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभाव-निष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावनिष्ठनिरवच्छिन्नतत्स-म्बन्धावच्छिन्नप्रकारताशालिनिश्चयस्य प्रतिबन्धकत्वं ग्राह्यम्, एवं

ग्रहणे साध्यवत्ताग्रहविरोधिताघटकत्वरूपतादृशप्रकारतावच्छेदकत्वविशिष्टसम्बन्धो विज्ञायेत ॥ )

यदिचं कपिसंयोगवत्ताबुद्धि प्रति कपिसंयोगाभाववत्तानिश्चयस्य (निरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वानङ्गीकारपक्षे) अव्याप्यवृत्तित्वज्ञानानास्कन्दितकपिसंयोगाभावत्वावच्छिन्नशुद्धस्वरूपसम्बन्धावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वाङ्गीकारपक्षे शुद्धस्वरूपसम्बन्धस्यैव तादृशत्वेन कपिसंयोग्येतद्वृक्षत्वादित्यत्राव्याप्तिरपरिहार्येत्युच्येत तदा स्वप्रतियोग्यनधिकरणत्वं साध्याभावाधिकरणे विशेषणं देयम्, वृक्षस्य साध्याभावाधिकरणस्य स्वप्रतियोगिकपिसंयोगाधिकरणत्वेन न दोषः । स्वप्रतियोग्यनधिकरणत्वञ्च स्वप्रतियोगितावच्छेदकधर्मसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणताविभिन्नत्वरूपम्, अत्र स्वप्रतियोगितावच्छेदकधर्मावच्छिन्नत्वानिवेशे स्वप्रतियोगिनिष्ठाधेयतापदेन सत्तात्वावच्छिन्नाधेयतायाः परिग्रहणे तादृशाधेयतानिरूपिताधिकरणतावद्गुणभिन्नसामान्यादिनिरूपितवृत्तिताया जातावभावेन गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्राव्याप्तिः, तन्निवेशे स्वप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मः तादृशवैशिष्ट्यसत्तात्वरूपधर्मद्वयं भवतीति नाव्याप्तिः ॥ तत्र स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे कालिकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावदयोगोलकभिन्न (धूमासमानकालीनघट) प्रलयादिनिरूपितवृत्तिताया अभावाद्धूमवान्वह्नेरित्यत्राव्याप्तिः ("विभिन्नकालीनयोर्विषयत्वान्यसम्बन्धेनाधाराधेयभावविरह इति, नियमानुसारेण धूमासमानकालीनघटादेस्तदनधिकरणत्वं ग्राह्यम्)

अत्राधेयताया स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशनमावश्यकम्, अत्राधेयतायामेव साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशनं न कार्यम्, प्रयोजनाभावात्। अस्मिन् लक्षणे द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्र "गुणे गुणकर्मान्यत्वविशिष्टसत्ता" इति प्रतीत्या साध्याभावाधिकरणगुणादिनिरूपितवृत्तिताया हेतौ सत्त्वादतिव्याप्तिवारणाय साध्याभाववद्वृत्तितावच्छेदक यद्धेतुतावच्छेदक तद्वत्त्वं लक्षणं वक्तव्यम् ॥

एवं परिष्कृतस्य साधारण्यस्याभाव एव साध्याभाववदवृत्तित्वरूपा पूर्वपक्षीयव्याप्तिरित्युच्यते. अस्यां पूर्वपक्षीयव्याप्तौ दलसार्थक्यादिक साधारणलक्षण इव बोध्यम्। परन्तु साधारणलक्षणे यद्यत्स्थलेष्वतिव्याप्त्यव्याप्त्यादिक यद्यद्दलनिवेशप्रयोजनत्वेनाभिहितं पूर्वपक्षीयव्याप्तौ तद्व्यतिरेकेण तत्तत्स्थलेषु अतिव्याप्तिस्थाने अव्याप्तिः अव्याप्तिस्थानेऽतिव्याप्तिश्च तत्तद्दलनिवेशप्रयोजनत्वेन योजनीयाः। तथा च साध्याभाववद्वृत्तित्वाभावः पूर्वपक्षीयव्याप्तिः, साध्याभावाधिकरणह्रदादिनिरूपितवृत्तित्वाभावस्य धूमे सत्त्वात् वह्निमान्धूमादित्यत्र समन्वयः। धूमाभाववदयोगोलकनिरूपितवृत्तित्वस्यैव वह्निरूपहेतौ सत्त्वात् धूमवान्वह्नेरित्यत्र नातिव्याप्तिः। यदि धूमाभावाधिकरणजलादिवृत्तित्वाभावं धूमाभावाधिकरणवृत्तित्वजलत्वोभयाभावञ्चादाय धूमवान्वह्नेरित्यत्रातिव्याप्तिरुपपाद्येत तदा साध्याभाववद्वृत्तित्वत्वातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावो व्याप्तिरिति निष्कर्षः कार्यः। इमामेव

रीति मनसि निधाय न्यायबोधिन्यां गोवर्धनसुधिया साध्यताव-च्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकप्रति-योगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयाधि-करण्यावच्छिन्नाभाववन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्ति-त्वत्वावच्छिन्नप्रातियोगिताकाभावः पूर्वपक्षीयव्याप्तिरिति प्रतिपादि-तम्, एतदर्थस्तु, स्वप्रतियोग्यनधिकरण यत्साध्याभावाधिकरणं तन्निरूपितवृत्तित्वाभाव इति। नन्वस्या व्याप्तेः द्रव्यं विशिष्टसत्त्वा-दित्यत्र साध्याभाववद्गुणादिनिरूपितसत्तात्वावच्छिन्नवृत्तिनामादा-याव्याप्तिरिति चेन्न, तादृशवृत्तितानवच्छेदक यद्धेतुतावच्छेदक तद्वत्त्वस्यापि विवक्षणीयत्वात् "गुणे गुणकर्मान्यत्वविशिष्टसत्ता" इति, प्रतीतेः सत्त्वेऽपि गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति प्रतीत्यभावेन तादृशवृत्तितानवच्छेदकत्वं हेतुतावच्छेदकेऽक्षतमिति नातिव्याप्तिः। (गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतौ गुणनि-रूपितसत्तात्वावच्छिन्नवृत्तिता भासते, गुणकर्मान्यत्वविशिष्टसत्ता-वान् गुण इति प्रतीतौ तु गुणकर्मान्यत्ववैशिष्ट्यसत्तात्वरूपधर्मद्व-यवच्छिन्नाधेयतानिरूपिताधिकरणतायाः गुणकर्मान्यत्वाधिकरण-त्वसत्ताधिकरणत्वरूपाधिकरणताद्वयस्य वा भासमानतया न कापि क्षतिः) इमां पूर्वपक्षीयव्याप्तिमधिकृत्य मदीयपञ्चलक्षणीसर्वस्वे महान् विचारः कृतः तत्र द्रष्टव्यः॥

अत्र प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यता-वच्छेदकावच्छिन्नप्रकारताशालिसाध्यव्याप्यहेतुतावच्छेदकावच्छिन्न-प्रकारताशाल्यनुमितित्वव्यापकीभूता प्रतिबध्यता (व्यभिचारानिर्ण-यस्य परामर्शघटकव्याप्तिज्ञानांशे प्रतिबन्धकत्वं प्रसिद्धम्) वह्न्य-भाववदवृत्तित्वत्वावच्छिन्नप्रकारतानिरूपितप्रमेयत्वत्वावच्छिन्नविशे-

ष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता, तन्निरूपिता प्रतिबन्धकता वह्न्यभाववद्वृत्तित्वत्वावच्छिन्नप्रकारतानिरूपितप्रमेयत्वत्वावच्छिन्न - विशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्धकता, तदनतिरिक्त-वृत्तिविषयतानिरूपकतावच्छेदकवह्न्यभाववद्वृत्तिप्रमेयत्वत्वरूपधर्मावच्छिन्नत्व वह्न्यभाववद्वृत्तिप्रमेयत्वरूपे (व्यभिचारे) साधारण्ये विद्यत इति हेत्वाभासलक्षणसमन्वयः (साधारण्यनिश्चयः व्याप्तिज्ञाने तदभाववत्तानिश्चयविधया प्रतिबन्धक इति ज्ञेयम् )

**मू * असाधारणं लक्षयति * सर्वेति ***

व्या ॥ अत्र लक्षणसमन्वयदलसार्थक्यादिविचारः तत्र मतभेदेन दोषविचारश्च मदीयतर्कसङ्ग्रहसर्वस्वे निरूपितः । साध्यासमानाधिकरणहेतुर्विरोधः साध्यव्यापकीभूताभावप्रतियोगिहेतुरसाधारण्यमिति नवीनाभिप्रायः । नन्वेवमेतल्लक्षणस्य विरुद्धे विरुद्धलक्षणस्यासाधारणे साधारणलक्षणस्य (असाधारणानुपसंहारिसत्प्रतिपक्षितेषु) विरुद्धस्वरूपासिद्धव्याप्यत्वासिद्धबाधितेषु बाधितलक्षणस्य असाधारणविरुद्धसत्प्रतिपक्षितेषु च एतद्ग्रन्थनिर्दिष्टेषु अतिव्याप्तिः, एवमन्येषामपि हेत्वाभासप्रभेदलक्षणानां हेत्वाभासान्तरेऽतिव्याप्तिः सम्भवतीतिचेन्न, "उपधेयसङ्करेऽप्युपाधेरसङ्करः" इति, न्यायानुसारेण उपाधिभूतानां दोषाणामसाङ्कर्ये स्थिरीकृते सति उपधेयभूतानां दुष्टानां साङ्कर्येऽपि (ऐक्येऽपि) बाधकाभावेनातिप्रसङ्गाभावात् । अत एव वायुर्गन्धवान् स्नेहादितिस्थले पञ्चानामपि हेत्वाभासानां उदाहरणत्वेन बहुभिरङ्गीकृतम्, यतश्चात्र गन्धाभाववद्वृत्तिस्नेहरूपसाधारण्यं गन्धासमानाधिकरणस्नेहरूपासाधारण्यं गन्धव्यापकीभूताभावप्रतियोगिस्नेहरूपविरोधः गन्धाभावव्याप्यवद्वायुरूपसत्प्रतिपक्षः स्नेहाभाववद्वा-

युरूपस्वरूपासिद्धिः गन्धाभाववदवृत्तित्वाभाववत्स्नेहरूपव्याप्यत्वासिद्धिः गन्धाभाववद्वायुरूपबाधश्च वर्तन्ते । अत्रैव पक्षसाध्यहेतुषु काञ्चनमयत्वादिप्रवेशने काञ्चनमयत्वाभाववद्वायुरूपपक्षाप्रसिद्धिः तादृशगन्धरूपसाध्याप्रसिद्धिः तादृशस्नेहरूपसाधनाप्रसिद्धिश्च सम्भवन्ति । अतो दुष्टानामैक्येऽपि दोषाणामनैक्येन न कापि क्षतिः । हेत्वाभासोदाहरणेषु प्रायश उपधेयसाङ्कर्यमेव दृश्यते न तु विविक्तदोषोदाहरणत्वं (विविक्तत्वं दोषान्तररहितत्वम्) कुत्रचित् स्थलविशेषेषु विवक्तदोषोदाहरणत्वमपि सम्भवति, यथा पर्वतो धूमवान्वह्नेरित्यत्र साधारण्यस्य, प्राचीनमते शब्दोऽनित्यश्शब्दत्वादित्यत्र असाधारण्यस्य नवीनमते घटोऽभिधेयः प्रमेयत्वादित्यत्र अत्यन्ताभावाप्रतियोगिसाध्यरूपानुपसंहारित्वस्य गगनारविन्दं सुरभ्यरविन्दत्वादित्यत्र आश्रयासिद्धेः शब्दः प्रमेयश्चाक्षुषत्वादित्यत्र स्वरूपासिद्धेः उत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथिवीत्वादित्यत्र बाधस्य च विविक्तमुदाहरणत्व दृश्यते । विरुद्धसत्प्रतिपक्षितस्थले नियतं बाधव्यभिचारादि सङ्कीर्णे एव ॥

असाधारणलक्षणे सपक्षपदस्य निश्चितसाध्यवदर्थकत्वाङ्गीकारेण शब्दो नित्यश्शब्दत्वादित्यत्रेव शब्दोऽनित्यश्शब्दत्वादिति सद्धेतुस्थलेऽपि पक्षे साध्यसंशयदशायामसाधारण्यमङ्गीकुर्वन्ति प्रचीनाः । शब्दोऽनित्यश्शब्दत्वादित्यत्र साध्यसंशयदशायामसाधारण्याङ्गीकारे वह्निव्याप्यधूमवान्पर्वतः वह्न्यभावव्याप्यपाषाणमयत्ववान्पर्वत इति प्रकृतपरामर्शकालिकविरुद्धपरामर्श दशायां वह्निमान्धूमादिति सद्धेतुस्थलेऽपि सत्प्रतिपक्षितत्वस्वीकारे तत्रैव बाधभ्रमदशायां बाधितत्वव्यवहारस्याप्यङ्गीकारापत्तिरिति सद्धेतुस्थले दशाभेदेन दुष्टत्वव्यवहारोऽनुचित इति नवीना वदन्ति

(प्राचीनमतेऽपि बाधस्य नित्यदोषत्वमेवाङ्गीक्रियते। सर्वदापि दुष्टताव्यवहारविषयत्वं नित्यदोषत्वं, दशाभेदेनासद्धेतुत्वव्यवहार-विषयत्वमनित्यदोषत्वम् )

प्रकृतपक्षविशेष्यकसाध्यतद्व्याप्यहेतूभयप्रकारकानुमितित्वव्यापकीभूता प्रतिबध्यता नित्यत्वसमानाधिकरणत्वत्वावच्छिन्नप्रकारतानिरूपितशब्दत्वत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता (अत्रानुमितौ व्याप्तिपदेन हेतुव्यापकसाध्यसामानाधिकरण्यरूपसिद्धान्तव्याप्तेः साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्यरूपपूर्वपक्षीयव्याप्तेः साध्याभावव्यापकीभूताभावप्रतियोगित्वविशिष्टसाध्यसामानाधिकरण्यरूपव्यतिरेकव्याप्तेश्च ग्रहणं सम्भवति) तन्निरूपिता प्रतिबन्धकता नित्यत्वासमानाधिकरणत्वत्वावच्छिन्नप्रकारतानिरूपितशब्दत्वत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्धकता, तदनतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकानित्यत्वासमानाधिकरणशब्दत्वत्वावच्छिन्नत्वस्य नित्यत्वासमानाधिकरणशब्दत्वे विद्यमानत्वात् समन्वयः। (असाधारण्यनिश्चयः व्याप्तिज्ञाने तदभाववत्तानिश्चयविधया प्रतिबन्धकः)

**मू * अनुपसंहारिणं लक्षयति * अन्वयेति ***

व्या ॥ एतल्लक्षणममन्वयदलसार्थक्यादिविचारः तर्कसङ्ग्रहसर्वस्वे निरूपितः। अत्रान्वयव्यतिरेकदृष्टान्तरहितत्वञ्च किञ्चिद्विशेष्यकनिश्चयाविषयसाध्यकत्वे सति किञ्चिद्विशेष्यकनिश्चयाविषयसाध्याभावकत्वरूपम्। सर्वमनित्यं प्रमेयत्वादित्यत्र सर्वस्यापि पक्षतया सर्वस्मिन्नपि जगति साध्यसंशयसद्भावेन किञ्चिद्विशेष्यकनिश्चयपदेन घटोऽनित्यः पटोऽनित्य इत्यादिनिश्चयो नैव ग्रहीतुं शक्यते,

किन्तु घटो रूपवान् पटो रूपवानिति निश्चयो ग्रहीतुं शक्यते, तादृशनिश्चयाविषयानित्यत्वसाध्यकत्वं (साध्यकालीनत्व) हेतौ वर्तते। सर्वस्य जगतः पक्षत्वेन द्वितीयदलेऽपि किञ्चिद्विशेष्यकनिश्चयपदेन आकाशोनित्यः कालो नित्य इत्यादिनिश्चयो नैव ग्रहीतुं शक्यते, किन्तु आकाशश्शब्दवान् कालस्संयोगवानिति निश्चय एव ग्रहीतुं शक्यते, तादृशनिश्चयाविषयनित्यत्वरूप (साध्याभावकालीनत्वस्य) साध्याभावकत्वस्य प्रमेयत्वहेतौ सत्त्वात्समन्वयः। किञ्चिद्विशेष्यकनिश्चयाविषयसाध्यकत्वमात्रोक्तौ पृथिवी इतरभिन्ना गन्धवत्त्वादित्यत्र पृथिवीमात्रस्य पक्षतया कुत्रापि साध्यनिश्चयाभावेन किञ्चिद्विशेष्यकनिश्चयाविषयसाध्यकत्वस्य गन्धरूपहेतौ सत्त्वादतिव्याप्तिः, विशेष्यदलनिवेशे तु जलाद्यन्तर्भावेण साध्याभावनिश्चयस्य सत्त्वेन किञ्चिद्विशेष्यकनिश्चयविषयसाध्याभावकत्वस्यैव सत्त्वेन नातिव्याप्तिः। ननु विशेष्यदलमात्रोपादाने (तद्दलस्य व्यतिरेकदृष्टान्तरहितत्वरूपतया) घटोऽभिधेयःप्रमेयत्वादित्यत्र केवलान्वयिहेतौ अतिव्याप्तिर्वक्तव्या, सा न घटते, साध्याभावस्यैव अप्रसिद्धत्वात् सर्वत्र जगति अभिधेयत्वस्यैव सत्त्वात् इति चेन्न, महानसान्यसर्वत्वावच्छिन्नस्य पक्षत्वे वह्नेस्साध्यत्वे धूमस्य हेतुतायां महानसान्यस्मिन् सर्वस्मिन् जगति साध्यसंशयस्यैव सत्त्वेन कुत्रापि साध्याभावनिश्चयाभावेन किञ्चिद्विशेष्यकनिश्चयाविषयसाध्याभावकत्वस्य सत्त्वेनातिव्याप्तिः। विशेषणदलनिवेशने तु महानसे साध्यनिश्चयस्याक्षतत्वेन महानसो वह्निमानिति निश्चयविषयसाध्यकत्वस्यैव सत्त्वेन नातिव्याप्तिः (सर्वत्वावच्छिन्नस्य पक्षत्वे प्रमेयत्वादिरूपकेवलान्वयिहेतुरेव नानुपसंहारी किन्तु घटत्वादिव्यतिरेकिहेतुरपि अनुपसंहारी भवितुमर्हत्येव) प्राचीनमतानुसारेणेदं

लक्षणम्, नवीनमतानुसारेण अत्यन्ताभावाप्रतियोगिसाध्यकत्वमेव तल्लक्षणमङ्गीकृतम्। (तादृशसाध्यकत्वञ्च तादृशसाध्यानुमिति-जनकतावच्छेदकप्रकारताश्रयत्वम्) एतन्मते घटोऽभिधेयः प्रमेयत्वादित्यादिकेवलान्वयिहेतुरेवैतदुदाहरणं भवितुमर्हति। ननु केवलान्वयिहेतोरप्यनुपसंहारितास्वीकारे तस्य दुष्टताप्रसक्त्या सद्धेतुत्वभङ्ग इति चेन्न, तन्मते व्याप्तिपक्षधर्मताविशिष्टत्वमात्रं न सद्धेतुत्वं किन्तु, दोषरहितत्वमपि तत्र प्रविष्टमित्यङ्गीक्रियते, अतो दोषसहितत्वेनास्य सद्धेतुत्वाभावेऽपि क्षत्यभावात्। नच तर्हि लिङ्गं त्रिविधमित्यादिनाऽस्य सद्धेतूदाहरणत्वमनुपपन्नमिति वाच्यम्, तदुदाहरणस्य प्राचीनमताभिप्रायकत्वात्। नच तर्हि नवीनमते केवलान्वय्युदाहरणं नास्त्येवेति वाच्यम्, महानसान्यत्सर्वं वह्निमान्धूमादित्यस्यैव तदुदाहरणत्वात् तन्मते नच तर्हि केवलान्वयिसाध्यकत्वमेव केवलान्वयिहेतुलक्षणत्वेन न्यायबोधिन्या दीपिकायाञ्च निर्दिष्टमिति केवलान्वय्यनुपसंहारिलक्षणयोरभेद इति वाच्यम्, प्राचीनैरेव तस्य केवलान्वयिलक्षणत्वेन निर्दिष्टत्वेन अस्यानुपसंहारिलक्षणत्वस्य नवीनमतानुसारित्वेन च दोषाभावात्॥

अन्वयव्यतिरेकदृष्टान्तरहितत्वविशिष्टहेतुरनुपसंहारीति प्राचीनमतानुसारेण प्रतिबध्यप्रतिबन्धकभावक्रमः तर्कसङ्ग्रहसर्वस्वे निरूपितः॥ अत्यन्ताभावाप्रतियोगिसाध्यस्यानुपसंहारित्वाङ्गीकारिनवीनमते हेत्वाभासलक्षणसमन्वयप्रकार इत्थम्, प्रकृतपक्षकप्रकृतसाध्यकप्रकृतसाध्यव्याप्यहेतुकानुमितिव्यापकीभूता प्रतिबध्यता अत्यन्ताभावप्रतियोगित्वत्वावच्छिन्नप्रकारतानिरूपितसाध्यतावच्छेदकावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना (अत्रानु-

मितौ सर्वासां व्याप्तीनां विषयत्वसम्भवेन व्यतिरेकव्याप्तेरपि विषयतया तत्र साध्यप्रतियोगिकात्यन्ताभावस्य घटकत्वेन तुल्यवित्तिवेद्यतया तत्र ज्ञाने अत्यन्ताभावप्रतियोगिसाध्यस्यापि विषयत्वं सम्भवतीत्येतादृशप्रतिबध्यतायास्तादृशानुमितित्वव्यापकत्वं सम्भवति) तन्निरूपिता प्रतिबन्धकता अत्यन्ताभावाप्रतियोगित्वत्वावच्छिन्नप्रकारतानिरूपितसाध्यतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना, तदनतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकधर्मावच्छिन्नत्वस्यात्यन्ताभावाप्रतियोगिसाध्यरूपानुपसंहारित्वेव तत इति समन्वयः। (अत्र व्यतिरेकव्याप्तिज्ञाने दोषनिश्चयस्य तदभाववत्ता निश्चयत्वेन प्रतिबन्धकत्वं विज्ञेयम्) ॥

## मू * विरुद्धंलक्षयति * साध्याभावव्याप्त इति *

व्या ॥ अत्र प्रकृतपक्षविशेष्यक प्रकृतसाध्यप्रकारक प्रकृतसाध्यव्याप्यहेतुप्रकारकानुमितित्वव्यापकीभूताप्रतिबध्यताशब्दत्वावच्छिन्नविशेष्यतानिरूपितनित्यत्वत्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नाप्रतिबध्यता, तन्निरूपिताप्रतिबंधकताकार्यत्वत्वावच्छिन्नविशेष्यताशालिनिश्चयविशिष्टनित्यत्वव्यापकीभूताभावप्रतियोगि-

---

सत्प्रतिपक्षलक्षणम्, पक्षतावच्छेदकावशिष्टपक्षग्रहत्वाव्यापिका साध्यतावच्छेदकविशिष्टसाध्यग्रहत्वाव्यापिका पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकीभूता यद्धर्मावच्छिन्ना प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकीभूता तद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूता यद्रूपावच्छिन्ना विषयता तद्धर्मावच्छिन्नत्वं सत्प्रतिपक्षस्य लक्षणम्। प्रतिबध्यतायां पक्षतावच्छेदकविशिष्टपक्षग्रहत्वाव्यापकत्वनिवे-

त्वत्वावच्छिन्नप्रकारतानिरूपितकार्यत्वत्वावच्छिन्नविशेष्यताशालि-
निश्चयत्वावच्छिन्नाप्रतिबन्धकता तदवच्छेदकविषयतानिरूपकताव-
च्छेदक धर्मावच्छि न्नत्वंनित्यत्वव्यापकीभूताभावप्रतियोगिकार्य-
त्वरूपविरोधे वर्तत इति समन्वयः। (अत्र तदभावव्याप्यवत्ता-
निश्चयत्वेनप्रतिबंधकता)

## मू * सत्प्रतिपक्षं लक्षयति * यस्येति *

व्या ॥ प्राचीनाः सद्धेतावपि प्रकृतपरामर्शकालिकविरुद्धपराम-
र्शदशायां सत्प्रतिपक्षितत्वमङ्गीकुर्वन्ति, तन्मते द्विविधादपि परा-
मर्शाद्द्विविधानुमितिप्रतिबन्धः फलमिति ज्ञेयम्। नवीनमते साध्या-
भावव्याप्यप्रतिहेतुमत्पक्षस्यैव सत्प्रतिपक्षत्वाङ्गीकारेण तादृशानुमि-
तित्वव्यापकप्रतिबध्यतापदेन नित्यत्वत्वावच्छिन्नप्रकारतानिरूपित-
शब्दत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना सा ग्राह्या, तन्नि-
रूपिता प्रतिबन्धकता अनित्यत्वव्याप्यकार्यत्वत्वावच्छिन्नप्रकारता-
निरूपितशब्दत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना, इति
साध्याभावव्याप्यप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षे समन्वयः। (अनु-
मितिं प्रति साक्षादेतन्निश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया
प्रतिबन्धकत्वं ज्ञेयम्) ॥

---

**शात् पक्षाप्रसिद्धौ साध्यतावच्छेदकविशिष्टसाध्यग्रहत्वाव्यापकत्वनिवेशात् साध्याप्रसिद्धौ च नातिव्याप्तिः। यद्धर्मावच्छिन्नविषयतायामनुमिति-प्रतिबन्धकतावच्छेदकत्वनिवेशात् ह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्य-व्याप्यवद्ध्रदे अनुमितिजनकतावच्छेदकत्वनिवेशात् पूर्वोक्तस्थले वह्न्य-भाववद्ध्रदरूपबाधे च नातिव्याप्तिः। सत्प्रतिपक्षनिश्चयस्य केवलपक्षके-वलसाध्यविषयकबुद्धिं प्रत्यप्रतिबन्धकत्वेन पक्षः साध्यवानिति बुद्धिं प्रति प्रतिबन्धकत्वेन साध्याभावानुमितिजनकत्वेन च लक्षणसमन्वयो ग्राह्यः॥**

मू * असिद्धं विभजते * असिद्ध इति * आश्रयासिद्धमुदाहरति * गगनेति *

व्या ॥ आश्रयासिद्ध्याद्यन्यतमत्वमसिद्धसामान्यलक्षणम् । तादृशानुमितित्वव्यापकप्रतिबध्यता गगनवृत्तित्वत्वावच्छिन्नप्रकारतानिरूपितारविन्दत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना, तन्निरूपितप्रतिबन्धकता गगनवृत्तित्वाभावत्वावच्छिन्नप्रकारतानिरूपितारविन्दत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना, इति गगनवृत्तित्वाभाववदरविन्दरूपाश्रयासिद्धौ लक्षणसमन्वयः (एतन्निश्चयः तदभाववत्तानिश्चयमुद्रया पक्षज्ञानांशेऽनुमितिप्रतिबन्धकः) काञ्चनमयपर्वतः काञ्चनमयवह्निमान् काञ्चनमयधूमादित्यत्र पक्षसाध्यसाधनाप्रसिद्धयस्त्रयो दोषाः सम्भवन्ति । द्वितीयतृतीययोर्व्याप्यत्वासिद्धावेवान्तर्भावः न पृथक् हेत्वाभासतेति भावः ॥

मू * स्वरूपासिद्धमुदाहरति * यथेति *

व्या ॥ तादृशानुमितित्वव्यापकीभूता प्रतिबध्यता चाक्षुषत्वत्वावच्छिन्नप्रकारतानिरूपितशब्दत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना, तन्निरूपिता प्रतिबन्धकता चाक्षुषत्वाभावत्वावच्छिन्नप्रकारतानिरूपितशब्दत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना भवतीति चाक्षुषत्वाभाववच्छब्दे समन्वयः । (अत्रापि दोषनिश्चयः तदभाववत्तानिश्चयमुद्रया परामर्शविषयपक्षधर्मताज्ञाने प्रतिबन्धकः) पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावो भागासिद्धिः, यथा गौरितरभिन्ना कपिलरूपादित्यत्र कपिलरूपाभाववच्छुक्लगौर्भागासिद्धिः । अयं पक्षतावच्छेदकावच्छेदेन हेतुमत्ताज्ञाने प्रतिबन्धकः ॥

मू * व्याप्यत्वासिद्धस्य लक्षणमाह * सोपाधिक इति * उपाधेर्लक्षणमाह * साध्येति *

व्या ॥ समन्वयसार्थक्यादिविचारः तर्कसङ्ग्रहसर्वस्वे निरूपितः। ननु धूमवान्वह्नेरित्यत्र आर्द्रेन्धनसंयोगघटत्वोभयाभावप्रतियोगितामादाय आर्द्रेन्धनसंयोगे व्यापकत्वभङ्गे नाव्याप्तिरिति चेन्न, साध्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपत्वेन व्यापकत्वस्य विवक्षणीयत्वात्, तादृशप्रतियोगितावच्छेदकत्वस्य तदुभयत्वे सम्भवेऽपि तदनवच्छेदकार्द्रेन्धनसंयोगत्वमादाय समन्वयात् । नचैवमपि वह्निमान्धूमादित्यादौ महानसीयादिवह्निषु धूमाधिकरणपर्वतादिनिष्ठात्यन्ताभावप्रतियोगित्वेन साधनाव्यापकत्वस्य साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदक प्रमेयत्ववह्नित्वादिधर्मवत्त्वस्य च सत्त्वेन साध्यव्यापकत्वस्य च सत्त्वात्तत्रा-

---

उपाधिलक्षणे, हेतौ साध्यव्यभिचारोन्नायकतया दूषकत्वमुपाधेः फलम्, यथा केवलसाध्यव्यापकोपाधिस्थले अयोगोलकं धूमवद्वह्नेरित्यत्र वह्निः धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचरितत्वादित्यनुमानेन हेतौ साध्यव्यभिचारः साधयितुं शक्यते । तत्तद्धर्मावच्छिन्नसाध्यव्यापकोपाधिस्थले तत्तद्धर्मावच्छिन्नान्तर्भावेण हेतौ साध्यव्यभिचारः साधयितुं शक्यते, यथा पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधिस्थले वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षविषयत्वव्यभिचारि उद्भूतरूपाभाववद्बहिर्द्रव्यत्वावच्छिन्नवायुवृत्तित्वादिति रीत्या हेतौ साध्यव्यभिचारः साधनीयः । साधनावच्छिन्नसाध्यव्यापकोपाधिस्थले उदासीनधर्मावच्छिन्नसाध्यव्यापकोपाधिस्थले च जन्यत्वं प्रमेयत्वं च विनाशित्वव्यभिचारि भावत्वाभाववज्जन्यध्वंसवृत्तित्वादिति रीत्या साध्यव्यभिचारो हेतौ साधनीयः । केचित्तु, सत्प्रतिपक्षोत्थापकतया

तिव्याप्तिरिति वाच्यम् , साध्यसमानाधिकरणाभावीयप्रतियोगितानवच्छेदकः साधनसमानाधिकरणाभावीयप्रतियोगितावच्छेदकश्च यो धर्मः तद्वत्त्वस्य विवक्षितत्वात् , प्रमेयत्वादौ साधनाव्यापकतावच्छेदकत्वाभावेन तत्तद्वह्नित्वादौ साध्यव्यापकतावच्छेदकत्वाभावेन च नातिव्याप्तिः । प्रकृते आर्द्रेन्धनसंयोगत्वमादाय समन्वयः । न च तथापि संयोगेन साध्यव्यापकत्वस्य समवायादिना साधनाव्यापकत्वस्य च वह्निमान्धूमादित्यत्र साध्ये वह्नौ सत्त्वेनातिव्याप्तिरिति वाच्यम् , साध्यव्यापकत्वसाधनाव्यापकत्वघटकप्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वस्य विवक्षितत्वात् । उपाधिज्ञानस्य साक्षादनुमितिप्रतिबन्धकत्वाभावेऽपि परम्परयाऽनुमितिप्रतिबन्धोपयोगित्वेन उपाधेः कथञ्चिद्दूषकत्वं वक्तव्यम् , तत्प्रकारश्च, प्रकृते साध्यभूतधूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेत् धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृह्यते, एवं साधनीभूतवह्निव्यापकत्वमार्द्रेन्धन-

---

दूषकत्वमुपाधेर्वदन्ति, सत्प्रतिपक्षोत्थापकत्वं च स्वाभाववत्त्वरूपहेतुना साध्याभावानुमितिजनकत्वम्, यथा आद्ये अयोगोलकं धूमाभाववत् आर्द्रेन्धनसंयोगाभावादिति । द्वितीयादिषु यद्धर्मविशिष्टसाध्यव्यापकत्वमुपाधौ सम्भवति तद्धर्मविशिष्टसाध्याभावानुमितिजनकत्वं सम्भवति । यथा वायुः बहिर्द्रव्यत्वविशिष्टप्रत्यक्षविषयत्वाभाववान् उद्भूतरूपाभावात्, ध्वंसः जन्यत्वविशिष्टविनाशित्वाभाववान् भावत्वाभावादित्यादिरीत्या (साध्ये तत्तद्धर्मवैशिष्ट्यानिवेशे व्यभिचारप्रसङ्गः) पर्वतो धूमवान्वह्नेः प्रागभावो विनाशी जन्यत्वादित्यादौ तु सत्प्रतिपक्षोन्नायकतया दूषकत्वं न सम्भवति, पक्षे तत्र साध्यस्य सत्त्वात् किन्तु एतादृशस्थले साध्यव्यभिचारोन्नायकतया दूषकत्वमेवेति ग्राह्यम् । ननु सत्प्रतिपक्षोन्नायकतया दूषकत्वपक्षे तत्तद्धर्मविशिष्टो यस्साध्यः तदभावस्यैव सिद्ध-

संयोगे गृहीत चेत् आर्द्रेन्धनसयोगाव्याप्यत्व वह्नौ गृह्यते, अव्याप्यत्वञ्च व्यभिचार एव, साधनाव्यापकत्वदललभ्योपाधिव्यभिचारः साधनीभूतवह्नौ गृहीतश्चेत् साध्यव्यापकत्वदललभ्यार्द्रेन्धनसंयोगव्याप्यत्वविशिष्टधूमव्यभिचारः साधनीभूतवह्नौ गृह्यत एव, तथा च साध्यव्यापकत्वसाधनाव्यापकत्वदललभ्यधूमव्यापकार्द्रेन्धनसयोगव्यभिचारस्वरूपहेतुना यो यद्व्यापकव्यभिचारी स सर्वोऽपि तद्व्यभिचारीति सामान्यमुखीयव्याप्तिसहकृतेन वह्नौ धूमव्यभिचारोऽनुमीयते । अनुमानप्रकारश्च, वह्निः धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसयोगव्यभिचारित्वादिति, अनेनानुमानेन वह्नौ धूमव्यभिचारे ज्ञाते सति धूमव्याप्यो वह्निरिति व्याप्तिज्ञानप्रतिबन्धो जायते, ततः परामर्शप्रतिबन्धे जाते ततः पर्वतो धूमवानित्यनुमितेः प्रतिबन्ध इति परम्परया दूषकत्वमुपाधेः, न तु हेत्वाभासत्वम् । एवञ्च स्वव्यभिचारेण साध्यव्यभिचारोन्नायकतया (प्रकृतानुमानहेतुविशेष्यकसाध्यव्यभिचारप्रकारकानुमितिजनकतावच्छेदकविषयताश्रयतया) दूषकत्वमुपाधेः फलमिति ज्ञेयम् ॥

**त्वेन** एतादृशसाध्याभावनिश्चयस्य तत्तद्धर्माविशेषितसाध्यविषयकप्रकृतानुमितिप्रतिबन्धकत्वाभावेन तत्तत्पक्षे तत्तत्साध्यसिद्धिर्दुर्वारेति चेन्न, तादृशानुमितावपि तत्तद्धर्मसमानाधिकरणस्यैव साध्यस्य विषयत्वसम्भवेन तादृशबाधनिश्चयाप्रतिबध्यायाः अनुमितेस्सम्भवेऽप्यभिमतसाध्यस्यासिद्धे । यत्र च पक्षे बाधनिश्चयो नियतः तत्र पक्षेतरः पक्षेतरत्वं वा उपाधिर्भवत्येव, यथा वह्निरनुष्णः पदार्थत्वादित्यत्र वह्नीतरत्वमुपाधिर्भवति । कुत्रचित्साध्यसाधनयोर्व्यापकोऽप्युपाधिर्दृश्यते, यथाकरका पृथिवी कठिनसंयोगावित्यत्रानुष्णाशीतस्पर्शवत्त्वमुपाधिः । उपाधेः प्रायशः दोषान्तरसाङ्कर्यं नियत एवेत्यवधेयम् ॥

मू * उपाधिश्चतुर्विधः, केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापकः उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति । आद्य आर्द्रेन्धनसंयोगः, द्वितीयो यथा, वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वम् । तृतीयो यथा, प्रागभावो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् । चतुर्थो यथा, प्रागभावो विनाशी प्रमेयत्वादित्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् । बाधितस्य लक्षणमाह * यस्येति *

व्या ॥ सङ्ग्रहोक्तोपाधिलक्षणघटकसाध्यव्यापकत्वस्य वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यादिवक्ष्यमाणस्थलेषु (जीवान्तर्भावेण) उद्भूतरूपाद्यन्तर्भावेण प्रागभावान्तर्भावेण च साध्यव्यापकत्वव्यभिचारप्रसङ्गेन प्रसक्तामव्याप्तिं वारयितुं लक्षणभेदं दर्शयति * उपाधिश्चतुर्विध इति * तल्लक्षणभेदप्रकारः, केवलसाध्यव्यापकत्वघटितमेकम्, पक्षधर्मावच्छिन्नसाध्यव्यापकत्वघटितमपरम्, साधनावच्छिन्नसाध्यव्यापकत्वघटितमन्यत्, उदासीनधर्मावच्छिन्नसाध्यव्यापकत्वघटितमितरत् (एषु चतुर्षु लक्षणेषु साधनाव्यापकत्वदलं वर्तत एव) यद्धर्मघटितसाध्यव्यापकत्वं तद्धर्मघटितसाधनाव्यापकत्वं लक्षणे निवेशनीयम्, अन्यथा, पर्वतो वह्निमान्धूमादित्यत्र महानसीयवह्नौ महानसीयत्वविशिष्टवह्निव्यापकत्वं पर्वतान्तर्भावेण धूमाव्यापकत्वञ्च सम्भवतीत्यतिव्याप्तिः, तन्निवेशे तु महानसीयत्वविशिष्टवह्निव्यापकस्य महानसीयत्वविशिष्टधूमव्यापकत्वाभावान्नातिव्याप्तिः । अत्र साध्ये पक्षधर्मसाधना-

ध्यवच्छिन्नत्वं सामानाधिकरण्यरूपं वक्तव्यम्, अन्यथा साध्ये पक्षधर्मादेरप्रसिद्धयाऽसम्भवापत्तेः। पक्षधर्मसाधनातिरिक्तो धर्मः उदासीनधर्मः। वायुः प्रत्यक्ष इत्यत्र पक्षधर्मो बहिर्द्रव्यत्वम् आत्मान्यत्वविशिष्टद्रव्यत्वरूपम्। अत्र केवलप्रत्य क्षविषयत्वमेव साध्यम् * प्रागभावो विनाशी जन्यत्वादिति * अत्र जन्यत्वं पक्षधर्मो न भवतीति साधनावच्छिन्नसाध्यव्यापकोपाध्युदाहरणत्वेनाभिहितम् * अनित्यत्वव्यापकमिति * अत्रानित्यत्वं जन्यत्वाघटिताविनाशित्वरूपमेव, तस्य तद्घटितत्वे प्रागभावस्य तदनधिकरणत्वेन तथोपन्यासानुपपत्तेः। जन्यत्वस्योदासीनत्वं सम्पादयितुमाह * प्रमेयत्वादिति *

नन्वत्र स्थलद्वयेऽपि प्रागभावस्यैव पक्षत्वेन पक्षे साध्यसंशयस्यैव विद्यमानतया तन्निश्चयाभावेन उभयत्र विनाशित्वाधिकरणपदेन प्रागभावस्य ग्रहीतुमशक्यत्वेन प्रागभावान्तर्भावेण साध्यव्यापकत्वव्यभिचारनिरूपणमसङ्गतमिति चेन्न, लक्षणेसाध्याधिकरणत्वस्यैव विवक्षणेन साध्यप्रकारकनिश्चयविशेष्यत्वस्याविवक्षणेन साध्याधिकरणपदेन प्रागभावस्य ग्रहणेऽपि क्षत्यभावात्। यद्वा, पक्षे प्रागभावे विनाशित्वसन्देहेऽपि तत्सन्देहेन उपाधेः साध्यव्यापकत्वसन्देहः, तेन प्रकृतानुमानहेतौ साध्यव्यभिचारसन्देहः, ततो व्याप्तिसंशयः, तेन च परामर्शसंशयो जायत इति परम्परयाऽनुमितिप्रतिबन्धात्पक्षस्य प्रागभावस्य साध्याधिकरणपदेन ग्रहणेऽपि क्षत्यभावात्। अथवा, केषुचित्पुस्तकेषु ध्वंसो विनाशी जन्यत्वात्प्रमेयत्वादित्येव पाठो दृश्यते, अत्र पक्षभिन्नस्य हेत्वधिकरणस्य प्रागभावस्य साध्याधिकरणत्वे न कापि विप्रतिपत्तिः। अस्मिन्नेव पाठे मुक्ता-

वळी संषादोऽपि दृश्यते, अतो न कापि क्षतिः। पर्यवसाने घटाद्यन्तर्भावेण जन्यत्वरूपसाधनावच्छिन्नस्य तद्रूपोदासीनधर्मावच्छिन्नस्य च साध्यस्य व्यापकत्वं ध्वंसान्तर्भावेण साधनाव्यापकत्वं च भावत्वे स्थलद्वयेऽपि सम्भवति। व्याप्यत्वासिद्धस्यैव सोपाधिकत्वेन न सोपाधिकस्य पृथक् हेत्वाभासतेति भावः। साध्याभाववद्वृत्तिहेतुरूपसाधारण्य इव साध्याभाववद्वृत्तित्वाभाववद्धेतुरूपव्याप्यत्वासिद्धावपि हेत्वाभासलक्षणसमन्वयः कार्यः॥

* बाधितस्य लक्षणमाहेतीति * पदार्थस्सङ्ग्रहव्याख्यायां बोधितः। तादृशानुमितित्वव्यापकीभूता प्रतिबध्यता अनुष्णत्वत्वावच्छिन्नप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना, तन्निरूपिता प्रतिबन्धकता अनुष्णत्वाभावत्वावच्छिन्नप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्धकता भवतीति अनुष्णत्वाभाववद्वह्निरूपबाधे समन्वयः कार्यः। विशेषणविशेष्यभाववैपरीत्यप्राप्तबाधादिदोषोदाहरणानि तर्कसङ्ग्रहसर्वस्वे निर्दिष्टानि। उत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथिवीत्वादितिस्थले विविक्तबाधोदाहरणम्॥

**मू * अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकत्वम्। इतरेषान्तु परामर्शप्रतिबन्धकत्वम्। तत्रापि साधारणस्याव्यभिचाराभावरूपतया विरुद्धस्य सामानाधिकरण्याभावरूपतया व्याप्यत्वासिद्धस्य विशिष्टव्याप्त्यभावरूपतया असाधारणानुपसंहारिणोः व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्ध-**

कत्वम् । आश्रयासिद्धिस्वरूपासिद्ध्योः पक्षधर्मताज्ञानप्रति बन्धकत्वम् । उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः । सिद्धसाधनन्तु पक्षताविघटकतया आश्रयासिद्धावन्तर्भवतीति प्राञ्चः । निग्रहस्थानान्तरमिति नवीनाः ॥

इति अनुमानपरिच्छेदः ॥

व्या ॥ बाधस्य साध्याभाववत्पक्षनिश्चयस्य, ग्राह्यभाववत्तानिश्चयत्वेन तदभाववत्तानिश्चयत्वेन, प्रतिबध्यज्ञानविषयत्व ग्राह्यत्वम् * विरोधिज्ञानसामग्रीत्वेनेति * अनुमितिविरोधिज्ञानं साध्याभाववत्तानिश्चयरूपानुमिति, एतत्परामर्शरूपतया सत्प्रतिपक्षनिश्चयः विरोधिज्ञानसामग्री भवति । इदं प्राचीनमताभिप्रायेणोक्तम् । तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्येव तदभावव्याप्यवत्तानिश्चयस्यापि लाघवेन तद्वत्ताबुद्धिं प्रति साक्षात्प्रतिबन्धकत्वं नवीनैरङ्गीकृतम् । इतरेषा व्यभिचारादिनिश्चयानां । तत्रापि व्यभिचारादिनिश्चयेष्वपि । साधारणस्य विरुद्धस्य व्याप्यत्वासिद्धस्येत्यादौ सर्वत्रापि भावप्रधाननिर्देशो ग्राह्यः, साधारण्यस्य विरोधस्य व्याप्यत्वासिद्धेरित्यादिस्तदर्थः, तद्ग्रहस्येति शेषः, व्याप्तिज्ञानप्रतिबन्धकत्वमित्यनेनान्वयः । साधारण्यस्य साध्याभाववद्वृत्तित्वस्य साध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य च । अव्यभिचारः साध्याभाववदवृत्तित्वं साध्यतावच्छेदकनि-

बाधलक्षणम्, पक्षतावच्छेदकविशिष्टपक्षग्रहत्वाव्यापिका साध्यतावच्छेदकविशिष्टसाध्यग्रहत्वाव्यापिका पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वव्यापकीभूता या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतानतिरिक्तवृत्तिः साध्या-

ष्टहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वम्। तस्य तद भावरूपतया तद्ग्रहस्य प्रतिबन्धकता * विरुद्धस्येति * विरोधस्य साध्यसामानाधिकरण्याभावरूपत्वेतज्ज्ञानस्य हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धकत्वमिति भावः * विशिष्टव्याप्त्यभावतयेति * साध्याभाववदवृत्तित्वाभावः हेतुव्यापकसाध्यसामानाधिकरण्याभावश्च विशिष्टव्याप्त्यभावः * असाधारणानुपसंहारिणोरिति * असाधारणस्थले हेतौ सपक्षवृत्तित्वे अनुपसंहारिस्थले अन्वयव्यतिरेकदृष्टान्तरहितत्वे च ज्ञाते व्याप्तिसंशय एव जायते न व्याप्तिनिश्चय इति प्राचीनमतम्। निश्चयाघटितं साध्यासामानाधिकरण्यमेवासाधारण्यम् अत्यन्ताभावाप्रतियोगिसाध्यकत्वमेवानुपसहारित्वमिति नवीनमतम् * आश्रयासिद्धिस्वरूपासिद्ध्योरिति * स्वरूपासिद्धिनिश्चयः पक्षे हेतुमत्ताज्ञानं पक्षधर्मताज्ञानरूप प्रतिबध्नाति। आश्रयासिद्धिनिश्चयस्तु पक्षधर्मतैकदेशपक्षज्ञान प्रतिबध्नाति, पर्यवसाने पक्षधर्मताज्ञानं प्रतिबध्ना-

भावविधेयकानुमितिजनकतानवच्छेदकीभूता यद्रूपावच्छिन्ना विषयता तद्रूपावच्छिन्नत्वं बाधस्य लक्षणम्। प्रतिबध्यतायां पक्षतावच्छेदकविशिष्टपक्षग्रहत्वाव्यापकत्वसाध्यतावच्छेदकविशिष्टसाध्यग्रहत्वाव्यापकत्वनिवेशाद् पक्षाप्रसिद्धसाध्याप्रसिद्धयोः नातिव्याप्तिः। यद्रूपावच्छिन्नविषयतायां ताद‍ृशग्रहप्रतिबन्धकतानतिरिक्तवृत्तित्वनिवेशात् व्यभिचारादौ साध्याभावानुमितिप्रतिबन्धकतानवच्छेदकत्वनिवेशात् सत्प्रतिपक्षे च नातिव्याप्तिः। साध्याभाववत्पक्षरूपबाधनिश्चयस्य केवलपक्षबुद्धिं प्रति केवलसाध्यविषयकबुद्धिं प्रति च अप्रतिबन्धकत्वेन पक्षः साध्यवानिति बुद्धिं प्रति प्रतिबन्धकत्वेन साध्याभावानुमिति प्रत्यजनकत्वेन च बाधे लक्षणसमन्वयो ग्राह्यः॥

त्येव । ननूपाधिनिश्चयदशायामपि व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धादुपाधेरपि हेत्वाभासान्तरत्वं सिद्ध्यतीत्यत आह * उपाधिस्त्विति * हेत्वाभासलक्षणे साक्षादनुमितिप्रतिबन्धकत्वस्यैव निविष्टतया परंपरया तादृशानुमितिप्रतिबन्धप्रयोजकस्य उपाधेस्तल्लक्षणानाक्रान्तत्वेन न हेत्वाभासत्वमिति भावः * सिद्धसाधनं त्विति * साध्यासिद्धेरप्यनुमितिप्रतिबन्धात्सिद्धिविषयस्यापि हेत्वाभासत्वमङ्गीकर्तव्यमित्याशंकां इष्टापत्त्या तद्विषयस्य दोषत्वाङ्गीकारेण परिहरति * पक्षताविघटकतयेति * प्राचां मते साध्यसंशयरूपां पक्षतां साध्यवत्पक्षविषयकनिश्चयो विघटयात, आश्रयासिद्धिरपि पक्षतावच्छेदकवैशिष्ट्यरूपां पक्षतां विघटयतीति पक्षताविघटकत्वसाम्येनास्य आश्रयासिद्धावेवान्तर्भावः कर्तव्य इति भावः * निग्रहस्थानान्तरमितीति * सिषाधयिषारहितसिद्धेरनुमितिप्रतिबन्धकत्वेऽपि सिषाधयिषासहितसिद्धेस्तदभावेन यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वघटितलक्षणस्य सिद्धिविषयेऽभावेन न हेत्वाभासताप्रसक्तिरिति तस्य निग्रहस्थानान्तरत्वं नवीनैरङ्गीकृतम् । पर्वतादौ वह्न्यादिप्रत्यक्षदशायां पर्वतो वह्निमान्धूमादिति वाक्यं यदि प्रयुज्येत सोऽपि निग्राह्य एवेति नवीनानामाशयः ॥

इति तर्कसङ्ग्रहसर्वस्वपञ्चलक्षणीसर्वस्वकृता
कुरुगण्ठयुपाख्यश्रीरामशास्त्रिणा विरचिते
दीपिकासर्वस्वे भगवदर्पिते

## अनुमानपरिच्छेदः समाप्तः

श्रीशिवाय नमः

# दीपिकासर्वस्वे

## उपमानपरिच्छेदप्रारम्भः

**मू * उपमानं लक्षयति * उपमितिकरणमिति ***

**इत्युपमानपरिच्छेदः समाप्तः ॥**

व्या ॥ मूले उपमितिस्वरूपं निर्दिशति * संज्ञेति * लक्षणन्तु उपमिनोमीत्यनुव्यवसायगम्योपमितित्वमेव * वाक्यार्थं स्मरन् गोसदृशपिण्डं पश्यतीति * अत्र स्मरन्निति पश्यतीति वर्तमानप्रत्ययबलेन सादृश्यदर्शनजन्यमेव स्मरणमुपमितौ न कारणम्-किन्तु सादृश्यदर्शनजन्यमुद्बोधकान्तरजन्यं वा स्मरणं सादृश्य दर्शनस्य सहकारीति सूचितम्। सादृश्यदर्शनसहकृतं स्मरणम् उपमितौ कारणं भवतीति तदर्थः ॥ केचित्तु स्मरन्नित्यस्य स्मरिष्यन्नित्यर्थं परिकल्प्य सादृश्यदर्शनजन्यमेव स्मरण उपमितौ व्यापार इत्याहुः ॥ अयं (गवयो) गवयपदवाच्यः गोसादृश्यात् इत्यनुमानेनैव गवये गवयपदवाच्यत्वलाभे उपमानस्य प्रमाणान्तरत्वं नाङ्गीकर्तव्यमिति वैशेषिका वदन्ति, तदसङ्गतम्, परामर्शमन्तरापि पूर्वनिर्दिष्टसामग्रीत एव तादृशार्थसिद्धौ उपमानस्य प्रमाणान्तरत्वसिद्धेर्निर्बाधात्। ॥

इति श्रीकुरुगण्टयुपाख्यश्रीरामशास्त्रिणा

विरचिते दीपिकासर्वस्वे भगवदर्पिते

**उपमानपरिच्छेदः समाप्तः ॥**

श्रीमेधादक्षिणामूर्तये नमः

# दीपिकासर्वस्वे

## शब्दपरिच्छेदप्रारम्भः

मू * शब्दं लक्षयति * आप्तेति * आप्तं लक्षयति * आप्तस्त्विति * वाक्यलक्षणमाह * वाक्यमिति * पदलक्षणमाह * शक्तमिति * अर्थस्मृत्यनुकूलपदपदार्थसम्बन्ध श्शक्तिः, सा च पदार्थान्तरमिति मीमांसका: तन्निरासार्थमाह * अस्मादिति * डित्थादीनामिव घटादीनामपि सङ्केत एव शक्तिः न तु पदार्थान्तरमित्यर्थः ॥

व्या ॥ शब्दं लक्ष्यतीति * प्रत्यक्षादिचतुर्विधप्रमाणानां एवं क्रमेण निरूपणे सङ्गतिप्रकार: मदीये तर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे निरूपित: । शब्दज्ञानस्य प्रमाणत्वाङ्गीकर्तृनवीनमते उपमिते: शक्तपदविषयकत्वेन तत्रोपमानजन्यत्वस्याक्षततया उपमितिरूपशब्दप्रमाणेऽपि 'उपमानजन्यत्वस्याबाधितत्वेन तयो: स्वरूपत एव सङ्गतिर्ज्ञेया । प्राचीनमते तु उपमिते: शक्तिज्ञानरूपतया शाब्दबोधस्य शक्तिज्ञानापेक्षतया उपमितिशाब्दंबोधयो: फलयोरेव उपजीव्योपजीवकभावरूपासङ्गतिस्सम्भवति, सा च स्वाश्रयकरणत्वरूपपरम्परासम्बन्धेन करणनिष्ठा भवतीति करणयोरप्युपजीव्योपजीवकभावरूपासङ्गतिस्सम्भवतीति ज्ञेयम् *

मूले आप्तवाक्यं शब्द इति * शब्दः प्रमाणशब्दः, एतच्च प्राचीनमतानुसारेण । नवीनमते तु शब्दज्ञानस्यैव शब्दप्रमाणरूपत्वात् । शब्दप्रमाणस्य आप्तस्य वाक्यस्य पदस्य च लक्षणानि तर्कसङ्ग्रहसर्वस्वे निरूपितानि तत्र द्रष्टव्यानि ॥

उत्तरत्र मीमांसकमतसाधारणशक्तिपदार्थं खण्डयितुमादौ तन्मतसाधारण्येन शक्तिपदार्थमाह * अर्थस्मृतीति * अत्र पदस्य पदार्थस्य च सम्बन्ध इति विग्रहः, पदस्येत्यत्र षष्ठ्याः प्रतियोगितानिरूपकत्वम्, पदार्थस्येत्यत्र षष्ठ्याः अनुयोगितानिरूपकत्वञ्चार्थः, अर्थस्मृतिः अर्थोपस्थितिः, तथा च पदार्थोपस्थित्यनुकूलः पदप्रतियोगिकः पदार्थानुयोगिकः सम्बन्धः शक्तिरित्यर्थः । पदवाच्यत्वस्य शक्तिरूपस्य पदं प्रतियोगि, पदार्थोऽनुयोगी भवति । प्रथमं गामानयेत्यादिवाक्यघटकपदज्ञानम्, तदनु इद पदमत्र शक्तमिति शक्तिज्ञान, तदनु तत्तत्पदार्थोपस्थितिः, तदनु शाब्दबोध इति बोधोत्पत्तिक्रमः तर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे साधु निरूपितः । अत्रानुकूलत्वस्य जनकजनकतावच्छेदकसाधारणप्रयोजकतारूपत्वेन शक्तिज्ञानस्य तदुपस्थितिजनकत्वेऽपि तद्विषयशक्तौ तदुपस्थितिप्रयोजकत्वस्याव्याहतत्वेन तादृशसम्बन्धत्वस्य शक्तौ सत्त्वात्समन्वयः । केवलपदार्थसम्बन्धश्शक्तिरित्युक्तौ घटपटादिसंयोगेऽतिव्याप्तिः । पदप्रतियोगिकत्वनिवेशे तु तस्य तत्राभावान्नातिव्याप्तिः । केवलपदपदार्थसम्बन्धश्शक्तिरित्युक्तौ गगने पदानां समवायेन विद्यमानतया तत्र समवाये तल्लक्षणस्याक्षततयाऽतिव्याप्तिः । अर्थस्मृत्यनुकूलत्वस्य निवेशेऽपि "एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्" इति न्यायानुसारेण पदरूपैकसम्बन्धिज्ञानस्य गगनरूपपदार्थस्मारकत्वेन गगनरूपपदा-

र्थस्मृत्यनुकूलपदपदार्थसम्बन्धत्वस्य समवाये सत्त्वेन पूर्वोक्तदोषतादवस्थ्य अतश्शाब्दबोधप्रयोजकत्वमर्थस्मृतौ विशेषणं देयम्, तन्निवेशे एकसम्बन्धिज्ञानजन्यापरसम्बन्धिस्मृतेः तद्विषयपदार्थविषयकशाब्दबोधजनकत्वाभावान्नातिव्याप्तिः। अर्थस्मृत्यनुकूलत्वमात्रनिवेशे ईश्वरादृष्टादावतिव्याप्तिरिति पदपदार्थसम्बन्धरूपविशेष्योपादानम् * पदार्थान्तरमिति * पदार्थविभाजकतावच्छेदकधर्मसप्तकान्यतमाभावविशिष्टमित्यर्थः * अस्मादितीति * एतत्पदजन्यबोधविषयत्वप्रकारिका एतदर्थविशेष्यिका ईश्वरेच्छा शक्तिरित्यर्थः। ननु ईश्वरच्छायास्सर्वविषयिण्याश्शक्तित्वाङ्गीकारे घटपदजन्यबोधविषयत्वप्रकारकेश्वरेच्छाया विशेष्यता सम्बन्धेन पटेऽपि सत्त्वेन पटो घटपदवाच्य इत्यादिव्यवहारापत्तिरिति चेन्न, घटपदजन्यत्वनिष्ठप्रकारतानिरूपितबोधानिष्ठप्रकारतानिरूपित, विषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनेच्छाविशिष्टत्वस्यैव घटपदवाच्यत्वरूपत्वेन परिष्करणीयतया तादृशविशेष्यतायाः पटादावभावान्नातिप्रसङ्गः। ननु ईदृशेश्वरेच्छायाः शक्तित्वाङ्गीकारे विनिगमनाविरहेण ईश्वरीयज्ञानकृत्योरपि तादृशयोः शक्तित्वप्रसङ्ग इत्यत आह * डित्थादीनामिवेति * अस्मदाद्याधुनिकसमवेतस्य डित्थादिविषयकसङ्केतस्य इच्छारूपत्वेन घटादिविषयकसङ्केतस्यापीच्छारूपत्वे शाब्दबुद्धित्वावच्छिन्नं प्रति एकरूपेण लाघवात् सङ्केतज्ञानत्वेन कार्यकारणभावः कल्पयितुं शक्यत इत्यर्थः॥

**मू * ननु गवादिपदानां जातावेव शक्तिः, विशेषणतया जातेः प्रथमोपस्थितत्वात्, व्यक्तिलाभस्त्वाक्षेपादिति**

**केचित्, तन्न, गामानयेत्यादौ वृद्धव्यवहारेण सर्वत्रानयनादेः व्यक्तावेव सम्भवेन जातिविशिष्टव्यक्तावेव शक्तिकल्पनात् ॥**

व्या ॥ जातिविशिष्टे शक्तिं व्यवस्थापयिष्यन् प्रथमं जातौ शक्तिमङ्गीकुर्वतां मीमांसकानां मतमुपन्यस्य खण्डयति * ननु गवादिपदानामिति * अत्र मीमांसकानामयमाशयः, जातिविशिष्टे शक्तिकल्पनापेक्षया प्रथमोपस्थितविशेषणीभूतजातावेव शक्तिकल्पनमुचितम्, विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वेन विशेषणज्ञानमन्तरा विशिष्टग्रहासम्भवेन विशेषणीभूताया जातेः प्रथमोपस्थितत्वेन लाघवादिति । अपि च जातिविशिष्टे शक्तिकल्पने जात्याश्रयेषु बहुषु जातिव्यक्तितत्संसर्गेषु त्रिषु च शक्तेः कल्पनीयतया आश्रयानन्त्येन गौरवं स्यात्, केवलजातौ तत्कल्पने आश्रयस्यैकत्वेन ततो महल्लाघवञ्च, व्यक्ति (आश्रय) भानन्तु अर्थापत्तिप्रमाणाद्भवति, तथा हि, अर्थापत्तिश्च "येन विना यदनुपपन्नं तत्तेनाक्षिप्यते" इति, गामानयेत्यत्र येन विना गवीयानयनकर्मत्वेन विना गोत्वनिष्ठमानयनकर्मत्वमनुपपन्नम्, तत् गवीयानयनकर्मत्वं तेन गोत्वनिष्ठानयनकर्मत्वेन आक्षिप्यते बोध्यते इति * तन्नेति * तन्मतनिराकर्तॄणां नैयायिकानामयमाशयः, भवन्मते जातेः प्रथमोपस्थितत्वेऽपि व्यक्तिलाभार्थमर्थापत्तिरूपप्रमाणान्तराङ्गीकरणस्यावश्यकत्वेनैकविधं गौरवं, जातिविशिष्टे शक्तिकल्पने जातौ शक्यतावच्छेदकत्वसम्भवेन शक्यतावच्छेदकभेदेनैव शक्तिभेदस्याङ्गीकृततया तदाश्रयभेदेन शक्तिभेदस्य कैरप्यनङ्गीकृततया गोत्वादेरनुगतत्वेन

शक्यतावच्छेदकानन्त्यप्रयुक्तभेदाभावेन अस्मन्मते लाघवम्, भवन्मते गोत्वादौ शक्तिकल्पने गवेतरासमवेतत्वविशिष्टनिखिलगोसमवेतत्वरूपगोत्वत्वे शक्यतावच्छेदकत्वस्य कल्पनीयतया गोत्वत्वस्य तद्घटकनानापदार्थघटिततया शक्यतावच्छेदकभेदेन तन्नानात्वप्रयुक्तशक्तिभेदाङ्गीकरणस्यावश्यकतया मीमांसकमतेऽन्यच्च महागौरवं प्रसज्येतेति * जातिविशिष्टव्यक्तावेवेति * अशक्यस्य शाब्दबोधे भानानङ्गीकारेण जात्याकृतिव्यक्तयः पदार्थाः इति नैयायिका वदन्ति । आकृतिः सम्बन्धः । व्यक्तिः जात्याश्रयः । विशिष्टे शक्तिस्वीकारे विशेषणे तत्संसर्गे च सा सिद्ध्यति ॥ अत्र नवीनाः लक्ष्यतावच्छेदके लक्षणानङ्गीकारेऽपि इदं लक्ष्यतावच्छेदकमिति ज्ञानमात्रेण लक्ष्यतावच्छेदकस्य शाब्दबोधे यथा भानं तत्र शक्त्यनङ्गीकारेऽपि इदं शक्यतावच्छेदकमिति ज्ञानमात्रेणैव शक्यतावच्छेदकस्यापि शाब्दबोधे भानसम्भवेन शक्यतावच्छेदके शक्तिर्नाङ्गीक्रियत इति वदन्ति ॥

**मू * शक्तिग्रहश्च वृद्धव्यवहारेण, व्युत्पित्सुर्बालो गामानयेत्युत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनञ्च दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्य अश्वमानय गां बधानेति वाक्यान्तरेण आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिः अश्वपदस्याश्वत्वविशिष्टे शक्तिरिति व्युत्पद्यते ॥**

व्या ॥ शक्तिग्रहश्च वृद्धव्यवहारेणेति * इदमुपलक्षणं व्याकरणादीनामपि शक्तिग्राहकाणाम् । अत्रेयमभियुक्तोक्तिः,
॥ श्लो ॥ शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।

वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धा इति । कृञादिधातूनां सुपां तिङां प्रकृतीनां च व्याकरणाच्छक्तिग्रहः । उपमानाच्छक्तिग्रह उपमानपरिच्छेदे निरूपितः । " वैकुण्ठो विष्टर-श्रवाः, दामोदरो हृषीकेशः केशवो माधवः स्वभूः" इत्यादिपदानां कोशाद्विष्णवादिषु शक्तिर्गृह्यते । विष्णुर्विष्वक्सेनपदवाच्य इत्याप्तवाक्याद्विष्वक्सेनपदस्य विष्णौ शक्तिर्गृह्यते । व्यवहारतः शक्ति-ग्रहप्रकारः दीपिकायामेव निरूपितः, सुस्पष्टमुत्तरत्र मयापि नि-रूपयिष्यते । आर्यैर्यवशब्दो दीर्घशूकविशिष्टे प्रयुज्यते, म्लेच्छैस्तु स प्रियङ्गौ प्रयुज्यते, अतस्संशये जाते "वसन्ते सर्वसस्यानां जायते पत्रशातनम्, मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः, इति वाक्यशेषाद्दीर्घशूकविशिष्टे यवशब्दस्य शक्तिर्गृह्यते । चैत्रो ग्रामं गच्छतीत्यादौ गच्छति गमनं करोतीति विवरणात् (व्याख्यानात्) आख्यातस्य कृतौ शक्तिर्गृह्यते । विकसितपद्मे मधुकरस्तिष्ठतीत्यत्र प्रसिद्धपद्मपदसमभिव्याहारान्मधुकरपदस्य द्वि-रेफे शक्तिर्गृह्यत इति दीपिकायामेव निरूपितम् । अथ व्यव-हारतश्शक्तिग्रहप्रकारः शिष्यसुखबोधाय साधुनिरूप्यते मया, व्युत्पित्सुर्बाल इत्यारभ्य व्युत्पद्यत इत्यन्तेन ग्रन्थेन सूचिता व्युत्पि-त्सुगता अनुमानप्रकारा निरूप्यन्ते (व्युत्पित्सुः शक्तिग्रहेच्छावन्, उत्तमवृद्धः प्रयोजकवृद्धः मध्यमवृद्धः प्रयोज्यवृद्धः) इयं गवानयन-रूपा क्रिया गवानयनगोचरप्रवृत्तिजन्या विलक्षणक्रियात्वात् स्वी-यक्रियावत् (१) इयं गवानयनगोचरा प्रवृत्तिः गवानयनधर्मिकेष्ट-साधनताज्ञानजन्या प्रवृत्तित्वात् स्वीयप्रवृत्तिवत् (२) इदं गवानय-नधर्मिकेष्टसाधनताज्ञानं गामानयेत्याकारकवाक्यजन्यं गामानयेत्या-कारकवाक्यान्वयव्यतिरेकानुविधायित्वात् (३) गोत्वावच्छिन्नविष-

यता किञ्चित्पदप्रयोज्या शाब्दबोधनिरूपितविषयतात्वात् (४) गोत्वावच्छिन्नविषयता आनयनादिपदाप्रयोज्या आनयनादिपदाघटितवाक्यजन्यशाब्दबोधनिरूपितविषयतात्वात् (५) गोत्वावच्छिन्नविषयता गोपदप्रयोज्या आनयनादिपदाप्रयोज्यत्वे सति किञ्चित्पदप्रयोज्यत्वात् (६) गोपदं गोत्वावच्छिन्ने शक्तं गोत्वावच्छिन्नविषयताप्रयोजकत्वात् (७) इति । आवापः सङ्ग्रहः उद्वापस्त्यागः । अश्वमानयेत्यत्राऽऽनयनपदस्यावापः गोपदस्योद्वापः, गां बधानेत्यत्र गोपदस्यावापः आनयनपदस्योद्वापः । गामानयेत्यत्र गवि आनयनपदवाच्यताभ्रम. आनयने गोपदवाच्यताभ्रमश्च व्युत्पित्सूनां कदाचिज्जायेतेत्यावापोद्वापयोरुपादानम् ॥

**मू * ननु सर्वत्र कार्यपरत्वाद्व्यवहारस्य कार्यपर एव व्युत्पत्तिः न सिद्धपरे इति चेन्न, काश्यां त्रिभुवनतिलको भूपतिरास्त इत्यादौ सिद्धेऽपि व्यवहारात्, विकसितपद्मे मधुकरस्तिष्ठतीत्यादौ प्रसिद्धपदसमभिव्याहारात्सिद्धेऽपि मधुकरपदादौ व्युत्पत्तिदर्शनात् ॥**

व्या ॥ नीलो घट इत्यादौ सिद्धार्थबोधकवाक्यस्थले कस्यापि प्रवृत्तिनिवृत्त्योरन्यतरस्यासम्भवेन उपयोगान्तराभावेन सिद्धपरस्थले शक्तिग्रहशाब्दबोधादिकमनङ्गीकुर्वतां गामनय गां नयेत्यादौ कृतिसाध्यताविशिष्टधात्वर्थबोधकवाक्यस्थले प्रवृत्तिनिवृत्त्योरन्यतरस्य सम्भवेन तदनुकूलशाब्दबोधं तत्सामग्रीञ्च अङ्गीकुर्वतां केषाञ्चिन्मीमांसकानां मतमुद्भावयति * नन्विति * एषामयमाशयः, शाब्दबुद्धित्वव्यापकं कार्यताविषयकशाब्दत्वं (यत्र यत्र शाब्दबुद्धित्वं तत्र तत्र कार्यताविषयकशाब्दबुद्धित्वम्) साक्षा-

त्परम्परया वा कार्यत्वनिष्ठविषयतानिरूपितविषयिताशालिशाब्द-बुद्धित्वावच्छिन्नं प्रति लिङ्लोट्तव्यप्रत्ययघटितवाक्यानां कारण-त्वमिति लिङ्लोट्तव्यप्रत्ययघटितवाक्यस्थल एव शाब्दबुद्धेरुदय इति । सर्वत्र व्यवहारस्य कार्यपरत्वादिति योजना । व्यवहारः श-ब्दप्रयोगः । सर्वत्र व्यवहारस्य व्यवहारमात्रस्येत्यर्थः । का-र्यपरत्वं कृतिसाध्यानयनादिक्रियातात्पर्येणोच्चरितत्वम् । व्यु-त्पत्तिः शक्तिग्रहः । तन्मतं खण्डयति * नेति * काश्या मिति * अत्रानुभवसिद्ध शाब्दबोधोत्पत्तेरपलापोऽनुचित इति भावः । इदमुपलक्षणम्, चैत्रपुत्रस्ते जातः कन्या ते गर्भि-णी इत्यादौ मुखप्रसादमुखमालिन्याभ्या तद्धेतुभूतशाब्दबोध-स्याङ्गीकर्तव्यत्वाच्चेति । ननु सिद्धपरवाक्यस्थले शाब्दबोधोत्प-त्तिविषये काश्यामितिस्थलमुदाहृत्य विकसितपद्म इत्यादिस्थला-न्तरानुसरणे किं बीजमिति चेन्न, काश्यामित्यत्र शाब्दबोधान-ङ्गीकारेऽपि सिद्धपदसान्निध्यस्थले शाब्दबोधस्य सर्वाभिमतस्याव-र्जनीयतया तदन्तर्भावेण सिद्धपरस्थलीयबोधोत्पत्तिनिर्धारणार्थं दृ-ष्टान्तान्तराङ्गीकरणस्योचितत्वात् ॥

**मू * लक्षणापि शब्दवृत्तिः, शक्यसम्बन्धो लक्षणा, गङ्गायां घोष इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धादेव तीरो-पस्थितौ तीरेऽपि शक्तिर्न कल्प्यते । सैन्धवादौ तु लव-णाश्वयोः परस्परसम्बन्धाभावान्नानाशक्तिकल्पनम् ॥**

व्या ॥ एतन्मते वृत्तिर्द्विविधा शक्तिर्लक्षणाचेति । आद्या निरूपिता, द्वितीया निरूप्यते * लक्षणापीति * अत्रापिशब्देन शक्तेः शब्दवृत्तित्वं समुच्चीयते । शब्दार्थयोस्सम्बन्धरूपे शक्तिलक्षणे इति प्रतियोगितासम्बन्धेन शब्दवृत्तित्वमुभयोः सम्भ-

धते। शब्दवृत्तित्वसाम्येनास्या लक्षणाया अपि निरूपणीयत्वावश्यकतासूचनाय लक्षणापि शब्दवृत्तीत्युपक्रान्तम्। गङ्गायां घोष इत्यत्र लक्ष्यीभूततीरे गङ्गापदशक्यप्रवाहस्य संयोगसम्बन्धरूपा लक्षणा वर्तते। मञ्चाः क्रोशन्तीत्यत्र लक्ष्यीभूतपुरुषेषु मञ्चपदशक्यमञ्चसंयोगो वर्तते। छत्रिणो यान्तीत्यत्र छत्रपदशक्यातपत्रसंयोगो तदातपत्रसंयुक्तसंयोगरूपो वा सम्बन्धः छत्र्यच्छत्रिसाधारणसंघत्वावच्छिन्ने लक्ष्यभूते वर्तते। काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदशक्यकाकस्य स्ववृत्तिदध्युपघातुकत्वरूपसम्बन्धः दध्युपघातुकत्वावच्छिन्ने लक्ष्यभूते वर्तते। सोऽयं देवदत्त इत्यत्र तत्पदशक्यतद्देशतत्कालवृत्तित्वविशिष्टदेवदत्तस्य इदंपदशक्यैतद्देशैतत्कालवृत्तित्वविशिष्टदेवदत्तस्य च अभेदरूपः सम्बन्धः लक्ष्ये देवदत्ते वर्तते। तत्त्वमसीत्यत्रतत्पदशक्यसर्वज्ञत्वविशिष्टचैतन्यस्य त्वंपदशक्यकिञ्चिद्ज्ञत्वविशिष्टचैतन्यस्य च अभेदरूपः सम्बन्धः लक्ष्यभूतकेवलचैतन्ये विद्यते। यष्टीः प्रवेशयेत्यत्र यष्टिसंयोगरूपस्सम्बन्धः यष्टिधरेषु लक्ष्यभूतेषु विद्यते। द्विरेफमानयपश्येत्यादौ शक्यस्य रेफद्वयस्य स्वघटितपदवाच्यत्वरूपपरम्परासम्बन्धः भ्रमरे लक्ष्ये विद्यते। अग्निर्माणवक इत्यत्र अग्निपदशक्यस्याग्ने स्वानिष्ठशुचित्वकान्त्यादिसजातीयशुचित्वकान्त्यादिमत्त्वरूपः• सम्बन्ध' लक्ष्यभूताग्निसादृश्यविशिष्टे वर्तते। एवं सिंहो माणवक इत्यत्रापि। स शक्यसम्बन्धः पूर्वोक्तस्थलेषु क्वचित्साक्षात्सम्बन्धः क्वचित्परम्परासम्बन्धश्च भवति (सम्बन्धघटितसम्बन्धः परम्परासम्बन्धः) एवमन्यत्रापिबोध्यम्। यत्र च परस्परसम्बन्धो नास्ति तत्र सैन्धवमानयेत्यादौ अश्वादौ लक्षणा नाङ्गीक्रियत एव ॥

* गङ्गायां घोष इत्यत्रेति * अत्र प्रथमं गङ्गादिपदज्ञानं, तदनु गङ्गादिपदाना शक्तिज्ञानं, तदनु तत्तच्छक्यप्रवाहाद्युपस्थितिः, तदनु शक्यार्थविषयकशाब्दबोधे जननीये घोषे प्रवाहवृत्तित्वमनुपपन्नमिति अन्वयानुपपत्तिज्ञानं, तदनु अत्रेदं पदं लाक्षणिकमिति (लक्षणाज्ञानं) लाक्षणिकत्वज्ञानं, तदनु प्रवाहाद्युपस्थितिः, तदनु तीरे घोष इति शाब्दबोधः * तीरेऽपि शक्तिर्नकल्प्यत इति * गङ्गापदस्येति शेषः। नन्वेवं सति सैन्धवादिपदाना नानार्थकत्वमनुपपन्न एकस्मिन्नर्थे शक्त्या अन्यत्र लक्षणयैव निर्वाहसम्भवादित्यत्र आह * सैन्धवादाविति * आदिपदेन हरिगवादिपदाना संग्रहः * परस्परसम्बन्धाभावादिति * संयोगादिरूपसम्बन्धाभावादित्यर्थः। यद्यत्रापि कालिकादिरूपः परस्परसम्बन्धोऽस्तीति विभाव्यते तदा उत्तरत्र वक्ष्यमाणस्य तात्पर्यग्राहकस्य प्रकरणादेरभाव एव अन्यत्र शाब्दबोधाजनने हेतुर्वक्तव्य. * नानाशक्तिकल्पनमिति * अर्थद्वयस्यापि अविलम्बितप्रतीतिविषयत्वेन प्रसिद्धतया अत्र शक्तिरत्र लक्षणेत्यत्र विनिगमनाविरहेणोभयत्रापि शक्तिकल्पनमेवोचितमिति भावः ॥

**मू * लक्षणा त्रिविधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणाचेति। यत्र वाच्यार्थस्यान्वयाभावस्तत्र जहती, यथा मञ्चाः क्रोशन्ति इति। यत्र वाच्यार्थस्याप्यन्वयस्तत्राजहती, यथा च्छत्रिणो यान्तीति। यत्र वाच्यैकदेशत्यागेनैकदेशान्वयस्तत्र जहदजहती, यथा तत्त्वमसीति! गौण्यपि लक्षणैव लक्ष्यमाणगुणसम्बन्धरूपा, यथाऽग्निर्माणवक इति॥**

व्या ॥ पूर्वं निर्दिष्टायाश्शक्यसम्बन्धरूपलक्षणायास्त्रैविध्य-माह * लक्षणा त्रिविधेति * जहल्लक्षणामुदाहरति * वाच्यार्थस्यान्वयाभाव इति * वाक्यार्थस्तु, यत्र लक्ष्यविषयकशाब्दबोधे वाच्यार्थस्यान्वयाभावः विशेष्यत्वेन विशेषणत्वेन वा शक्यार्थस्य विषयत्वाभावः । यत्तदोर्नित्यसम्बन्धात्तत्रेत्यध्याह्रियते । तत्र तद्विषयकशाब्दबोधप्रयोजिका जहल्लक्षणेति । अत्र कानिचिदुदाहरणानि प्रदर्श्यन्ते, गङ्गाया घोष इत्यत्र तीरवृत्तिर्घोष इति बोधः, अत्रान्वयानुपपत्तिर्लक्षणाबीजम् । मञ्चाः क्रोशन्तीत्यत्र पुरुषाः क्रोशनकर्तार इति बोधः, अत्राप्यन्वयानुपपत्तिर्लक्षणाबीजम् । द्विरेफ पश्येत्यादौ भ्रमरविषयकं मदिष्टसाधनंयदर्शन तदनुकूलकृतिमानयामिति बोधः । अत्राप्यन्वयानुपपत्तिरेव लक्षणाबीजम् । यष्टीः प्रवेशयेत्यत्र पुरुषकर्मकप्रवेशनं मदिष्टसाधनमिति बोधः, अत्र यष्टीनामपि प्रवेशान्वयस्याबाधिततया अन्वयानुपपत्त्यसम्भवेन तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वमवगन्तव्यम् । मञ्चाः क्रोशन्तीत्यत्र मञ्चपदस्य यथा पुरुषलाक्षणिकत्वं तथाऽत्र यष्टिपदस्यापि पुरुषमात्रलाक्षणिकत्वमेव, न तु यष्टिधरपुरुषादिलाक्षणिकत्वम् (यदि पूर्वोक्तस्थलेषु गङ्गापदस्य गङ्गासम्बन्धित्वविशिष्टतीरे मञ्चपदस्य मञ्चस्थत्वविशिष्टपुरुषेषु यष्टिपदस्य यष्टिधरेषु [यष्टिधरत्वविशिष्टपुरुषेषु] च लक्षणाङ्गीक्रियेत तदा "यत्र वाच्यर्थस्यांन्वयाभावस्तत्र जहतीति, जहतीलक्षणमनुपपन्नं स्यात् । यदि च लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका जहल्लक्षणेति जहल्लक्षणालक्षणमङ्गीक्रियेत तदा गङ्गादिपदानां गङ्गासम्बन्धित्वविशिष्टतीरादिषु लक्षणाङ्गीकारेऽपि बाधकाभावः, गङ्गादिषु लक्ष्यविशेषणेषु लक्ष्यतावच्छे-

दकधर्माणामभावात्। अत एव पूर्वोक्तस्थलेषु "यत्र वाच्यर्थस्याप्यन्वयस्तत्र अजहतीत्युक्तलक्षणानुरोधेन प्रसक्ताऽतिव्याप्तिरपि परिहृता, प्रवाहादीनां लक्ष्यतावच्छेदकरूपानाक्रान्तत्वात्। अतो जहल्लक्षणाऽजहल्लक्षणालक्षणेषु दीपिकाप्रकाशितेषु लक्ष्यतावच्छेदकरूपेणेत्यध्याहारे गङ्गादिपदाना प्रवाहतीरादिलक्षणिकत्वेऽपि न दोषगन्धः) ॥

ननु गङ्गायां घोष इत्यत्र तीरे घोष इत्येव शाब्दबोधाङ्गीकारे तीरे घोष इति शब्दप्रयोगे स्वायत्तेऽपि शैत्यपावनत्वादिप्रतीत्यर्थं प्रयुक्तस्य गङ्गापदस्य वैयर्थ्यं स्यात्, तीरांशे गङ्गासम्बन्धित्वस्य तादृशप्रतीतिजनकस्याबोधनात् इति चेन्न, प्रवाहसम्बन्धित्वस्य तीरांशे विशेषणत्वानङ्गीकारेऽपि तस्योपलक्षणत्वाङ्गीकारमात्रेणापि तादृशप्रतीत्युपपत्त्या तद्विशिष्टतीरे लक्षणानङ्गीकारेऽपि बाधकाभावात्। प्रत्युत लक्ष्यतावच्छेदकलाघवाच्च (अलङ्कारिकाः पुनः तादृशप्रतीत्यनुरोधेन विशिष्टतीर एव लक्षणामङ्गीकुर्वन्ति) केचित्तु लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा जहल्लक्षणा लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका लक्षणा अजहल्लक्षणा इति वदन्ति, तन्मते पूर्वोक्तस्थलेषु गङ्गादिपदानां विशिष्टलाक्षणिकत्वाङ्गीकारेऽपि न काप्यनुपपत्तिः, लक्ष्यतावच्छेदकस्य गङ्गादिविशेषणसाधारण्याभावात्। सर्वमतेऽपि अजहल्लक्षणोदाहरण छत्रिणो यान्ति काकेभ्यो दधि रक्ष्यतामित्येव * वाच्यार्थस्यापीति * अत्रापिनालक्ष्यसङ्ग्रहः * छत्रिण इति * नन्वत्र छत्रिपदस्य इनुप्रत्ययघटितत्वेन वाक्यत्वेन पदस्यैव शक्तत्वेन वाक्ये शक्तेरनङ्गीकारात् शक्यसम्बन्धरूपलक्षणाया वाक्येऽनङ्गीकारात् कथमत्र लक्षणोपपत्तिरितिचेन्न, छत्र-

पदस्यैव एकसार्थे लक्षणाङ्गीकार्या, इन्प्रत्ययार्थस्सम्बन्धी, तथा च एकसार्थसम्बन्धिनः (एकसंघघटकाः) गमनानुकूलव्यापारवन्त इति बोधः। अथवा प्रतिपाद्यसम्बन्ध एव लक्षणा, वाक्यशक्यसम्बन्धस्याप्रसिद्धत्वेऽपि वाक्यप्रतिपाद्यसम्बन्धस्य प्रसिद्ध्या तत्सम्बन्धरूपलक्षणाया नाप्रसिद्धिः। अथवा, काकेभ्यो दधि रक्ष्यतामित्येवात्रोदाहरण द्रष्टव्यम्। छत्रिणो यान्तीत्यत्र वाच्यच्छत्रिलक्ष्याच्छत्रिसाधारणसघत्वावच्छिन्नस्य बोधः, काकेभ्यो दधि रक्ष्यतामित्यत्र शक्यकाकलक्ष्यतदितरबिडालादिसाधारणदध्युपघातुकत्वावच्छिन्नस्य च बोधो भवतीति ज्ञेयम्। अत्र लक्ष्यतावच्छेदकरूपेणैव लक्ष्यशक्योभयबोधजननात् लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका लक्षणा अजहल्लक्षणेति लक्षणोपपत्तिः। दीपिकाया जहल्लक्षणाऽजहल्लक्षणालक्षणवाक्ययोः लक्ष्यतावच्छेदकरूपेणेत्यध्याहार्यम्, अन्यथा तयोर्लक्षणयोः परस्परोदाहरणेषु अतिप्रसङ्गा ऊह्याः। अत्र स्थलद्वयेऽपि (प्रायशः अजहल्लक्षणोदाहरणेषु) वाच्यार्थान्वयानुपपत्तेरभावात् इदं पदं एतत्तात्पर्येणोच्चरित नत्वन्यथेति तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति ज्ञेयम्। (छत्रिणो यान्तीत्यत्र छत्र्यच्छत्रिसंघो गमनकर्तेति बोधः। काकेभ्यो दधि रक्ष्यतामित्यत्र तु काकबिडालादिसंघावधिकं मदिष्टसाधनीभूतं यद्रक्षणं तत्कर्मीभूतं दधीत्येतन्मतानुसारेण बोधः। ननु गौण्या अपि लक्षणारूपत्वेन वक्ष्यमाणतया तस्याः कस्यां लक्षणायामन्तर्भाव इति चेन्न, अग्निर्माणवक इत्यत्र लक्ष्यतावच्छेदकाग्निसादृश्यरूपेण अग्निसादृश्यविशिष्टरूपस्य लक्ष्यमात्रस्य बोधनात् जहत्यामेवान्तर्भावस्य युक्तत्वात् (अत्रान्वयानुपपत्तिर्लक्षणाबीजम्)

वाच्यैकदेशत्यागेनेति * शक्यतावच्छेदकपरित्यागेनेत्यर्थः । एकदेशान्वयः व्यक्तिमात्रबोधनम् । तत्त्वमसीत्यत्र तत्पदार्थः सर्वज्ञत्वविशिष्टचैतन्यं, त्वंपदार्थः किञ्चिद्ज्ञत्वविशिष्टचैतन्यं, अस्धातोरभेदोऽर्थः, आख्यातस्याश्रयत्वम्, तथा च सर्वज्ञत्वविशिष्टचैतन्यं किञ्चिद्ज्ञत्वविशिष्टचैतन्याभिन्नमिति बोधे जननीये त्वपदार्थे तत्पदार्थाभेदो बाधित इत्यन्वयानुपपत्तिप्रतिसन्धानतः शक्यतावच्छेदकसर्वज्ञत्वकिञ्चिद्ज्ञत्वादिपरित्यागे चैतन्यरूपव्यक्तिमात्रबोधने च चैतन्य चैतन्याभिन्नमिति बोधो जायते। न च घटोघट इत्यत्रेव संशयनिवर्तकत्वाभावेन चैतन्यं चैतन्याभिन्नमिति बोधानुपपत्तिरिति वाच्यम्, चैतन्यं सर्वज्ञत्वविशिष्टचैतन्याभिन्नं चैतन्यं किञ्चिद्ज्ञत्वविशिष्टचैन्याभिन्नमिति वा बोधस्याङ्गीकारेण बाधकाभावात्, उद्देश्यतावच्छेदकाभेदसम्बन्धावच्छिन्नविधेयतावच्छेदकयोर्भेदसत्त्वात् । इदमुदाहरणं जीवब्रह्मणोरैक्यमङ्गीकुर्वतामद्वैतिना सिद्धान्तमनुसृत्योपदर्शितम् । नह्येतन्मते तत्र तादृशबोधोऽभिमन्यते, पुरोहितोऽय राजा संवृत्त इत्यत्र राजसदृशः पुरोहित इति बोधस्येव तत्सदृशस्त्वमसीति बोधस्यैवाङ्गीकारात् । वस्तुतस्तु अद्वैतिमतेऽत्र चैतन्यमात्रविषयकाखण्डाकारबोधस्यैवाङ्गीकृततया एतन्मतानुसारेण सोऽयं देवदत्त इत्यस्यैवोदाहरणस्य समुचितत्वात् । अत्र तद्देशतत्कालवृत्तित्वविशिष्टस्तत्पदार्थः, एतद्देशैतत्कालवृत्तित्वविशिष्ट इदंपदार्थः, विशेषणभेदात् द्वयोरभेदान्वयानुपपत्तौ इदानीं बाधिततया तद्देशतत्कालादितत्पदशक्यतावच्छेदकस्य एतद्देशैतत्कालादीदंपदशक्यतावच्छेदकस्य वा हाने देवदत्तः तद्देशतत्कालवृत्तित्वविशिष्टदेवदत्ताभिन्नः देवदत्तः एतद्देशैतत्कालवृत्तित्वविशिष्टदेवदत्ताभिन्न इति वा बोधेऽङ्गीकृते च

शक्यतावच्छेदकहानेन शक्यस्याहानेन च जहदजहल्लक्षणोपपत्तिः ॥

केचित्तु घटोऽनित्य इत्यत्र घटत्वस्य विशेषणत्वे तत्रानित्यत्वस्य बाधात् यथा घटत्वस्योपलक्षणतया भानं (घटत्वोपलक्षितोऽनित्य इति) अङ्गीकृतं तथा सोऽयं देवदत्त इत्यत्रापि तत्तांशस्योपलक्षणतया .(तद्देशतत्कालवृत्तित्वोपलक्षितः एतद्देशैतत्कालवृत्तित्वविशिष्टदेवदत्ताभिन्न इति) भानाङ्गीकारे बाधकाभावेन जहदजहल्लक्षणानाङ्गीकर्तव्येति वदन्ति ॥ आलङ्कारिकमतासिद्धं गौण्या वृत्त्यन्तरत्वं निराकरोति * गौण्यपीति * अग्निर्माणवक इत्यत्र तयोरभेदस्य बाधिततया गङ्गायां घोष इत्यत्रेव साक्षात्सम्बन्धाभावेऽपि स्वनिष्ठशुचित्वसजातीयशुचित्ववत्त्वरूपपरम्परासम्बन्धरूपं शक्यसम्बन्धमुपादाय लक्षणोपपत्तिर्द्रष्टव्या । अत्राग्निसादृश्यविशिष्टो माणवक इति बोधः । अत्रान्वयानुपपत्तिरेव लक्षणाबीजम् । इयं जहल्लक्षणायामन्तर्भूता * लक्ष्यमाणेति * लक्ष्यमाणो यो गुणः शुचित्वादिः तत्सम्बन्धरूपेत्यर्थः ॥

**मू * व्यञ्जनापि शक्तिलक्षणान्तर्भूता । अर्थशक्तिमूला चानुमानादिनाऽन्यथासिद्धा । तात्पर्यानुपपत्तिर्लक्षणाबीजम् । तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यम् । तात्पर्यज्ञानञ्च वाक्यार्थज्ञानहेतुः नानार्थानुरोधात् । प्रकरणादिकं तात्पर्यग्राहकम् ॥**

व्या ॥ वाहिन्यादिपदस्थले नद्याद्यर्थान्तरप्रतीत्यनुसारेण गङ्गायां घोष इत्यत्र शैत्यपावनत्वादेरशब्दवाच्यस्य प्रतीत्यनुसारेण च व्यञ्जनाया अपि वृत्त्यन्तरत्वमङ्गीकुर्वतामालंकारिकाणां मतं खण्डयति * व्यञ्जनापीति * अत्रायं भावः, वाहिन्यादिपदस्थले

प्रकरणबलात् शक्त्या प्रथमं प्राकरणिकसेनाद्यर्थबोधनेऽपि पश्चाच्छक्त्यैव नाद्याद्यर्थबोधोऽपि सम्भवति, न हि विलम्बितबोधमात्रेण तस्मिन्नर्थान्तरे शक्तिर्हीयते। गङ्गापदेन तीरमात्रबोधने तात्पर्यमनुपपन्नमिति तात्पर्यानुपपत्तिसहकृतलक्षणयैव शैत्यपावनत्वादिप्रतीतिरपि सम्भवतीति न शब्दशक्तिमूलव्यञ्जनायाश्शक्तिलक्षणाभ्यां पार्थक्यं सम्भवतीति। "गछ गच्छसि चेत्कान्त तत्रैव स्याज्जनिर्मम" इत्यत्र, हे प्रिय तव गमनोत्तर मदीयप्राणनाशो भविष्यतीत्यर्थस्य "अङ्गुष्ठेनालिखन्भूपा: पादपीठं नतानना:" इत्यत्र भूपा विषण्णा इत्यर्थस्य च शक्तिलक्षणाभ्यामनधिगम्यस्य बोधनादर्थशक्तिमूला व्यञ्जनावृत्तिरशक्यपरिहारेत्यत आह * अर्थशक्तिमूलाचेति * अनुमानप्रकारस्तु, इय मद्गमनोत्तरकालिकप्राणवियोगवती विलक्षणशब्दप्रयोक्तृत्वात्, भूपा विषण्णा नताननत्वान् अङ्गुष्ठकरणकपादपीठकर्मकलेखनवत्त्वादित्यादिरीत्या। अत्रादिपदेन सम्भावनापरिग्रह:, उत्कटैकतरकोटिकसंशयस्सम्भावना(समानकोटिकस्संशय:) औत्कट्यञ्च विषयताविशेष:। यदि पुनरस्तमेति गभस्तिमानित्यादौ ब्राह्मणादिवर्णभेदेन अनुमानाद्यजन्य: सन्ध्यावन्दनादे: कर्तव्यत्वादिबोधोऽनुभवसिद्ध: तदा व्यञ्जनावृत्तिर्दुर्निवारैवेति ध्येयम्॥ अन्वयानुपपत्तेर्लक्षणाबीजत्वे गङ्गायां घोष: मञ्चा: क्रोशन्ति सोऽयं देवदत्त: अग्निर्माणवक: द्विरेफमानयेत्यादौ अन्वयानुपपत्ते: सम्भवेऽपि यष्टी: प्रवेशय काकेभ्यो दधि रक्ष्यतां छत्रिणोयान्तीत्यादिषु अन्वयानुपपत्तेरसम्भवेन तात्पर्यानुपपत्तेरेव सर्वत्र लक्षणाबीजत्वमाह * तात्पर्यानुपपत्तिरिति॥

तत्प्रतीतिच्छेति * नन्वेवं मौनिश्लोकादितो बोधानुपपत्ति:,

तत्रोच्चरितत्वस्य कण्ठताल्वाद्यभिघातसंयोगप्रयोज्यत्वरूपस्याभावादिति चेन्न, तत्प्रतीतिच्छाया एव तात्पर्यरूपत्वाङ्गीकारात्, तस्यास्तत्रापि सत्त्वान्नानुपपत्तिः। नचैवमपि शुकाद्युच्चरितवाक्याद्बोधानुपपत्तिः शुकादिषु तादृशेच्छाया अभावादितिवाच्यम्, तत्र शुकादीच्छाया अभावेऽपि ईश्वरेच्छाया एव तादृश्याः सत्त्वान्नानुपपत्तिः * वाक्यार्थज्ञानहेतुरिति * ननु तात्पर्यज्ञानस्य वाक्यार्थज्ञानहेतुत्वमनुपपन्न नीलो घटः गामानयेत्यादौ तात्पर्यज्ञानमन्तरापि अर्थोपस्थित्यादिसामग्रीबलादेव वाक्यार्थबोधस्य सम्भवाद्व्यतिरेकव्यभिचारप्रसङ्ग इत्यत आह * नानार्थानुरोधादिति * सैन्धवमानयेत्यादौ सैन्धवपदस्याश्वे लवणे च शक्तेस्तुल्यतया अभिमतबोधनिर्वाहाय तात्पर्यज्ञानस्य कारणत्वमङ्गीकार्यमित्याशयः। ननु तर्हि नानार्थकस्थलीयबोध प्रति तात्पर्यज्ञानस्य हेतुत्वमास्तां, सर्वत्र बोधं प्रति तस्य कारणत्वं मास्त्विति चेन्न, नानार्थकस्थलीयबोधं प्रत्येव तस्य कारणत्वकल्पने कार्यतावच्छेदकगौरवप्रसङ्गेन शाब्दबुद्धिमात्रे तस्य कारणत्वप्रकल्पने कार्यतावच्छेदकलाघवात् बाधकाभावाच्च शाब्दबुद्धिमात्रे तस्य हेतुतायाः समुचितत्वात्। अमुमेवार्थं सूचयति ग्रन्थकारः तात्पर्यज्ञानञ्च वाक्यार्थज्ञानहेतुरित्यादिना। न च तर्हि नीलो घट इत्यादौ व्यतिरेकव्यभिचार इति वाच्यम्, शाब्दबुद्धिमात्रे पूर्वं तस्य कल्पनीयत्वात्। तादृशकल्पनमसहमानानां केषाञ्चिन्मते नानार्थकस्थल एव तात्पर्यज्ञानस्य हेतुत्वमङ्गीक्रियते, न तु सर्वत्र ॥

प्रकरणादिकमिति * इदं सैन्धवपदं लवणबोधेच्छयोच्चरितं भोजनप्रकरणे उच्चरितत्वादित्यादिरीत्या प्रकरणादीनां तात्पर्यग्रा-

हकत्वं ग्राह्यम् । प्रकरणादिकमित्यत्रादिपदेन संयोगविप्रयोगादेः तात्पर्यग्राहकस्य परिग्रहः ॥

**मू * नन्वर्थज्ञानार्थत्वाच्छब्दस्य अर्थमविज्ञायशब्दाध्याहारासम्भवात् अर्थाध्याहार एव युक्त इति चेन्न, पदविशेषजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्वात्, अन्यथा घटः कर्मत्वमानयनं कृतिरित्यत्रापि शाब्दबोधप्रसङ्गात् ॥**

व्या ॥ प्राभाकरं निराचिकीर्षुः स्वकं मतं दर्शयति * द्वारमिति * शब्दाध्याहार एव कर्तव्य इति नैयायिकमतम् * नन्विति * पूर्वपक्षिणोऽयमभिप्रायः, सर्वत्र शाब्दबोधप्रयोजकशा-

---

प्रकरणादिकं तात्पर्यग्राहकमित्यत्र ॥ प्रकरणादिकमित्यत्राऽऽदिपदेन संयोगविप्रयोगादेः शक्तौ तात्पर्यनिर्णायकस्य ग्रहणम् । वक्ष्यमाणाः संयोगादयः, यथा, श्लो ॥ संयोगो विप्रयोगश्च साहचर्यं विरोधिता अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः, सामर्थ्यमौचिती देशः कालो व्यक्तिस्वरादयः, शब्दार्थस्यानवच्छेदे विशेषस्थितिहेतव इति । संयोगो नाम नानार्थशब्दशक्यान्तरवृत्तितया अप्रसद्धत्वे सति तच्छक्यवृत्तितया प्रसिद्धस्सम्बन्धः, यथा सशङ्खचक्रो हरिः पूज्य इत्यत्र शङ्खचक्रयोस्संयोगः भगवद्विष्णुनिष्ठतया प्रसिद्धः यमाद्यर्थान्तराद्धरिपदं व्यावर्तयन् नारायण एव तात्पर्यं ग्राहयति ( १ ) विप्रयोगो नाम विश्लेषः, यथा "अशङ्खचक्रो हरिरित्यत्र शङ्खचक्रयोर्विश्लेषः तत्संयोगपूर्वकः हरिशब्दमिन्द्राद्यर्थान्तराद्व्यावर्तयन् विष्णौ नियमयति ( २ ) साहचर्यं नाम एकस्मिन् कार्ये परस्परापेक्षित्वम्, यथा, रामलक्ष्मणौ सीतारामौ रामहनूमन्तौ रामदशरथावित्यत्र सीतालक्ष्मणादीनां तत्तत्कार्यसाहचर्यं रामशब्दं परशुरामादितो व्यावर्तयन्

ब्दज्ञानमात्रस्य अर्थज्ञानप्रयोजकतया शब्दाध्याहाराङ्गीकर्तृमतेऽपि तस्याप्यर्थज्ञानार्थमेव सम्पादनीयतया तादृशार्थज्ञाने पुरत एव सम्पादिते लाघवम्, किञ्च "अर्थं बुद्ध्वा शब्दरचनेति, न्यायेन अर्थज्ञानमन्तरा शब्दाध्याहारस्याप्यसम्भवेन शब्दाध्याहारहेतुतया च प्रथममेवार्थाध्याहारकल्पनं समुचितमिति (शब्दाध्याहारः शब्दानुसन्धानम्। अनुपात्तस्य शब्दस्य प्रकृतशाब्दबोधोपयोगितयाऽनुसन्धानमध्याहारः, पूर्वोक्तस्य शब्दस्य प्रकृतबोधोपयोगितयाऽनुसन्धानमनुषङ्गः, शब्दाध्याहारः शब्दज्ञानम्, अर्थाध्याहारः अर्थस्मृतिः) तन्मत निराकुर्वन् स्वमतं दर्शयति * पदविशेषेति * केवलोपस्थितेः शाब्दबोधहेतुत्वे चक्षुरादिजन्यप्रत्यक्षात्मकोपस्थित्यापि शाब्दबोधप्रसङ्गेन पदजन्यपदार्थोपस्थितेः शा-

दाशरथावेव नियमयति ( ३ ) विरोधिता नाम प्रसिद्धं वैरं सहानवस्थानञ्च, यथा रामार्जुनावित्यत्र भार्गवकार्तवीर्यार्जुनवैरं रामपदं सीतारामादितो व्यावर्तयन् तद्विरोधिनि भार्गव एव नियमयति ( ४ ) अर्थो नाम चतुर्थ्याद्यभिधेयं प्रयोजनं, यथा "स्थाणुं भज भवच्छिदे" इत्यादौ भवच्छेदनादिरूपार्थः स्थाणुपदं शिव एव नियमयति ( ५ ) प्रकरणं नाम वक्तृश्रोतृबुद्धिस्थत्वम्, यथा राजानं सम्बोध्य केनचिद्भृत्येन "सर्वं जानाति देव" इत्युक्ते सति निरुक्तं प्रकरणं देवपदं भूपालार्थे नियमयति, ( ६ ) लिङ्गं नाम नानार्थशक्यान्तरवृत्तिरेकशक्यगतस्साक्षाच्छब्दवेद्यो धर्मः, यथा कुपितो मकरध्वज इत्यत्र कोपः मकरध्वजपदं मकरस्य ध्वजात् व्यावर्तयत् मन्मथ एव नियमयति ( ७ ) शब्दस्यान्यस्य सन्निधिर्नाम नानार्थपदैकार्थमात्रसंसर्ग्यर्थान्तरवाचकपदसमभिव्याहारः, यथा, "करेण राजते नाग इत्यत्र नागपदसान्निध्यं करपदं शुण्डाया करपदसान्निध्यान्नागपदं च गजे नियमयति ( ८ ) सामर्थ्यं नाम कारणता, यथा "मधु-

ब्दबोधहेतुत्वस्याङ्गीकर्तव्यतया अत्रार्थाध्याहारस्यैव कल्पने तादृशसामग्र्यभावेन शाब्दबोधानुपपत्तिरिति पिधेहीत्यादिशब्दाध्याहारस्यैव कल्पनमावश्यकमिति प्रथममर्थज्ञानं पश्चाच्छब्दानुसन्धानं तत. पुनरर्थोपस्थितिः तदनु शाब्दबोध इत्युत्पत्तिक्रमस्य प्रसिद्धतया नार्थं बुद्ध्वा शब्दरचनेति न्यायस्यानुपपत्तिः । विशेषपदस्यापि प्रयोजन दर्शयति * घटः कर्मत्वमिति * घटः कर्मत्वमनयनं कृतिरित्यादिपदज्ञानतज्जन्योपस्थितिभ्यः घट कर्मकानयनानुकूलकृतिमान् देवदत्त इति बोधानुदयेन घटमानयेत्यादिवाक्यघटकघटपदाम्पदादिज्ञानतदुपस्थितिभ्य एव तादृशबोधोदयेन च एतादृशानुपूर्वीघटकपदविशेषजन्यपदार्थोपस्थितेरेव तादृशबोधोपयोगित्वमिति नैयायिकाभिप्रायः । अत्र

ना मत्तः कोकिल" इत्यत्र कोकिलमदकारणत्वं मधुपदं वसन्ते नियमयति ( ९ ) औचिती नाम योग्यता, यथा "पातुवो दयितामुखम्" इत्यत्र कामार्तपुरुषरक्षणकर्तृत्वं मुखस्य वैमुख्ये त्राणकर्तृत्वासम्भवेन सामुख्यविशिष्टदयितामुखे दयितामुखपदं नियमयति ( १० ) देशो नाम नगरादिः, यथा "भात्यत्र परमेश्वरः" इत्यादौ इदंशब्दार्थनगरसम्बन्धः परमेश्वरपदं राजि नियमयति (११) कालो नाम दिनरात्र्यादिः, यथा "चित्रभानुर्दिने भाति "चातुर्मास्ये हरिश्शेते" इत्यादौ दिनसम्बन्धः चित्रभानुपदं सूर्यादौ चातुर्मास्यसम्बन्धः हरिपदं नारायणे च नियमयति ( १२ ) व्यक्तिर्नाम स्त्रीपुंनपुंसकलिङ्गानि, यथा "मित्रो भाति, मित्रं भाति, नभो भाति, नभा भाति" इत्यादौ पुंलिङ्गमित्रशब्दस्सूर्यं नपुंसकलिङ्गमित्रशब्दः सुहृदं नपुंसकलिङ्गनभश्शब्दः गगनं पुंलिङ्गनभश्शब्दः श्रावणमासं च बोधयति ( १३ ) स्वरो नाम उदात्तादिः, यथा "इन्द्रशत्रुः" इत्यत्र समासान्तोदात्तत्वमिन्द्रशत्रुशब्दस्य इन्द्रस्य शत्रुं बोधयति,

पदविशेषपदं तद्ज्ञानपरम्, केवलपदेभ्यस्तादृशोपस्थित्यनुदयात् । तथा च तद्ज्ञाने वृत्तिज्ञानसहकृतत्वमपि विशेषणं देयम्, अन्यथा घटमानयेत्यादौ "एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्" इति, रीत्या तादृशघटादिपदज्ञानजन्याकाशोपस्थित्यापि पूर्वोक्त-शाब्दबोधप्रसङ्गः, तन्निवेशे वृत्तिज्ञानसहकृतपदज्ञानजन्यत्वस्य वृत्तिज्ञानजन्यत्वविशिष्टपदज्ञानजन्यत्वरूपतया आकाशाद्युपस्थितौ वृत्तिज्ञानजन्यत्वाभावान्नापत्तिः ॥

**मू * पङ्कजादिपदेषु योगरूढिः, अवयवशक्तिर्योगः समुदायशक्ती रूढिः । नियतपद्मत्वज्ञानार्थं समुदायशक्तिः, अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गात् ॥**

व्या * पदानां यौगिकत्वरूढत्वयोगरूढत्वयौगिकरूढत्वभेदेन

---

पूर्वपदप्रकृतिस्वरप्राप्तमाद्युदात्तत्वं इन्द्रशत्रुकं बोधयति (१४) आदिना अभिनयादिपरिग्रहः । एते सर्वे शक्तिविशेषतात्पर्यग्राहका ज्ञेयाः ॥

वेदान्तशास्त्रे "उपक्रमोपसंहारौ, अभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये । इत्यादिना ग्रन्थतात्पर्य-निर्णायकानि षड्लिङ्गानि निर्दिष्टानि । यथा "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यत्रोपक्रमः, "ऐतदात्म्यमिदं सर्वं तत्स-त्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्यत्र उपसंहारः, "ऐतदात्म्य-मिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्यत्र नवकृत्वोऽ-भ्यासः । प्रमाणान्तरानवगतत्वम् अपूर्वता येनाश्रुतं श्रुतं भवति इत्यत्रार्थ-वादः मृल्लोहतप्तपरशुग्रहणादिदृष्टान्तैरुपपत्तिः, "आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये इत्याचार्योपदेशजनिताभिर्विचि किंत्स्यात् निरतिशयानन्दलक्षणमोक्षरूपफलावगतिः, एतैः षड्भिर्लिङ्गैः अद्वितीयं ब्रह्म वाक्यार्थतया बोध्यते" ॥

चातुर्विध्यं मनसि निधाय योगरूढ्युभयविशिष्टपदनिरूपणे तदुभयविशिष्टस्य तदन्यतरविशिष्टस्य वा पदस्य स्वरूपं सुगममित्यभिप्रायेणाह * पङ्कजादिपदेष्विति * तत्र यौगिकं पाचकादिपद, योगोऽवयवशक्तिः तयाऽर्थबोधकं यौगिकम्, तथा च अवयवशक्तिमात्रबोध्यार्थबोधकपदत्वं यौगिकत्वम् । पचधातुकप्रत्ययरूपावयवशक्तिमात्रबोध्यपाककर्तृरूपार्थबोधकत्वस्य पाचकपदे सत्त्वात्समन्वयः । रूढं गवादिपद (अश्वकर्ण्यादिपदं) रूढिः समुदायशक्तिः, तयार्थप्रतिपादक रूढम्, तथा च समुदायशक्तिमात्रबोध्यार्थप्रतिपादकपदत्वं रूढत्वम्, गवादिपदघटकवर्णसमुदायस्यैव गवादिबोधकत्वात्समन्वयः । योगरूढं पङ्कजादिपद योगरूढिभ्या परस्परसहायेनार्थप्रतिपादकं तत्, योगबोध्यार्थतावच्छेदकावच्छिन्नाभिन्नरूढिबोध्यार्थतावच्छेदकावच्छिन्नबोधकपदत्व योगरूढत्वम्, पङ्कजनिकर्त्रभिन्नपद्मत्वावच्छिन्नबोधत्कवात्तत्रसमन्वयः । यौगिकरूढं उद्भिदादिपदम्, योगरूढिभ्यां परस्परासहायेन विभिन्नार्थप्रतिपादकं तत् योगबोध्यार्थतावच्छेदकव्यधिकरणरूढिबोध्यार्थतावच्छेदकावच्छिन्नबोधकपदत्वं यौगिकरूढत्वम् । उद्भित्पदस्य ऊर्ध्वंभिनत्तीति व्युत्पत्तिसिद्धावयवशक्तिबोध्योर्ध्वदेशभेदनकर्तृतरुगुल्मादिबोधकत्वस्य रूढ्युपस्थापितोद्भिन्नामकयौगिकार्थभिन्नयागविशेषबोधकत्वस्य च उद्भित्पदे सत्त्वात्समन्वयः । पङ्कजादिपदानां यौगिकत्वमात्राङ्गीकारे दोषमुद्भावयति * कुमुदेऽपीति * कुमुदस्यापि पङ्कजनिमत्त्वेन तत्रापि पङ्कजपदव्यवहारापत्तिरिति भावः । तस्य रूढत्वमात्राङ्गीकारे स्थलपद्मादावपि पङ्कजपदप्रयोगप्रसङ्गः, नचेष्टापत्तिः, पङ्कोत्पन्नपद्मत्वावच्छिन्न एव तद्व्यवहारात् ॥

**मू * इतरान्विते शक्तिरिति प्राभाकराः । अन्वयस्य वाक्यार्थतया भानसम्भवादन्वयांशेऽपि शक्तिर्नकल्पनीयेति गौतमीयाः ॥**

व्या ॥ अन्वयः संसर्गः, अन्विते संसर्गविशिष्टे, इतरान्विते इतरप्रतियोगिकसंसर्गविशिष्टे, इतरपदस्य इतरप्रतियोगिकत्वसूचनार्थतया इतरप्रतियोगिकत्वस्य प्रयोजनाभावेन परित्यागे अन्विते शक्तिरिति फलितम् । तथा च घटमानयेत्यादौ घटपदस्य समवायविशिष्टघटे अम्पदस्य आधेयत्वविशिष्टकर्मत्वे आङ्पूर्वकनयधातोः निरूपकत्वविशिष्टानयने आख्यातस्यानुकूलताविशिष्टकृतौ च शक्तिरङ्गीकार्या, तथा च (घटत्वविशिष्ट) घटनिष्टकर्मतानिरूपकानयनानुकूलकृतिमान् देवदत्त इति तत्तत्संसर्गविषयकबोधोपत्तिरिति प्राभाकराणामाशयः । अत्रायं भावः प्राभाकराणाम्, तत्तद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति वृत्तिज्ञानाधीनतत्तदुपस्थितित्वेन हेतुतायाः कृप्तया संसर्गांशे शक्त्यनङ्गीकारे संसर्गोपस्थितिरूपकारणाभावेऽपि संसर्गविषयकशाब्दबोधोत्पत्त्या व्यतिरेकव्यभिचारप्रसङ्गेन संसर्गांशेऽपि शक्तिकल्पनमावश्यकमिति । यदि च सांसर्गिकविषयताभिन्नतत्तन्निष्ठविषयताशालिशाब्दबुद्धित्वावच्छिन्नंप्रत्येव वृत्तिज्ञानाधीनतत्तदुपस्थितत्वेन हेतुत्वमुच्येत तदा कार्यतावच्छेदकगौरवप्रसङ्गः । एवञ्च संसर्गविशिष्टो घटपदवाच्य इत्यादिशक्तिज्ञानमेव शाब्दबोधप्रयोजकमिति ज्ञेयम् । केचित्तु इतरान्विते शक्तिरित्यस्य कार्यान्विते (कार्यत्वान्विते) साक्षात्परम्परया वा कृतिसाध्यत्वान्विते) शक्तिरित्यर्थमाहुः । तदसङ्गतम्, अन्वयस्य वाक्यार्थत-

येत्युत्तरग्रन्थविरोधात्, "काश्यां त्रिभुवनतिलको भूपतिरास्ते, इत्यादौ सिद्धार्थपरवाक्यस्थलेऽपि व्युत्पत्तेर्व्यवस्थापिततया पूर्वतनतद्ग्रन्थविरोधात् पुनस्तद्विचारे पौनरुक्त्याच्च ॥

* अन्वयस्य वाक्यार्थतयेति * अन्वयस्य संसर्गस्य । वाक्यार्थतया वाक्यस्यार्थत्वेन पदसमभिव्याहारबलात् (आनुपूर्वीबलात्) आकांक्षारूपसामग्रीबलादित्यर्थः । नैयायिकानामत्रायं भावः, वृत्तित्वस्य शक्तिलक्षणासाधारणस्यानुगत्याभावेन तत्तद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति वृत्तिज्ञानाधीनतत्तदुपस्थितित्वेन अनुगतकार्यकारणभावाभावेन तद्विषयकशाब्दबुद्धिं प्रति तच्छक्तपदज्ञानजन्यतदुपस्थितित्वेन एकस्याः कारणतायाः तल्लाक्षणिकपदज्ञानजन्यतदुपस्थितित्वेन अपरस्याः कारणतायाः कल्पनीयतया तच्छक्तपदाज्ञनजन्यतदुपस्थित्युत्तरं तल्लाक्षणिकपदज्ञानजन्यतदुपस्थित्यव्यवहितोत्तरतद्विषयकशाब्दबोधप्रसङ्गेन तल्लाक्षणिकपदज्ञानजन्यतदुपस्थित्युत्तरं तच्छक्तपदज्ञानजन्यतदुपस्थित्यव्यवहितोत्तरतद्विषयकशाब्दबोधप्रसङ्गेन च एतदन्वयव्यभिचारवारणाय तच्छक्तपदज्ञानजन्यतदुपस्थित्यव्यवहितोत्तरशाब्दबुद्धित्वावच्छिन्नं प्रति तच्छक्तपदज्ञानजन्यतदुपस्थितित्वेन तल्लाक्षणिकपदज्ञानजन्यतदुपस्थित्यव्यवहितोत्तरशाब्दबुद्धित्वावच्छिन्नं प्र ति तल्लाक्षणिकपदज्ञानजन्यतदुपस्थितित्वेन च पृथक्कार्यकारणभावस्य कल्पनीयतया सामान्यकार्यकारणभावाभावेन पूर्ववत् व्यतिरेकव्यभिचाराप्रसक्त्या संसर्गांशे शक्त्यङ्गीकारावश्यकता नास्तीति ॥

(इदमुपलक्षणम्, प्राभाकरमते दोषान्तरमप्यस्ति, तथा हि, 'घटमानयेत्यादौ अम्पदादीनां कर्मत्वत्वविशिष्टकर्मत्वादौ शक्तिम-

ङ्गीकृत्य निरूपितत्वाविशिष्टकर्मत्वादौ लक्षणां वा अनङ्गीकृत्य निरूपितत्वविशिष्टकर्मत्वादावपि शक्तिरेव यद्यङ्गीक्रियेत तदा स्वरूपसम्बन्धेन कर्मत्वत्वविशिष्टकर्मत्वादावपि पृथक् शक्तेरङ्गीकर्तव्यतया महागौरवं स्यात्, अपि च घटमानयेत्यत्र घटपदस्य समवायविशिष्टघटे शक्तेः प्रकल्पनेऽपि नीलो घट इत्यादौ घटपदस्याभेदविशिष्टघटेऽपि शक्त्यन्तरस्य कल्पनीयतया एव स्थलभेदेन सम्बन्धान्तरविशिष्टघटादावपि शक्तेः कल्पनीयतया एकैकस्य घटादिपदस्यैव तत्तत्संसर्गविशिष्टेषु घटेषु अनेकशक्तीनां कल्पनीयतया महागौरवम्। अत एव निरूपितत्वाविशिष्टकर्मत्वत्वावच्छिन्ने एकस्या एव शक्तेरङ्गीकारे पूर्ववत् शक्तिद्वयाङ्गीकारप्रयोज्यगौरवाभाव इत्यपि नैव वक्तुं शक्यते, घटादिपदानां स्थलभेदेन तत्तत्सम्बन्धविशिष्टघटादौ शक्तीनामनेकानां कल्पनीयतया प्रकारान्तरेण महागौरवस्य तादवस्थ्यात् इति)

**मू * आकाङ्क्षेति * आकाङ्क्षादिज्ञानमित्यर्थः। अन्यथा आकाङ्क्षादिभ्रमाच्छाब्दधीर्नस्यात्। आकाङ्क्षा लक्षयति * पदस्येति * योग्यतालक्षणमाह * अर्थेति * सन्निधिलक्षणमाह * पदानामिति * अविलम्भेन पदार्थोपस्थितिस्सन्निधिः, उच्चारणन्तु तदुपयोगितयोक्तं * गौरश्च इति * घटः कर्मत्वमिति अनाकाङ्क्षोदाहरणं द्रष्टव्यम्॥**

व्या॥ मूले आकांक्षादिरहितपदसमुदायात् शाब्दबोधापत्तिवारणाय आकांक्षादेश्शाब्दधीहेतुत्वमभिहितम्। शाब्दबोधस्य आकांक्षादिज्ञानान्वयव्यतिरेकानुविधायितया वास्तविकाकांक्षादिसत्त्वासत्त्वयोस्तत्राप्रयोजकतया भ्रमप्रमासाधारणाका-

ङ्क्षादिज्ञानत्वावच्छिन्नस्यैव तत्कारणत्वं वक्तव्यमिति नवीनानामभिप्रायमुद्घाटयति * आकांक्षादिज्ञानमितीति * आदिपदाद्योग्यत्वादिपरिग्रहः । तर्कसङ्ग्रहसर्वस्वे मूलोक्ताकांक्षा निर्वचनं कृतम् । तथा च यत्पद निष्ठशाब्दबोधजनकत्वाभावः यत्पदान्तराभावप्रयुक्तः तत्पदाव्यवहितोत्तरवर्तितत्पदत्वज्ञान शाब्दबोधे हेतुरित्यर्थः ॥

* योग्यतालक्षणमाहेति * मतभेदेन योग्यता द्विविधा, प्राचीनमते एकपदार्थे अपरपदार्थवत्त्वम्, नवीनमते एकपदार्थे अपरपदार्थबाधनिश्चयाभावः योग्यतेत्यभ्युपेयते । प्राचीनमते तद्ज्ञानमेव शाब्दधीहेतुः । नवीनमते तु स्वरूपत एव हेतुः (तादृशबाधनिश्चयाभाव एव हेतुः, न तु तद्ज्ञानमित्यर्थः) प्राचीनमते तादृशार्थनिष्पत्तिप्रकारस्तु, अत्र एकपदार्थे इत्यध्याहारः कर्तव्यः । अत्र बाधपदं सम्बन्धाभावपरम्, अबाध. सम्बन्धाभावाभावः सम्बन्धरूपः, अर्थपदमपरपदार्थपरम् । तथा च एकपदार्थे अपरपदार्थसम्बन्धो योग्यतेति फलितम्, अपरपदार्थसम्बन्धोऽपरपदार्थवत्त्वमेवेति । नवीनमते तु बाधपदं बाधनिश्चयपरम्, अबाधः बाधनिश्चयाभावः, एकपदार्थ इत्यत्राप्यध्याहारः कार्यः । तथा च एकपदार्थविशेष्यकः अपरपदार्थबाध (अपरपदार्थाभाव) प्रकारको यो निश्चयः तादृशनिश्चयाभावः (तादृशनिश्चयविशेष्यत्वाभावो) योग्यतेत्यभिप्रायः । प्रतिबन्धकाभावविधया हेतुरित्यर्थः

* सन्निधिलक्षणमाहेति * परस्परव्यवधानाभावविशिष्टं पदकर्मकमुच्चारणं सन्निधिरिति यथाश्रुतमूललभ्योऽर्थः । (तत्र पदानामित्यत्र षष्ठ्याः कर्मत्वं अविलम्बेनेत्यत्र तृतीयाया वैशिष्ट्यञ्च पदार्थो बोध्यः) पदार्थोपस्थितिरिति * परस्परव्यवधानाभावविशिष्टा पदार्थोपस्थि-

तिरेव सन्निधिः, उच्चारणस्य सन्निधित्वे कण्ठताल्वाद्यभिघातसंयोगघटितस्य तस्य मौनिश्लोकादिस्थलेऽभावाच्छाब्दबोधाभावप्रसङ्ग इति ॥ ननु आकांक्षायाः शाब्दधीहेतुत्वेऽभिहित एव सन्निधेरपि (सिद्धत्वात्) चरितार्थत्वात् तस्या हेतुत्वकथनमनावश्यकमिति चेन्न, अविलम्बेन पदार्थोपस्थितिस्सन्निधिः तादृशतत्पदाव्यवहितोत्तरतत्पदत्वज्ञानमाकांक्षेति तद्विषयभेदादेव तयोर्भेदस्य पार्थक्येन निरूपणप्रयोजकस्य विद्यमानत्वात् । नन्वेवमपि आकांक्षाज्ञानादेव सन्निध्यात्मकज्ञानस्यापि सिद्धत्वात् पुनस्सन्निधेः कारणत्वकथनमनावश्यकमिति चेन्न, प्रकृतिप्रत्यययोरव्यवधानं तद्ज्ञानं वा आकांक्षा, सुप्तिङन्तपदानामव्यवधानेनोच्चारणं सुप्तिङन्तपदार्थस्याव्यवधानेनोपस्थितिर्वासन्निधिरिति भेदस्य सत्त्वेन तयोः पृथक्कथनस्य न्याय्यत्वात् । अत एव सन्निधेरेकस्या एव हेतुत्वकल्पने आकाक्षायाश्चारितार्थ्यमिति शङ्काऽपि निरस्ता ॥

**मू * वैदिकस्य विशेषमाह * वैदिकमीश्वरोक्तत्वादिति * ननु वेदस्यानादित्वात् कथमीश्वरोक्तत्वमिति चेन्न, वेदः पौरुषेयः वाक्यसमूहत्वात् भारतादिवत् । नच स्मर्यमाणकर्तृकत्वमुपाधिः, गौतमादिभिः शिष्यपरम्परया वेदेऽपि कर्तृस्मरणेन साधनव्यापकत्वात् । तस्मात्तेऽपानात्त्रयो वेदा अजायन्तेति श्रुतेश्च । ननु वर्णा नित्याः स एवायं गकार इति प्रत्यभिज्ञाबलात् तथा च कथं वेदस्यानित्यत्वमिति चेन्न, उत्पन्नो गकारो विनष्टो गकार इति प्रतीत्या वर्णानामनित्यत्वात् । सोऽयं गकार इति प्रत्यभिज्ञायाः**

सेयं दीपज्वालेतिवज्ज्ञात्यालम्बनत्वात् । वर्णानां नित्यत्वेऽपि अनुपूर्वीविशिष्टवाक्यस्यानित्यत्वाच्च, तस्मादीश्वरोक्तो वेदः । मन्वादिस्मृतीनामाचाराणाञ्च वेदमूलकतया प्रामाण्यम्, स्मृतिमूलवाक्यानामिदानीमनध्ययनात्तन्मूलभूता काचिच्छाखा उत्पन्नैवेति कल्प्यते । ननु पठ्यमानवेदवाक्योत्सादनस्य कल्पयितुमशक्यतया विप्रकीर्णवादस्यायुक्तत्वात् नित्यानुमेयो वेदो मूलमिति चेन्न, कदापि वर्णानामानुपूर्वीज्ञानाभावेन बोधकत्वासम्भवात् ॥

व्या ॥ वैदिकर्माश्वरोक्तत्वादितीति * वेदाना नित्यसर्वज्ञपरमेश्वरप्रणीतत्वेन प्रामाण्यमिति नैयायिकाः । वेदानां नित्यत्वेन निरस्तसमस्तपुन्दूषणतया प्रामाण्यमिति अध्वरमीमांसकाः । वेदानां प्रमाणान्तरानवगतार्थबोधकत्वेन प्रामाण्यमिति वेदान्तिनः ॥ वेदस्यानादित्ववादी मीमांसकः शङ्कते * नन्विति * नैयायिकः

---

वैदिकमीश्वरोक्तत्वादित्यत्र । अत्र जैमिनीयमतानुवादेन वेदनिरूपणं संक्षेपतः क्रियते । वेदयतीति वेद इति व्युत्पत्त्या प्रमाणान्तरानवगतार्थप्रकाशकः अपौरुषेयवाक्यं वेदः । वेदः स्मृतिराचारश्च प्रमाणम्, यदाह " वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्, आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" इति । तत्र वेदः स्वतन्त्रप्रमाणम् । वेदमूलकत्वेन (तदर्थकवेदानुमापकतया) स्मृतेः प्रामाण्यम् । आचारस्य वेदस्मृत्युभयमूलत्वेन प्रामाण्यम् । अत्र स्मृतिपदं पुराणेतिहासादीनामुपलक्षणम् । वेदो द्विविधः मन्त्ररूपो ब्राह्मणरूपश्चेति, प्रयोग (अनुष्ठान) कालीनार्थस्मरणहेतुभूतं मन्त्रम्, यथा "इषेत्वेति शाखामाच्छिनत्ति" इति । विधिनिषेधान्यतरविधायकं

वेदस्येश्वरोक्ततामनुमानेन व्यवस्थापयति * वेद इति * मूले ईश्वरोक्तत्वमीश्वराधीनोत्पत्तिमत्त्वं सादित्वं वा ज्ञेयम्, नत्वीश्वरोच्चरितत्वरूपमेव तत्, तस्य तद्रूपत्वे वेदस्यानादित्ववादिमतेऽपि तादृशेश्वरोक्तत्वस्याक्षततयाऽसङ्गत्यापत्तेः। अत्र पौरुषेयत्वमपि पुरुषाधीनोत्पत्तिमत्त्वं उत्पत्तिमत्त्वरूपं वा ज्ञेयम्, न तु केवलपुरुषोच्चरितत्वरूपं तत्, वेदस्यानादित्ववादिगुरुमतेऽपि शिष्यपरम्परया वेदे पुरुषोच्चरितत्वस्य सत्त्वेन असङ्गत्यापत्तेः। ब्रह्ममीमांसकमते "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदः" इति श्रुत्या वेदे उत्पत्तिमत्त्वश्रवणेऽपि "य

---

वाक्यं ब्राह्मणम्, यथा "अग्निहोत्रं जुहुयात्" इति, "न कलञ्जं भक्षयेत्" इत्यादि। ब्राह्मणशेषः (ब्राह्मणाङ्गभूतः) अर्थवादः। अस्य च विधेयप्राशस्त्यप्रतीतिजननद्वारा विधिवाक्येनैकवाक्यतामापन्नः प्रमाणं भवति। अर्थवादः विधिवाक्यशेषत्वेन वेदविभाजकतावच्छेदकधर्माश्रयत्वेन न परिगणितः॥ स च वेदः प्रकारान्तरेण पञ्चविधः विधिमन्त्रनामधेयनिषेधार्थवादभेदात्। तत्राज्ञातार्थज्ञापको वेदभागो विधिः, यथा "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति॥ प्रयोगसमवेतार्थस्मारको मन्त्रः, यथा "इषेत्वेति छिनत्ति" इति. एषां तादृशार्थस्मारकत्वेनैव साफल्यम्, मन्त्रैरेव मन्त्रार्थः स्मर्तव्य इति नियमात्, न तु तदुच्चारणमात्रादृष्टादिफलान्तरसम्पत्तिः, सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात्॥ "उद्भिदा यजेत पशुकामः" इति वाक्यं उद्भिन्नामकयागनामधेयबोधकम्, "राजा राजसूयेन स्वाराज्यकामो यजेत" इति वाक्यं राजसूयनामधेयबोधकम्, नामधेयत्वञ्च निमित्तचतुष्टयाद्भवति, मत्वर्थलक्षणाभयात् वाक्यभेदभयात् तत्प्रख्यशास्त्रात् तद्व्यपदेशाच्च, उद्भिदा यजेतेत्यत्र उद्भिच्छब्दस्य नामधेयत्वं मत्वर्थलक्षणाभयात्॥

एव वेदो देवदत्तेनाधीतस्स एव मयाऽप्यधीतः" इति प्रत्यभिज्ञानुरोधेन लौकिकशब्दानामिव वेदस्य द्वित्रिक्षणमात्रावस्थायित्वस्य अङ्गीकर्तुमशक्यतया वर्णपदवाक्यसमुदायरूपस्य वेदस्य वियदादिवत् सृष्टिकालीनोत्पत्तिकत्वं प्रलयकालीननाशवत्त्वञ्चाङ्गीक्रियते, तथा च तन्मते पौरुषेयत्वं सजातीयोच्चारणानपेक्षोच्चारणविषयत्वरूपमेव, तद्भारतादावस्ति, सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीक वेद विरचितवान् न तु तद्विजातीय वेदम्, अतः सजातीयोच्चारणापेक्षोच्चारणवि-

---

निवर्तकं वाक्यं निषेधः, यथा "न कलञ्जं भक्षयेत्" इत्यादि, अयञ्च निषेध· अनिष्टसाधनत्वमाक्षिपन् ततो निवर्तयति ॥ विधेयगतप्राशस्त्यप्रतिपादकः कथासन्दर्भोऽर्थवादः । स च चतुर्विधः निन्दाप्रशंसापरकृतिपुराकल्पभेदात्, निन्दार्थवादो यथा, "असत्रं वा एतत् यदछन्दो मम् । अश्रुजं हि रजतं यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति" इति ॥ प्रशंसार्थवादो यथा, "शोभतेऽस्य मुखं य एवं वेद, वायुर्वै क्षेपिष्ठा" इत्येवमादिः ॥ परेणेदं महता पुरुषेण कर्म कृतमिति प्रतिपादकोऽर्थवादः परकृतिः; यथा "अग्निर्वा अकामयत" इत्यादि ॥ परप्रवक्तृ (परप्रयुक्त) कार्यादिप्रतिपादकः पुराकल्पः । यथा "तमशपद्धियाधियात्वावध्यासुरिः" इत्यादि ॥ अत्र निन्दार्थवादस्यापि विधेयान्यानिन्दाद्वारा विधेयप्राशस्त्यपरत्वम्, अश्रुजमित्यादिरजतनिन्दाद्वारा विधेयभूतरजतदाननिषेधप्राशस्त्यपरत्वं ग्राह्यम् । इतरेषां त्रयाणां साक्षात्प्राशस्त्यपरत्वमेव ॥

प्रसङ्गाद्विधित्रयं निरूप्यते, विधिस्त्रिविधः अपूर्वविधिः नियमविधिः परिसङ्ख्याविधिश्चेति । तत्र यो विधिः अत्यन्ताप्राप्तमर्थं प्रापयति सोऽपूर्वविधिः । यथा दर्शपूर्णमासप्रकरणे "व्रीहीन् प्रोक्षति" इति । एतद्विध्यभावे दर्शपूर्णमासीयव्रीहिषु प्रोक्षणं कथ-

पर्यैत्वस्यैव वेदे विद्यमानतया तादृशपौरुषेयत्वाभावेन अपौरुषेयत्वं वेदानां वेदान्तिमते ईदृशं सम्भवतीति ज्ञेयम् । अध्वरमीमांसकमते तु पुरुषाधीनोत्पत्तिमत्त्वमेव पौरुषेयत्वमङ्गीकुर्वन्ति, तन्मते "अस्य महतो भूतस्य" इति श्रुतिश्च वेदस्याभिव्यक्तिपरा नोत्पत्तिपरेत्यङ्गीक्रियते, तथा च वेदस्य न क्षणिकत्वं वियदादिवदुत्पत्तिविनाशशीलत्व वा अङ्गीक्रियते, किन्तु प्रागभावाप्रतियोगित्वविशिष्टध्वंसाप्रतियोगित्वरूपं नित्यत्वमेवाङ्गीक्रियते "वेदस्याध्ययन सर्वं गुर्वध्ययनपूर्वकम्, वेदाध्ययनसामान्यात् अधुना-

---

मपि न प्राप्नोति, एतद्विधिसत्त्वे तु तत्सम्बन्धिव्रीहिषु प्रोक्षणं प्राप्नोत्येवे त्यत्यन्ताप्राप्तप्रोक्षणप्रापकत्वादयमपूर्वविधिः (१) यो विधिः पक्षे प्राप्तमर्थं नियमयति स नियमविधिः, यथा तत्रैव "व्रीहीनवहन्ति" इति, एतद्विध्यभावे दर्शपौर्णमासिकेषु व्रीहिप्रूत्पत्तिवाक्यावगतपुराडाशोपयोगितण्डुलनिष्पत्त्यनुकूलवैतुष्यरूपकार्याय अवहननवत्कदाचिन्नखविदळनमपि प्राप्नुयादिति तस्मिन् पक्षे अवहननस्य प्राप्त्यभावात् कार्यान्यथोपपत्ते अवहननस्य पाक्षिकी प्राप्तिस्स्यात्, सत्यस्मिन् विधौ अवहनेनैव वैतुष्यं कार्यमिति नियमे सति विदळनं सर्वात्मना निवर्तत इति नियमविधिरयम् । न च वैतुष्यस्य नखविदळनेनापि सम्भवादवहनननियमो व्यर्थः प्रयोजनाभावादिति वाच्यम्, अवघातेनैव वैतुष्यकरणे किञ्चिददृष्टं जन्यत इति नियमादृष्टाङ्गीकारात् । नियमेन दृष्टकार्यालाभेऽपि अदृष्टस्योत्पत्तेः, तच्चापूर्वं यागोत्पत्त्यपूर्वद्वारा फलापूर्वे उपयुज्यते, तेन नियमापूर्वाभावे फलापूर्वमेव नोत्पद्यत इति कल्पनात् नियमापूर्वस्य न वैयर्थ्यम्, एवं व्रीहिसोमादिनियमविधिषु बोध्यम् (२) द्वयो समुच्चित्य प्राप्तावितरनिवृत्तिफलको विधिः परिसंख्याविधिः, यथा चयनप्रकरणे "इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते, इत्यश्वरशनाग्रहणाङ्गत्वेन मन्त्रविधिः । एतद्विध्यभावे हि रशनाग्रहण-

ध्ययनं यथा " इत्यादिना, वेदापौरुषेयत्वस्य साधितत्वात्, यः कल्पस्सकल्पपूर्वक इति न्यायेन संसारस्यानादित्वात् ईश्वरस्य च सर्वज्ञत्वादीश्वरोगतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वा उपदिशतीत्येतावतैवोपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य रचितत्वकल्पनाया अन्यायत्वात् । अतस्तन्मते वेदस्य न पौरुषेयत्वप्रसक्तिः ॥

ननु अष्टादशपुराणानां कर्ता सत्यवतीसुत इत्यादिवचनानुसारेण भारतादीनां कर्तृस्मरणेन भारताद्यन्तर्भावेण साध्यव्यापकत्वं पक्षान्तर्भावेण साधनाव्यापकत्वञ्च सम्भवतीति नेद-

प्रकाशको मन्त्रः रशनाऽऽदानप्रकाशनसामर्थ्यरूपाल्लिङ्गादश्वरशनाऽऽदान इव गर्दभरशनादानेऽपि नियमेन प्राप्नुयात्, सत्यस्मिन् विधौ अनेन मन्त्रेण अश्वरशनामेवाददीत न तु गर्दभरशनां सा तु तूष्णीमेव ग्राह्या ,इति गर्दभरशनातो मन्त्रनिवृत्तिर्भवतीति द्वयोस्समुच्चत्य प्राप्तावितरनिवृत्तिफलकत्वादयं परिसंख्याविधिः ( ३ ) ।

प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं सम्भवतीत्युच्यते । तत्राङ्गत्वबोधकप्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभेदेन षट् । तत्र "दध्ना जुहुयात्" अत्राग्निहोत्रवाक्यप्राप्तं होमं जुहुयादित्यनोद्दिश्य तत्करणत्वेन तृतीयाश्रुत्या दधि विधीयत इति श्रुत्या-दध्नोऽङ्गत्वम् ( १ ) लिङ्गं नाम सामर्थ्यम् । तच्च द्विविधं अर्थगतंशब्दगतञ्चेति, आद्यं यथा, "स्रुवेणावद्यति" इत्यवदानसामान्यशेषत्वावगमेऽपि स्रुवस्य सामर्थ्यरूपाल्लिङ्गात् आज्यसान्नाय्यादिद्रवद्रव्यावदानविशेषाङ्गत्वं, स्रुवेण पुरोडाशाद्यवदानस्य कर्तुमशक्यत्वात् ॥ शब्दगतं तु लिङ्गमर्थप्रकाशनसामर्थ्यम् । यथा "अग्नये जुष्टं निर्वपामि" इति, मन्त्रस्य निर्वापप्रकाशनसामर्थ्यरूपाल्लिङ्गात् निर्वापाङ्गत्वम् । यस्य मन्त्रस्य यत्प्रकाशनसामर्थ्यं तस्य तदङ्गत्वम् ( २ ) पदान्त-

मनुमानं वेदे पौरुषेयत्वं साधयितुं शक्नोतीत्याशङ्कायामाह * नचेति * साधनाव्यापकत्वं विघटयति * गौतमादिभिरिति * वेदे गौतमादिभिः शिष्यपरम्परया कर्तृस्मरणे विप्रतिपन्नं प्रति शब्दरूपप्रमाणान्तरेण "तुष्यतु दुर्जनः" इति, न्यायेन पौरुषेयत्वं स्थिरीकरोति * तस्मात्तेपानादिति * तेपान ब्रह्मणो मुखमिति कोशबलेन तेपानशब्दस्य ब्रह्ममुखार्थकतया इयं श्रुतिः वेदत्रयस्य ब्रह्ममुखाधीनोत्पत्तिं निस्संशयं प्रतिपादयति । अत्राप्यध्वरमीमांसका अजायन्तेत्यस्याभिव्यक्ता इत्येवार्थं ब्रुवन्ति, किं बहुना,

---

रसमभिव्याहारो वाक्यम् । यथा, 'इषेत्वोत छिनत्ति" इति । अत्र च्छेदनाङ्गत्वेन इषेत्वेतीत्यादिमन्त्रः वाक्येन विधीयते । यद्वा, "अग्नये जुष्टम्" इत्यत्रैव अग्नये जुष्टमित्यादिपदानां निर्वपामीत्यनेनैकवाक्यतापन्नत्वान्निर्वापाङ्गत्वम् ( ३ ) प्रकरणं नाम परस्पराकाङ्क्षा । यथा, "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति, अत्र दर्शपूर्णमासाभ्यां स्वार्गापूर्वं कुर्यादित्युक्ते भवत्याकांक्षा कथमाभ्या स्वर्गापूर्वं कर्तव्यमिति । तथा फलवदाग्नेयादिसन्निधौ "समिधो यजति तनूनपातं यजत्याज्यभागौ यजति" इत्यादिभिः, प्रयाजादयः फलरहिताः श्रुताः, तेषां स्ववाक्येषु फलाश्रवणात् भवति प्रयोजनाकाङ्क्षा किमेतेषां प्रयोजनमिति । ततश्च प्रयाजादीनां प्रयोजनाकांक्षाया दर्शपूर्णमासयोः कथंभावाकांक्षायां परस्पराकाङ्क्षालक्षणेन प्रकरणेन प्रयाजादीनां सर्वेषां दर्शपूर्णमासाङ्गत्वं निश्चीयते ( ४ ) स्थानं नाम सन्निधिः । यथा सान्नाय्यपात्रसन्निधौ "शुन्धध्वम्" इति मन्त्रस्य पाठात् सन्निधानात्सान्नायपात्रप्रोक्षणाङ्गत्वम् ( ५ ) समाख्या संज्ञा । यथा, अध्वर्युकाण्डप्रतिपादिते कर्मजाते आध्वर्यवसमाख्यावशादध्वर्योः कर्तृत्वेनाङ्गत्वम् । तथा "ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" इत्यादिषु काम्येष्टिसमाख्यातेषु ऐन्द्राग्नादियागेषु का-

यत्र यत्र नैयायिका वेदस्योत्पत्तिं निर्धारयन्ति तत्र तत्राध्वरमीमांसका अभिव्यक्तिमेव स्थिरीकुर्वन्ति । ब्रह्ममीमांसकास्तु पूर्वसर्गीयवेदानुपूर्वीसमानानुपूर्वीकः वेदः उत्पन्न इत्यर्थमाहुः ॥

प्रकारान्तरेण वेदस्य नित्यतां साधयितुं जैमिनीयः प्रयतते * ननु वर्णा इति * अत्र प्रतीतौ भासमानः एतत्कालीनगकारतत्कालीनगकारयोरभेदः वर्णानामनित्यत्वे न सम्भवति, वर्णानां नित्यत्वे च वर्णसमुदायात्मकवेदस्य नित्यत्वं निर्विवादमित्यर्थः । नैयायिको वर्णानां नित्यत्वं खण्डयति * उत्पन्नो गकार इति * वर्णानामनित्यत्वाङ्गीकारे सोऽयं गकार इति प्रत्यभिज्ञाया अनुपपत्तिः इत्यत आह * दीपज्वालेति * तद्दीपज्वालासजातीया एतद्दीपज्वालेत्यर्थः, साजात्यञ्च दीपज्वालात्वादिना बोध्यम् । अभ्युपेत्यवादमनुसृत्याह * वर्णानां नित्यत्वेऽपीति * इषेत्वेत्यादावानुपूर्वी इकारोत्तरषकारोत्तरैकारोत्तरत्वादिघटिता । तत्रोत्तरत्वञ्च क्षणघटितं वाच्यम् । एवञ्च वर्णानां नित्यत्वाङ्गीकारेऽपि क्षणाद्यात्मकखण्डकालस्यानित्यतया तद्घटितानुपूर्व्या अप्यनित्यतया तद्विशिष्टवर्णसमुदायात्मकवेदस्य सुतरामनित्यत्वस्याङ्गीकर्तव्यतया तद्घटकवर्णानामेवानित्यत्वस्वीकारः समुचित इति भावः (क्षणे तत्तद्वर्णाव्यवहितोत्तरत्वञ्च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपं

---

म्येष्टियाज्यापुरोनुवाक्याकाण्डसमाख्यावशात् "उभावामिन्द्राग्नी" इत्यादीनां याज्यानुवाक्यात्वेन विनियोगः । विनियोगो नाम अङ्गत्वेनान्वयः । श्रुत्यादीनामेकत्र समावेशे पूर्वपूर्वस्य प्राबल्यम्, उत्तरोत्तरस्य दौर्बल्यं ज्ञेयम् ( ६ ) इति मीमांसापरिभाषानिर्दिष्टस्य ग्रन्थस्यात्यन्तोपयुक्ततया अनुवादः प्रदर्शितः ॥

वक्तव्यम् । सत्यन्तमात्रोपादाने स्वाधिकरणक्षण एवातिव्याप्तिः, सत्यन्तानुपादाने तृतीयादिक्षणेष्वतिव्याप्तिरित्युभयोपादानम् । वर्णे वर्णाव्यवहितोत्तरत्वञ्च तादृशक्षणवृत्तित्वरूपं ग्राह्यम् । एवं क्षणे वर्णाव्यवहितपूर्वत्वञ्च स्वाधिकरणक्षणप्रागभावाधिकरणक्षणप्रागभावानधिकरणत्वे सति स्वाधिकरणक्षणप्रागभावाधिकरणत्वरूपं वक्तव्यम् । वर्णे वर्णाव्यवहितपूर्वत्वञ्च पूर्ववत्तादृशक्षणवृत्तित्वरूप ग्राह्यम्) मन्वादीनां परमाप्ततया तदुक्ताना स्मृत्यादीनां तत एव प्रामाण्यस्य सिद्धत्वेऽपि तेषामाप्तत्वेऽपि विप्रतिपन्नं प्रत्याह ॥

* मन्वादिस्मृतीनामिति * आचाराणां आचारप्रतिपादकाशिष्टवाक्यानामित्यर्थः । एतेन वेदार्थं सर्वमपि सर्वदास्मरद्भिरेव मन्वादिभिः स्मृत्यादीनां प्रणीततया तेषां प्रामाण्यमव्याहतमिति ज्ञायते । ननु तर्हि स्मृत्यादिमूलभूतो वेदः कुतो नोपलभ्यत इत्याशङ्कायामाह * तन्मूलभूतेति * सा शाखापाठतः परिभ्रष्टेत्यनुमीयत इत्यर्थः । ननु पठ्यमानवेदे स्मृतिमूलवाक्योत्सादनं कल्प्यते वा उत विप्रकीर्णभागे वा (विप्रकीर्णभागो नाम पाठतः परिभ्रष्टो भागः पठ्यमानवेद एव विशकलिततया विद्यमानभागो वा) नाद्य इत्याह * अशक्यतयेति * न द्वितीय इत्याह * अयुक्तत्वादिति * पठ्यमानवेदे तादृशवाक्यानामनुपलम्भादित्यर्थः । अनुमितवेदस्तादृशार्थं न बोधयितुं शक्नोतीत्याह * कदापि वर्णानामिति * अनुमितवेदे शाब्दबुद्धिजनकस्यानुपूर्वीज्ञानस्य सम्पादयितुमशक्यतया तस्मिन् स्मृतिसमानार्थकवाक्यनिर्धारणमसमञ्जसमिति भावः । आनुपूर्वीज्ञानस्य बोधकारणत्वानङ्गीकारे रमामारादिपदैरर्थविशेषबोधानुपपत्तिः ज्ञेया ॥

मू * नन्वेतानि पदानि स्मारितार्थसंसर्गवन्ति आकांक्षादिमत्पदकदम्बकत्वात् मद्वाक्यवत् इत्यनुमानादेव संसर्गज्ञानसम्भवात् शब्दो न प्रमाणान्तरमिति चेन्न, अनुमित्यपेक्षया विलक्षणस्य शाब्दज्ञानस्य शब्दात्प्रत्येमीत्यनुव्यवसायसाक्षिकस्य सर्वसम्मतत्वात् ॥ नन्वर्थापत्तिरिति प्रमाणान्तरमस्ति, पीनो देवदत्तो दिवा न भुङ्क्ते इति दृष्टे श्रुते वा पीनत्वान्यथानुपपत्त्या रात्रिभोजनमर्थापत्त्या कल्प्यत इति चेन्न, देवदत्तो रात्रौ भुङ्क्ते दिवा अभुञ्जानत्वे सति पीनत्वादित्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात् । शते पञ्चाशदिति सम्भवोऽप्यनुमानमेव । इह वटे यक्षस्तिष्ठतीत्यैतिह्यमप्यज्ञातमूलवक्तृकशब्द एव । चेष्टापि शब्दानुमानद्वारा व्यवहारहेतुरिति न प्रमाणान्तरम् । तस्मात्प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानि ॥

इति शब्दपरिच्छेदः समाप्तः

ध्या ॥ अनुमानेनैव वाक्यार्थज्ञानस्यापि सम्भवात् शाब्दबुद्धिकारणतया शब्दस्य प्रमाणान्तरत्वं नाङ्गीकर्तव्यमित्याह * एतानीति * एतानि घटमानयेत्यादिपदानि स्मारितार्थसंसर्गवन्ति स्मारितार्थसंसर्गज्ञानपूर्वकाणीत्यर्थः । आकांक्षादीत्यादिपदेन योग्यत्वादिकारणसामग्रीपरिग्रहः । पदकदम्बत्वमात्रस्य हेतुत्वे आकांक्षादिरहितवाक्यान्तर्भावेण व्यभिचारप्रसङ्गः । स्मारितार्थसंसर्गे तात्पर्यविषयत्वं निवेशनीयम् । अन्यथा तात्पर्याविषय तत्पदार्थसंसर्गमादाय अर्थान्तरदोषप्रसङ्गः (अनभिमतार्थ-

सिद्धिरर्थान्तरम्) तथा च स्मारितार्थसंसर्गज्ञानपूर्वकत्वव्याप्या-
कांक्षादिमत्पदकदम्बकत्ववन्त्येतानिपदानीति परामर्शात् घटमान-
येत्यादिपदेषु तात्पर्यविषयोपस्थितिविषयीभूतघटकर्मत्वादिसंसर्ग-
ज्ञानपूर्वकत्वे सिद्धे तुल्यन्यायेन पदप्रयोज्यशाब्दबोधस्यापि सि-
द्धतया शब्दस्य पृथक् प्रमाणत्वं नाङ्गीकर्तव्यमिति भावः * सर्व-
सम्मतत्वादिति * तथा च कार्यवैलक्षण्यानुरोधेन कारणवैलक्ष-
ण्यस्वीकरणमुचितमिति भावः ॥

प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिरूपषट्प्रमाणाङ्गीक-
र्ता मीमांसकश्शङ्कते * नन्विति * पीनो देवदत्तो दिवा न भु-
ङ्क्ते इति दिवाऽभुञ्जानत्वविशिष्टपीनत्ववति देवदत्ते इत्यर्थः ।
दृष्टे चाक्षुषप्रत्यक्षावगते । श्रुते श्रावणप्रत्यक्षावगते । अतश्च
दृष्टार्थापत्तिः श्रुतार्थापत्तिरित्यर्थापत्तेः द्वैविध्य ज्ञायते । अत्र
फलकरणयोरुभयोरप्यर्थापत्तिशब्दः प्रयुज्यते । फलपक्षे अर्थ-
स्यापत्तिरिति विग्रहः करणपक्षे अर्थस्यापात्तिः कल्पना यस्मादिति
विग्रहः * पीनत्वान्यथानुपपत्त्येति * पीनत्वस्य रात्रिभोजनं
विनाऽनुपपत्त्येत्यर्थः । अत्रायं भावः, येन विना यदनुपपन्न
तत्तेनाक्षिप्यत इत्यर्थापत्तिप्रमाणं मीमांसकैरङ्गीक्रियते । अत्रो-
पपाद्यज्ञानं करण, उपपादकज्ञानं फलम् (उपपादयतीत्युपपा-
द्यम् । उपपाद्यत इत्युपपादकं इति व्युत्पत्तिः) तथा च
दिवाऽभुञ्जानत्वविशिष्टपीनत्ववान् देवदत्त इत्युपपाद्यज्ञानात् रात्रि-
भोजनवान् देवदत्त इत्युपपादकज्ञानं जन्यते इति । व्यतिरेक्य-
नुमानेनैव गतार्थतया अर्थापत्तेः प्रमाणान्तरत्वाङ्गीकरणमसमञ्ज-
समिति नैयायिकस्समाधत्ते * देवदत्तो रात्राविति * देवदत्तो
रात्रिभोजनवान् दिवाऽभुञ्जानत्वे सति पीनत्वात् इत्यनुमानप्र-

कारो ग्राह्य इति । अत्र यत्र हेतुस्तत्रसाध्यमित्यस्यान्वयदृष्टान्ताभावात् यत्रसाध्याभावस्तत्रहेत्वभाव इत्यस्यघटादेर्व्यतिरेकदृष्टान्तस्य सत्त्वात् रात्रिभोजनाभावव्यापकीभूताभावप्रतियोगिदिवाऽभुञ्जानत्वविशिष्टपीनत्ववान् देवदत्त इति व्यतिरेकपरामर्शात् रात्रिभोजनवान् देवदत्त इत्यनुमितिरुत्पद्यते । अयमेवार्थः कारिकावळ्यां विश्वनाथपञ्चाननभट्टाचार्येणाप्यभिहितः "अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते, व्यतिरेकव्याप्तिबुद्धया चरितार्था हि सा यतः" इत्यादिना । पीनत्वमात्रस्य हेतुतायां रात्रिभोजनाभाववति दिवाभोजनवति पीने व्यभिचारप्रसङ्गः । पीनत्वानुपादाने रात्रिभोजनाभाववति दिवाभोजनाभाववत्यपीने व्यभिचारप्रसङ्गः अत उभयोपादानम् । पीनत्वपद योगाद्यजन्यपीनत्वपरम्, अन्यथा सर्वदा भोजनशून्ये योगादिजन्यपीनत्ववति व्यभिचारप्रसङ्ग. । अनुपलब्धिप्रमाणस्य प्रत्यक्षान्तर्भावः प्रत्यक्षपरिच्छेदान्ते निरूपितः ॥

शतरूपिकावान् देवदत्त इति ज्ञानेन करणभूतेन पञ्चाशद्रूपिकावान् देवदत्त इति ज्ञानस्य फलरूपस्य सम्भवात् इह वटे यक्षस्तिष्ठतीति वाक्यात् करणभूतात् यक्षवानयं वट इति फलरूपस्य ज्ञानस्य उत्पद्यमानतया च सम्भवैतिह्ययोः प्रमाणान्तरत्वमङ्गीकुर्वतां पौराणिकानां मतं खण्डयति। * शते पञ्चाशदिति * अनुमानप्रकारस्तु, देवदत्तः पञ्चाशद्रूपिकावान् शतरूपिकावत्त्वादिति * अज्ञातमूलवक्तृक इति * विशेषरूपेणानिर्धारितप्रथमवक्तृक इत्यर्थः । अत्र ऐतिह्यस्य शब्दप्रमाण एवान्तर्भावः । तादृशशब्दज्ञानस्य यथार्थज्ञानजनकत्वे शब्दप्रमाणेऽन्तर्भावः,

तदभावेऽप्रमाणमेवायं शब्द इति ग्राह्यम् ॥ अस्मदादिकरचरण-नयनादिचेष्टया अभिनयादिना च बोधजननात् चेष्टाया अपि प्रमाणान्तरत्वमङ्गीकुर्वतो भरताचार्यस्य मतं खण्डयति * चेष्टापीति * अत्र शब्दानुमानद्वारेत्यत्र शब्दस्य यदनुमानं तद्द्वारेत्येकोऽर्थः, शब्दद्वारा अनुमानद्वारा इत्यपरोऽर्थः प्रतिभाति । तत्राऽऽद्ये अयमेतादृशशब्दबोधेच्छावान् विलक्षणचेष्टावत्त्वादित्यनुमानप्रयोगो ग्राह्यः । एवं तदभिप्रेते शब्दे ज्ञाते तदनु इतरशाब्दबुद्धिस्थल इव वृत्तिज्ञानादिक्रमेण बोधो भवतीत्याशयः । द्वितीये शब्दद्वारेत्यस्य पूर्वोक्तरीत्याऽनुमितशब्दद्वारेत्यर्थः । अनुमानद्वारेत्यनेन निरूपणीयोऽनुमानप्रकार इत्थम्, देवदत्तः तदीयगमनागमनादीच्छावान् विलक्षणचेष्टावत्त्वादिति । अनुमितशब्दे शाब्दबोधप्रयोजकीभूतानुपूर्वीज्ञानाभावेन बोधकत्वासम्भवादनुमानानुसरणं कृतम् * अत्र व्यवहारशब्दवाच्यो न शब्दप्रयोगः, परन्तु प्रमात्मज्ञानमेव । * उपसंहरति * तस्मादिति *

इति तर्कसङ्ग्रहसर्वस्वपञ्चलक्षणीसर्वस्वकृता
कुरुगण्टयुपाख्य श्रीरामशास्त्रिणा विरचिते
दीपिकासर्वस्वे भगवदर्पिते
शब्दपरिच्छेदः समाप्तः ॥

श्रीमेधादक्षिणामूर्तये नमः

# दीपिकासर्वस्वे

## प्रामाण्यवादप्रारम्भः ।

मू * ज्ञानानां तद्वतितत्प्रकारकत्वं स्वतोग्राह्यं परतोग्राह्यं वेति विचार्यते, तत्रेयं विप्रतिपत्तिः, ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावद्ज्ञानग्राहकसामग्रीग्राह्यं न वेति, अत्र विधिकोटिस्स्वतस्त्वम् निषेधकोटिः परतस्त्वम् । अनुमानादिग्राह्यत्वेन सिद्धसाधनवारणाय यावदिति । इदंज्ञानमप्रमेतिज्ञानेन प्रामाण्याग्रहात् बाधवारणाय अप्रामाण्याग्राहकेति । इदंज्ञानमप्रमेत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकस्य अप्रामाण्याग्राहकत्वाभावात्स्वतस्त्वंनस्यादतस्तदिति । तस्मिन् ग्राह्यप्रामाण्याश्रये अप्रामाण्याग्राहिकेत्यर्थः । उदाहृतस्थले व्यवसायेऽप्रामाण्याग्राहकस्यापि अनुव्यवसाये तद्ग्राहकत्वेन (उदाहृतस्थले व्यवसायाप्रामाण्यग्राहकस्याप्यनुव्यवसाये तद्ग्राहकत्वेन) स्वतस्त्वसिद्धिः ॥

व्या * पूर्वं प्रमाचतुष्टयस्य निरूपितत्वात् तद्गतप्रामाण्यस्यापि विचारावसरप्राप्तौ सत्यां तद्विचारयति * ज्ञानानामिति * अत्र

प्रामाण्यं निर्वक्ति * तद्वतीति * स्वतोग्राह्यत्वमिति * स्वतोग्राह्यत्वञ्च ज्ञानसामान्यग्राहकसामग्रीजन्यग्रहविषयत्वरूपम् । परतोग्राह्यत्वञ्च अनुमानादिप्रमाणान्तराधीनग्रहविषयत्वरूपम् (ज्ञानानामितिपष्ठ्यर्थाधेयत्वस्य तत्प्रकारकत्वेऽन्वयः) परतोवेत्यत्र ग्राह्यमित्यनुषङ्गः कार्यः । पर्यवसाने नैयायिकमते पर्वतोवह्निमानितिज्ञानं प्रमा संवादि (सफल) प्रवृत्तिजनकत्वात् ह्रदोवह्निमानितिज्ञानमप्रमा विसंवादि (विफल) प्रवृत्तिजनकत्वादितिरीत्या अनुमानप्रमाणेनैव प्रामाण्याप्रामाण्ये प्रसाधनीये भवत इति ज्ञेयम् * तत्रेयं विप्रतिपत्तिरिति * अत्र त्रल्प्रत्ययार्थभूतप्रयोजकत्वस्य विप्रतिपत्तावन्वये इदशब्दस्य वक्ष्यमाणार्थकत्वे च पूर्वोक्तविचारप्रयोजकीभूता तादृशसामग्रीग्राह्यं न वेत्यादिनावक्ष्यमाणाविप्रतिपत्तिरिति बोधो जायते विप्रतिपत्तिर्नाम विरुद्धार्थप्रतिपादकवाक्यद्वयम् विरुद्धार्थबोधकवाक्यद्वयश्रवणानंतरं मध्यस्थस्य प्रथमं इदंवाक्यंप्रमाणंवा इदवाक्यंप्रमाणंवेति संशयो जायते, ततः तत्तद्वाक्यार्थबोधे मध्यस्थस्याप्रामाण्यशंका उदेति, ततः एकतरकोटिनिर्णयाय कोटिद्वयविचारावश्यकताप्राप्तेति विचारप्रयोजकत्व विप्रतिपत्तेस्संभवतीति ज्ञेयम् । * ज्ञानप्रामाण्यमिति * इदं पक्षबोधकपदम्, सामग्रीग्राह्यं न वेति साध्यबोधकपदम्, अत्र प्रामाण्यत्वादेर्हेतुत्वं बोध्यम् । अत्र प्रत्यक्षादिप्रमाणधर्मस्य प्रमाकरणत्वरूपस्य प्रामाण्यस्य व्युदासाय ज्ञानपदप्रयोगः । वस्तुतस्तु, प्रामाण्यस्य तद्वतितत्प्रकारकत्वरूपस्य घटत्वादिविषयभेदेन भिन्नतया प्रमात्वस्य कस्यापि न ज्ञानग्राहकसामग्रीग्राह्यत्वं संभवतीत्यतः यद्धर्मघटितप्रामाण्यस्य यदा पक्षत्वं तदा तस्मिन् तद्धर्मप्रकारकज्ञानग्राह्यत्वमेव

साधनीयम्, न तु सामान्यतोज्ञानग्राहकसामग्रीग्राह्यत्वमिति बोधनाय ज्ञानपदम् एवञ्च तत्फलसाधारणं प्रमात्वमेव प्रामाण्यम् पक्षभूतमिति लभ्यते ।

* त्रिधिकोटिरिति * तदप्रामाण्याग्राहकयावद्ज्ञानग्राहकसामग्रीग्राह्य न वेत्यत्र तादृशग्राह्यत्वरूपविधिकोटिप्रविष्टं स्वतस्त्वम् । न वेतिनिषेधकोटिसूचितं अनुमानादिप्रमाणान्तरग्राह्यत्वरूप परतस्त्वम् । विधिकोटिः गुरुमिश्रभट्टानाम्, निषेधकोटिः नैयायिकस्येति भावः । तथा च तदप्रामाण्याग्राहकयावद्ज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतस्त्वमिति लभ्यते । तथा च ज्ञानप्रामाण्यस्य स्वतस्त्ववादिनां गुरूणां मुरारिमिश्राणां भाट्टानां च मते समन्वयप्रकारो निरूप्यते । तदप्रामाण्याग्राहिका यावती ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयीभूतं इति दीपिकास्थवाक्यस्यार्थः (यावत्त्वस्यसामग्र्यामेवान्वयः, नत्वव्यवहितोरज्ञानपदार्थे) यस्मिन् ज्ञाने प्रामाण्य ग्राह्यं तद्ज्ञानमेवात्रज्ञानपदार्थः । तथा च यावती ज्ञानग्राहकसामग्री विशेषणज्ञानात्ममनस्संयोगादिरूपा सामग्री, तज्जन्यो यो ग्रहः गुरुमते व्यवसायः मुरारिमिश्रमतेऽनुव्यवसायः भाट्टमते ज्ञाततालिंगकानुमितिर्भवति, तद्विषयत्वं मतत्रयेऽपि प्रामाण्ये सभवति । तथाहि, गुरुमते सर्वस्मिन्नपि ज्ञाने ज्ञानज्ञातृज्ञेयैतात्रितयं भासते, तन्मते अयंघटः घटमहजानामीति वा घटमहंजानामीत्येव वा व्यवसायोऽङ्गीक्रियते, अस्मिन् ज्ञाने ज्ञानांशे ज्ञानत्वस्येव सत्समशीलतत्समानाधिकरणप्रामाण्यस्यापि भानमङ्गीक्रियते, एतन्मते विशिष्टबुद्धिप्रति विशेषणज्ञानस्य कारणत्वानंगीकारेण विशेषणज्ञानादिकारणसामग्र्यभावेपि प्रामाण्यस्य भान बाधकाभावः, तथा च तद्ज्ञानसामग्री या वर्तते सैव

तद्गतप्रामाण्यभानोपयोगिनी, न तु प्रामाण्यभानोपयोगिकारणान्तरमङ्गीक्रियते, तथा च तद्ज्ञानग्राहकसामग्रीजन्यस्वात्मकव्यवसायरूपंग्रहविषयत्वमेव गुरुमते प्रामाण्ये सम्भवति मुरारिमिश्रमतेतु अयंघट इति ज्ञानोत्तरं घटत्वेनघटमहंजानामीति ज्ञानविषयकः लौकिकमानसरूपोऽनुव्यवसाय उत्पद्यते, अत्रानुव्यवसायेऽपि तद्ज्ञानग्राहकसामग्र्येव प्रयोजिका । नैयायिकमतेप्यनुव्यवसायप्रति तद्ज्ञानविशेषणज्ञानात्ममनस्संयोगादिभिन्नस्य कारणस्यानङ्गीकारात् एवञ्च तज्जन्यानुव्यवसायात्मकग्रहविषयत्व गुरुमत इव ज्ञानत्वसमशीलप्रामाण्ये विद्यत एव । अत्रापि प्रामाण्यभाने कारणान्तरापेक्षाऽभावः "विशिष्टबुद्धिप्रति विशेषणाज्ञनस्य कारणत्वमिति नियमाङ्गीकरणाभावप्रयुक्त एव । भाट्टमते अयं घट इति ज्ञानोत्तरं घटः घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः घटत्वप्रकारकज्ञाततावत्त्वादित्यनुमितिरुत्पद्यते, ज्ञातताच सविषयका ज्ञानजन्योऽतिरिक्तः पदार्थ इति विवेकः, तत्रापि तद्ज्ञानसामग्र्येव प्रयोजिका, तथा च तद्वद्विशेष्यकतत्प्रकारकज्ञानत्वरूपप्रामाण्यस्य साक्षादेवानुमितिविषयत्वमेतन्मते सम्भवति, तथा च तादृशसामग्रीजन्यनिरुक्तानुमित्यात्मकग्रहविषयत्वं प्रामाण्येऽक्षतमिति मतत्रयेपि समन्वयो ग्राह्यः । नैयायिकमते विशिष्टबुद्धिविशेषणज्ञानयोः कार्यकारणभावाङ्गीकारेण प्रामाण्यग्राहकविशेषणज्ञानाभावेन ज्ञानग्राहकसामग्रीमात्रेण प्रामाण्यग्रहोत्पत्तिः, सर्वत्र तत्तद्ज्ञानोत्तरं ज्ञाततालिङ्गकानुमित्यनङ्गीकारेण च न पूर्वमत इव प्रामाण्यग्रहोऽङ्गीक्रियते, किं त्वनुमानेनैव तत्सिद्धिर्ग्राह्या, तत्प्रकारश्च, इदंज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वादितिरीत्या प्रामाण्यासिद्धिः, इदंज्ञानंमप्रमा विसंवादिप्रवृत्तिजनकत्वा-

दितिरीत्या अप्रामाण्यस्य सिद्धिः ग्राह्या। वस्तुतस्तु सर्वस्मिन्नपि मते अप्रामाण्यसिद्धिरनुमानैवेत्यवधेयम् ॥

अप्रामाण्याग्राहकत्वदलसार्थक्यस्य यावत्पदस्थित्यन्वयव्यतिरेकानुविधायितया यावत्पदं प्रथमं सार्थकयति * अनुमानादीति * अत्र प्रामाण्यस्येत्यध्याहार्यम्। यावत्पदाभावे तद्ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकज्ञानग्राहकसामग्रीग्राह्यम् ज्ञानप्रामाण्यत्वादित्यनुमाने नैयायिकमतरीत्या सिद्धसाधनदोषप्रसङ्गः (साध्यसिद्धिरेव सिद्धसाधनम्) परामर्शरूपया अनुमित्यात्मकज्ञानग्राहकसामग्र्या इदज्ञानप्रमेत्याप्तवाक्यरूपयापि सामग्र्या प्रामाण्यस्य ग्राह्यत्वात्। यावत्पदनिवेशेतु ज्ञानग्राहकयावत्सामग्र्यां प्रत्यक्षज्ञानसामग्र्या अप्यन्तर्गततया तज्जन्यग्रहविषयत्वस्य नैयायिकमतरीत्याऽभावेन सिद्धसाधनाभावात्। ननु सामग्र्यां यावत्त्वविशेषणमनर्थकम्, यावत्सामग्रीजन्यग्रहाप्रसिद्धेः, न वा ज्ञानसामग्रीभिस्सर्वाभिरेकं ज्ञानमुत्पद्यते इति चेन्न, यथाश्रुते सामग्र्या निवेशितस्य यावत्त्वस्य फलतः ग्रह एव विशेषणत्वसम्भवात्, तथा च ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वमिति फलितम्। तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयताश्रयत्वमितिनिष्कर्षः ॥

सामग्र्यां तदप्रामाण्याग्राहकत्वनिवेशाभावे दोषमुद्घाटयति * इदज्ञानमिति * अयं भावः, इदंज्ञानमप्रमेत्यप्रामाण्यग्राहकसामग्रीसत्त्वे ज्ञानग्राहकसामग्र्यापि प्रामाण्यस्यागृहीतत्वेन ज्ञानग्राहकसामग्रीग्राह्यत्वरूपसाध्याभावस्य प्रामाण्यरूपपक्षे सत्त्वेन बाधदोषप्रसङ्ग इति। तन्निवेशेतु तदा अप्रामाण्याग्राहिकायाः ज्ञानग्राहकसामग्र्याः सत्त्वेन अप्रामाण्याग्राहकज्ञानग्राहकसामग्रीग्राह्यत्वा-

भावस्याभावेन न बाधप्रसङ्गः। तदप्रामाण्याग्राहकेत्यत्र तत्पदं सार्थकयति * इदंज्ञानमप्रमेत्यनुव्यवसायेति * अयं भावः, अत्रेदंपदेन शुक्ताविदंरजतं ह्रदोवह्निमानित्ययथार्थज्ञानस्य परिग्रहः। इदंज्ञानमप्रमेत्याकारकज्ञानं प्रमैव, इदंपदार्थज्ञानस्याप्रमात्वात्, इदंज्ञानमप्रमेतिप्रमात्मकज्ञानरूपानुव्यवसायनिष्ठप्रामाण्यमपि इदंज्ञानमप्रमेत्यप्रामाण्यज्ञानग्राहकसामग्र्यैव ग्राह्यंभवति, यथा पर्वतोवह्निमानितिप्रमानिष्ठं प्रामाण्यमपि तद्ज्ञानग्राहकसामग्र्यैव ग्राह्यम्, ज्ञानग्राहकसामग्र्या एव ज्ञानगतप्रामाण्यग्राहकत्वनियमात्, तथा च प्रकृते इदंज्ञानमप्रमेतिप्रमात्मकज्ञानगतप्रामाण्येऽव्याप्तिः, अत्र एतद्ज्ञाननिष्ठप्रामाण्यग्राहकसामग्र्या एव इदंज्ञानमप्रमेतिज्ञानविषयाप्रामाण्यग्राहकत्वेन अप्रामाण्यग्राहकज्ञानग्राहकसामग्रीग्राह्यत्वमेव तदनुव्यवसायगतप्रामाण्ये वर्तते न तु अप्रामाण्याग्राहकज्ञानग्राहकसामग्रीग्राह्यत्वं तत्र सम्भवतीति (इदंज्ञानमप्रमेतिज्ञाने अनुव्यवसायत्वञ्च एतद्ज्ञानोत्तरजायमानज्ञानविषयकज्ञानत्वमेव न तु पूर्वोत्पन्नज्ञानप्रकारकाहंपदार्थविशेष्यकसाक्षात्कारत्वरूपम्, व्यवसायमनुगतोऽनुव्यवसाय इति व्युत्पत्तिरत्र ग्राह्या) तत्पदानिवेशेतु यस्मिन् प्रामाण्यं ग्राह्यं तद्ज्ञानस्यैव तत्पदग्राह्यतया इदंज्ञानमप्रमेतिज्ञानस्य' तत्पदेन ग्रहणे तन्निष्ठाप्रामाण्याग्राहिका ज्ञानग्राहिका या सामग्रीत्युक्तौ इदज्ञानमप्रमेत्याकारकज्ञानग्राहिका सामग्री भवति, तद्ग्राह्यत्वमेतादृशानुव्यवसायनिष्ठप्रामाण्ये वर्तत इति नाव्याप्तिः * उदाहृतस्थल इति * इदज्ञानमप्रमेत्यत्रेत्यर्थः। व्यवसाये तदनुव्यवसायविशेष्ये शुक्ताविदंरजतमित्यादिज्ञाने, तदग्राहकत्वेन प्रामाण्याग्राहकत्वेन ॥

मू * ननु स्वत एव प्रामाण्यं गृह्यते, घटमहंजानामीत्यनुव्यवसायेन घटघटत्वयोरिव तत्सम्बन्धस्यापि विषयीकरणात्। व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात् पुरोवर्तिनिप्रकारसम्बन्धस्यैव प्रमात्वपदार्थत्वादिति चेन्न, स्वतः प्रामाण्यग्रहे जलज्ञानं प्रमानवेत्यनभ्यासदशायां प्रमात्वसंशयो नस्यात् अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात्, तस्मात्स्वतोग्राह्यत्वाभावात्परतोग्राह्यत्वमेव, तथाहि प्रथमं जलज्ञानानन्तरं प्रवृत्तौ सत्यां जललाभे सति पूर्वोत्पन्नं जलज्ञानं प्रमा सफलप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा अप्रमा इति केवलव्यतिरेकिणा प्रमात्वं निश्चीयते, द्वितीयादिज्ञानेषु पूर्वदृष्टान्तेन तत्सजातीयत्वलिङ्गेनान्वयव्यतिरेकिणापि गृह्यते, प्रमायाः गुणजन्यत्वमुत्पत्तौ परतस्त्वम्, प्रमाऽसाधारणकारणं गुणः, अप्रमाऽसाधारणकारणं दोषः। तत्र प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः, अनुमितौ व्यापकवति व्याप्तिज्ञानम्, उपमितौ यथार्थसादृश्यज्ञानम्, शाब्दज्ञाने यथार्थयोग्यताज्ञानमित्यादिकमूहनीयम्। पुरोवर्तिनि प्रकाराभावस्यानुव्यवसायेनानुपस्थितत्वादप्रमात्वं परत एव गृह्यते पित्तादिदोषजन्यत्वमुत्पत्तौ परतस्त्वम्॥

व्या॥ एवं विप्रतिपत्तिं विचार्य मीमांसकमतमुपन्यस्यति * नन्विति * स्वत एवेत्यत्र एवकारोऽप्यर्थकः। अपिरत्रानुक्तभाट्टमताङ्गीकृतानुमानादिसमुच्चायकः। प्रामाण्यं प्रमात्वम्। स्वत-

एव ज्ञानग्राहकसामग्रीत एव * घटमहंजानामीत्यनुव्यवसायेनेति * मिश्रमताभिप्रायेणाह * अनुव्यवसायेनेति * इदमुपलक्षणम्, गुरुमते व्यवसायेन भाट्टमते अनुमानादिनेति * घटघटत्वयोरिति * (अत्र घटपदं घटत्वावच्छिन्नविशेष्यतापरम्, घटत्वपदं घटत्वनिष्ठप्रकारतापरम्, तत्सम्बन्धपदं निरूप्यनिरूपकभावसम्बन्धरूपम्) * व्यवसायप्रत्यासत्तेस्तुल्यत्वादिति * नैयायिकमतेऽपि उपस्थापकान्तराभावेऽपि व्यवसायप्रत्यासत्तिमात्रेण पुरोवर्तिनं घटत्वेन जानामीत्यनुव्यवसाये तयोस्सम्बन्धभानानङ्गीकारेऽपि घटादिविशेष्यत्वघटत्वादिप्रकारत्वयोः यथा भानमङ्गीक्रियते तथा पूर्वमतद्वयेऽपि व्यवसायप्रत्यासत्तिमात्रेण विशेष्यताप्रकारतयोः तत्सम्बन्धस्य निरूप्यनिरूपकभावस्याऽपि भानाङ्गीकारे तद्वद्विशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वरूपप्रामाण्यस्य निरवशेषस्य भानं सम्भवतीति स्वतः प्रामाण्यसिद्धिरिति भावः * अनभ्यासदशायामिति * अभ्यास आवृत्तिः, अनभ्यासोऽनावृत्तिः, तथाचारम्भदशायामित्यर्थः इदंजलमित्याकारकज्ञानोत्पत्त्यनन्तरमिति यावत्। तद्ज्ञानेऽनुभवसिद्धः प्रामाण्यसंशयो नस्यादित्यर्थः * प्रामाण्यस्यनिश्चितत्वादिति * अनुव्यवसायात्मकनिश्चयविषयत्वात्प्रामाण्यस्येत्यर्थः! तथा च तदभाववत्ताबुद्धिं प्रति तद्वत्तानिश्चयस्य प्रतिबन्धकत्वेन प्रथमं प्रामाण्यप्रकारकनिश्चयसद्भावे तदभावप्रकारकसंशयस्यानुपपत्तिरिति भावः। तथा च ज्ञानविषयतारूपैव ज्ञातता नातिरिक्तः पदार्थः गौरवात्प्रमाणाभावाच्चेतिज्ञेयम् * तस्मादिति * अनभ्यासदशायां संशयोत्पत्तेः। प्रामाण्यन्येत्यध्याहारः॥

* नैयायिकसिद्धान्तमाह * परतोग्राह्यत्वमेवेति * परतोग्रा-

ह्यत्वञ्च अनुमानादिग्राह्यत्वम् * जलज्ञानानन्तरं प्रवृत्तौ सत्यामिति * अप्रामाण्यज्ञानानास्कन्दितजलादिज्ञानानन्तर प्रवृत्तौसत्यामित्यर्थः (मीमांसकमते प्रवृत्तित्वावच्छिन्नं प्रति जलादिज्ञानप्रमेत्याकारकप्रामाण्यनिश्चयस्य हेतुत्वमङ्गीक्रियते) अत्र जलज्ञानानन्तरमित्येव निर्देशेन जलज्ञानविशेष्यकप्रामाण्यप्रकारकनिश्चयस्य प्रवृत्तिहेतुत्व मीमांसकमतसिद्ध व्यावर्त्यते । स्वरूपासिद्धिशङ्कां वारयति * जललाभेसतीति * सफलात * तद्वद्विशेष्यकतत्प्रकारकेत्यर्थः । प्रथमज्ञानपक्षकानुमानेऽन्वयदृष्टान्ताभावाद्व्यतिरेकदृष्टान्त दर्शयति * यन्नैव तन्नैव यथाऽप्रमेति * द्वितीयादिज्ञानपक्षकानुमाने प्रथमादिज्ञानाना पूर्वपूर्वानुमानपक्षीभूतानां अन्वयदृष्टान्तत्वसम्भवादाह * अन्वयव्यतिरेकिणेति * (इदज्ञान प्रमा समर्थप्रवृत्तिजनकत्वादिति प्रथमं व्यतिरेकिलिङ्गकानुमानम् । इदज्ञान प्रमा तत्सजातीयत्वात् पूर्वोत्पन्नज्ञानवदिति अन्वयव्यतिरेकिलिङ्गक द्वितीयानुमानम्, एवरीत्या तृतीयाद्यनुमानप्रयोगप्रकारो ग्राह्यः) तत्सजातीयत्वलिङ्गेनेति * अत्रेत्थ विचारयामः । नन्वत्र कि नाम तत्सजातीयत्वम्, कि तत्समर्थप्रवृत्तिजनकत्वरूपम् उत तत्समानविषयकत्वरूपम् । नाद्यः, धारावाहिकबुद्धिघटकीभूताना सर्वेषां ज्ञानाना समर्थप्रवृत्तिजनकत्वासम्भवात् । न द्वितीयः, इदत्वेन मरुमरीचिकाद्यवगाहिषु इदजलमित्यादिज्ञानेष्वपि तत्समानविषयकत्वस्य सत्त्वात् तत्र प्रामाण्यस्यासत्त्वादिति चेन्न, तत्समानविषयकत्वस्यैव तत्सजातीयत्वपदार्थत्वात् । तत्समानविषयकत्वञ्च तद्धर्मावच्छिन्नतन्निष्ठविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नतन्निष्ठप्रकारतानिरूपकत्वरूपम् । अथवा, तद्ज्ञानीयतन्निष्ठविशेष्यतासजातीयविशेष्यतानिरूपिता या

तद्ज्ञानीयतन्निष्ठप्रकारतासजातीया प्रकारता तन्निरूपकत्वं वा ग्राह्यम्, साजात्यञ्च सावच्छिन्नत्वनिरवच्छिन्नत्वान्यतररूपेण ग्राह्यम्, अतः न कश्चिद्दोषः । अथवा द्वितीयादिज्ञानेषु प्रमात्वसाधकस्य समर्थप्रवृत्तिजनकत्वस्य हेतोः समर्थप्रवृत्तिजनकतावच्छेदकधर्मवत्त्वस्वरूपत्वेन परिष्कारे नैव दोषगन्धः, तादृशजनकतावच्छेदकधर्मश्चतादृशज्ञानत्वमेवेति ॥

नन्वेवमपि नैयायिकमते सर्वेषु प्रत्यक्षानुमित्युपमितिशाब्देषु प्रामाण्यं कथं गृह्यत इति चेन्न, इदं पृथिवीत्वप्रकारकज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकत्वात्, इदं जलत्वप्रकारकज्ञानं प्रमा (स्नेहवति) शीतस्पर्शवति जलत्वप्रकारकत्वात्, इदं तेजस्त्वप्रकारकज्ञानं प्रमा उष्णस्पर्शवति तेजस्त्वप्रकारकत्वात् इत्यादिरीत्या प्रत्यक्षेप्रामाण्यस्यग्राह्यत्वात् (इदं पृथिवीत्वप्रकारकज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकत्वादित्यत्र पृथिवीत्वप्रकारकज्ञानस्य पक्षत्वं पृथिवीत्ववद्विशेष्यकपृथिवीत्वप्रकारकत्वस्य साध्यत्वं गन्धवद्विशेष्यकपृथिवीत्वप्रकारकज्ञानत्वस्य हेतुत्वं ज्ञेयम् । पक्षग्रहस्य प्राथमिकोत्पत्तिकतया तस्य पृथिवीत्वप्रकारकत्वस्य हेतुकोटावपि प्रविष्टत्वेन सुतरां तद्ग्रहस्सम्भवति, पृथिव्यां गन्धस्य प्रत्यक्षत एव गृह्यमाणतया हेतुघटकगन्धवद्विशेष्यकत्वस्यापिग्रहस्सुष्ठु सम्भवति, एवंजलादिज्ञानेष्वपि पक्षभूतेषु स्वरूपासिद्धिशङ्का निराकर्तव्या) एवं पर्वतोवह्निमानित्यनुमितिः प्रमा समर्थ (सफल) प्रवृत्तिजनकत्वात् धूमवतिवह्निप्रकारकत्वाद्वा इत्यनेनानुमितावपि प्रामाण्यं गृह्यते, अयंगवयपदवाच्य इत्युपमितिः प्रमा गोसादृश्यविशिष्टेगवयपदवाच्यत्वप्रकारकत्वादितिरीत्या उपमितावपि प्रामाण्यं गृह्यते, एवं लौकिकवैदिकशब्दप्रमाणजन्ये शाब्दबोधे प्रमात्वं आप्तवाक्य-

जन्यज्ञानत्वरूपहेतुना साधयितुं शक्यते । ननु नीलो घटः शङ्खः पांडरः इत्यादिप्रत्यक्षे घटस्सत्तावान् घटोऽभिधेयः पृथिवी इतरभिन्ना इत्याद्यनुमितिषु कथ प्रामाण्यग्रहः तत्र सफलप्रवृत्तेरभावादिति चेन्न, नीलरूपवतिघटत्वप्रकारकत्वादितिहेतुना तत्र प्रत्यक्षे घटोऽभिधेय इत्याद्याप्तवाक्यजन्यशाब्दबोधसमानविषयकत्वरूपहेतुना निरुक्तानुमितिष्वपि प्रामाण्यस्य सिद्धत्वात् । केचित्तु सर्वत्राप्यबाधितार्थविषयकज्ञानत्वरूपहेतुना प्रामाण्य साधनीयमिति वदन्ति, तत्तुच्छम्, प्रामाण्यसन्देहदशायामबाधितार्थविषयकत्वस्य ग्रहीतुमशक्यत्वात् ॥

एव प्रामाण्ये परतस्त्वमुपपाद्य प्रमाऽप्रमयोरुत्पत्तौ परतस्त्वमुपपादयति * प्रमाया इति * उ त्तौ परतस्त्वञ्च पराधीनोत्पत्तिकत्वम्, तत्प्रमायामप्रमायाञ्च भवति * प्रमाऽसाधारणमिति * प्रमाऽसाधारणकारणत्वञ्च प्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नप्रमानिष्ठकार्यतानिरूपितकारणताश्रयत्वम, कार्यतायां प्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नत्वनिवेशात् ज्ञानमात्रकारणीभूत आत्ममनस्संयोगादौ नातिव्याप्तिः । तत्रैव प्रमानिष्ठत्वनिवेशादप्रमाऽसाधारणीभूतदोषे नातिव्याप्तिः । अप्रमाऽसाधारणकारणत्वमपि अप्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नाप्रमानिष्ठकार्यतानिरूपितकारणताश्रयत्वम्, दलद्वयसार्थक्य पूर्ववद्वोध्यम् । प्रमाचतुष्टयासाधारणकारण गुण क्रमेण निरूपयति * तत्रेति * घटवद्भूतलमित्यादिप्रमात्मकप्रत्यक्षे घटादिरूपविशेषणविशिष्टभूतलादिरूपविशेष्यस्यसंयोगादिरूपस्सन्निकर्षो गुणः कारणं भवति (अत्र विशेषणवत्त्वं विशेष्ये उपलक्षणम् न तु विशेषणम्) भ्रमे विशेषणवद्विशेष्यस्याप्रसिद्धत्वाच्चाकचक्यादिदोषस्यैवकारणत्वमुक्तम्

अप्रमाऽसाधारणकारणमित्यादिना * व्यापकवतीति * व्यापकवद्विशेष्यकसाध्यव्याप्यप्रकारकज्ञानमनुमितौ गुणः कारणं भवतीत्यर्थः (अत्रापिव्यापकवत्त्वमुपलक्षणमेव), तस्यविशेषणत्वेपर्वतोवह्निमानित्यत्र वह्निव्याप्यधूमवान्वह्निमत्पर्वत इत्येव परामर्शस्स्यात्, उपमितिशाब्दबोधयोः कारणतावच्छेदककोटौ यथार्थत्वनिवेशात् अयथार्थसादृश्यज्ञानमयथार्थोपमितौ हेतुः अयथार्थयोग्यताज्ञानादिकमयथार्थशाब्दबोधे हेतुरित्युक्तं भवति, अनुमितिकारणतावच्छेदककोटौ यथार्थत्वानिवेशे न यथार्थपरामर्शादयथार्थपरामर्शाच्च यथार्थानुमित्युत्पत्तिरित्युक्तं भवति, धूमव्याप्यवह्निमान्पर्वत इत्ययथार्थपरामर्शादपि पर्वतोधूमवानिति यथार्थानुमित्युत्पत्तेः, कदाचिदयथार्थपरामर्शादयथार्थानुमितेरुत्पत्तौ तु न विवादः । इत्यादिकमित्यादिपदेनयथार्थाकाङ्क्षाज्ञानयथार्थतात्पर्यज्ञानानापरिग्रहः * ऊहनीयमिति * यथार्थस्मृतिसंस्कारयोःयथार्थानुभव सवादीच्छायांयथार्थज्ञानञ्चहेतुर्भवतीत्यूहनीयमित्यर्थः * पुरोवर्तिनिप्रकाराभावस्येति * प्रकारभावस्यप्रकाराभावघटिताप्रामाण्यस्येत्यर्थः * अनुव्यवसायेनानुपस्थितत्वादिति * अनुव्यवसाये अप्रामाण्योपस्थापकाभावेन अनुव्यवसायेनाविषयीकृतत्वात्तदभाववद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वरूपाप्रामाण्यस्येत्यर्थ. * परत एवेति * अनुमानशब्दाभ्यामेव गृह्यत इत्यर्थः. अनुमानप्रयोगस्तु इदंज्ञानमप्रमाविसंवादिप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा प्रमेतिरीत्या ग्राह्यः, शाब्दप्रामाण्यन्तु इदंज्ञानमप्रमेतितदप्रामाण्यमनुमानादिना ग्राह्यम् । प्रमास्थलेषुप्रामाण्यमिवाप्रमास्थलेष्वप्रामाण्यमपि तत्तद्धेतुकल्पनया सर्वत्र साधनीयम् * पित्तादिदोषजन्यत्वमिति * पीतश्शंख इत्यादौ पित्तकामलादिः, इदंरजतमित्यादौ चाकच-

क्यादिः, द्वितीयचन्द्रादिदर्शने तैमिरिकादिः, रज्जुसर्पादिदर्शने वक्रत्वादिश्च दोषो भवति, एवं स्थलभेदेन दोषाः ऊहनीयाः। अत्र भ्रमस्येत्यध्याहारः कार्यः, तथा च गुणजन्यत्वं प्रमात्वम् दोषजन्यत्वं भ्रमत्वमित्यपि लक्षणं सम्भवतीति ज्ञेयम् ॥

## * अथ अन्यथाख्यातिव्यवस्थापनम् *

**मू * ननु सर्वज्ञानानां यथार्थत्वादयथार्थज्ञानमेव नास्ति। न च शुक्ताविदं रजतमितिज्ञानात्प्रवृत्तिदर्शनादन्यथाख्यातिसिद्धिरिति वाच्यम्, रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव प्रवृत्तिसम्भवात्स्वतन्त्रोपस्थितेष्टभेदाग्रहस्यैव सर्वत्र प्रवर्तकत्वेन नेदं रजतमित्यादावपि प्रसङ्गाभावादिति चेन्न, सत्यरजतस्थले पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थिनः प्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनात् ॥**

व्या ॥ नैयायिकः गुरुमतं निराकृत्य अन्यथाख्यातिं व्यवस्थापयति * नन्विति * गुरुमते घटमानयेत्यादौ नैयायिकमत इव बोधोऽङ्गीक्रियते. परन्तु अप्रमाणवाक्यस्थलेतु न बोधोजायते, किन्तु पदार्थानामुपस्थितिमात्रमुदेति. तत एव प्रवृत्तिर्भवतीति विशेषः ॥

---

अन्यथाख्यातिसिद्धिरित्यत्र * आत्मख्यातिः असत्ख्यातिः अख्यातिः अन्यथाख्यातिः अनिर्वचनीयख्यातिरिति ख्यातिपञ्चकं व्यवह्रियते। आत्मख्यातिवादिनस्तु, बाह्यशुक्त्यादौ बुद्धिरूपात्मनो धर्मस्य रजतस्य अध्यासः आन्तरस्य रजतस्य बहिर्वद्वास इति वद-

* अयथार्थज्ञानमेव नास्तीति * अत्र ज्ञानेऽयथार्थत्वं नास्तीत्यर्थो वक्तव्यः, तेन सिद्ध्यसिद्धिभ्यां व्याघातः परिहृतः। एतन्मतेऽपि प्रमात्वं तद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वमेव, अप्रमात्वञ्च तदभाववद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वमेव, गुरुमतेऽप्रमाया अभावेन अप्रमात्वप्रसिद्धिरिच्छादौ ग्राह्या। नैयायिकाशयं दर्शयति * अन्यथाख्यातिरित्यादिना * अन्यथा प्रकारान्तरेण ख्यातिः भानं अन्यथाख्यातिरित्युच्यते, इदं रजतमितिभ्रमे शुक्तिरूपेदपदार्थे आपणादिस्थस्य रजतस्य भानमङ्गीक्रियत इति यावत्, अन्यथाख्यातौ पुरोवर्तिपदार्थनिष्ठविशेष्यतानिरूपितरजतादिनिष्ठप्रकारतानिरूपकत्वमङ्गीक्रियते। अद्वैतिमते इदं रजतमित्यत्र पुरोवर्तिनि शुक्त्यादौ प्रातिभासिकरजतमुत्पद्यत इत्यङ्गीक्रियते, प्रातिभासिकत्वञ्च प्रतिभाकालोत्पत्तिमत्त्वम्। तथा च ज्ञानेच्छाकृतीनां समानविषयकानामेव उत्तरोत्तरं प्रति पूर्वपूर्वस्य कारणतानियमानुसारेण प्रवृत्तिमात्रं प्रति (सत्यादिवि-

न्ति॥ असत्ख्यातिवादिनस्तु, (शून्यवादिनः) अधिष्ठाने शुक्त्यादौ रजतादेरत्यन्तासतः शशविषाणकल्पस्य कल्पनामाचक्षते॥ अख्यातिवादिनस्तु, यत्र यस्याध्यासो लोकसिद्धः तयोरर्थयोः तद्धियोश्च भेदाग्रहे सति तन्मूलः इदंरूप्यमिति विशिष्टव्यवहाररूपो भ्रमो भवतीति वदन्ति (ख्यातेरभाव अख्यातिरिति विग्रहः)

अन्यथाख्यातिवादिनस्तु, अन्यत्र शुक्त्यादौ अन्यधर्मस्य स्वावयवधर्मस्य आपणादिदेशान्तरस्थस्य रजतादेरध्यास इति वदन्ति (एते नैयायिकाः) अनिर्वचनीयख्यातिवादिनस्तु (एते अद्वैतवेदान्तिनः) एते शुक्तौ भासमानं रजतं अनिर्वचनीयमिति वदन्ति, अनिर्वचनीयत्वञ्च सदसद्विलक्षणत्वम्, सच्चेन्नबाध्येत, असच्चेन्नप्रतीयेत शशविषाणवत्,

संवादिसाधारणप्रवृत्तित्वावच्छिन्नं प्रति) पुरोवर्तिविशेष्यकरज-तत्वादिरूपेष्टतावच्छेदकप्रकारकनिश्चयस्य जनकत्वाङ्गीकारेण अ-न्यथाख्यात्यनङ्गीकारे कारणीभूतस्य तादृशनिश्चयस्याभावेन गु-रुमतेप्रवृत्त्यभावप्रसङ्ग इति ॥

इयमापत्तिरन्यथा गुरुमते परिह्रियते * रजतस्मृतीति * तादृशविशिष्टज्ञानकारणीभूताभ्यां रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव प्रवृत्तिमात्रस्याङ्गीकार्यत्वे "तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेनेति, न्यायानुसारेण विशिष्टज्ञानस्य मध्ये कारणताकल्पनमनुचितमिति भाव. । ननु तर्हि नेदंरजतमितिबाधनिश्चयदशायामपि रजतादौ प्रवृत्तिप्रसङ्गः, रजतस्मृतिपुरोवर्तिज्ञानयोस्तत्रसत्त्वादित्यत आह * स्वतन्त्रोपस्थितेष्टभेदाग्रहस्यैवेति * एवकारेण इदंरजतमिति वि-शिष्टज्ञानस्य प्रवृत्तिहेतुत्वव्यवच्छेदः, उपस्थितत्वमिष्टविशेषणम्, तथाचोपस्थितेः प्रवृत्तिकारणत्वं स्थिरीकृतम्, प्रकृते रजतभेद-ग्रहस्यैव सत्त्वेन तदभावरूपकारणाभावेन न प्रवृत्तिप्रसङ्गः, तथा-च रजतस्मृतिपुरोवर्तिज्ञानेष्टभेदाग्रहाणां त्रयाणामपि प्रवृत्तिं प्रति कारणत्वमङ्गीकार्यमिति सिद्धम् * लाघवेनेति * पूर्वोक्तत्रितय-स्य तत्कारणत्वकल्पने गौरवात् एकस्य विशिष्टज्ञानस्य प्रवृत्ति-कारणत्वकल्पने विशिष्टज्ञानरूपस्यैकस्यैव तत्कारणत्वकल्पनाल्लाघ-

**शुक्तौ भासमानस्य रजतस्य शुक्तिनिर्णयानन्तरं बाधितत्वेन प्रतीयमानत्वे-न च सदसद्विलक्षणत्वं सम्भवति। वेदान्तिमते इदं रजतं प्रातिभा-सिकमिति वदन्ति, प्रातिभासिकत्वञ्च प्रतिभासकालोत्पत्तिमत्त्वम्, इदं रजतमिति प्रतिभासकाले शुक्तौ रजतस्य प्रातिभासिकस्योत्पत्तिरंगीक्रि-यते॥**

वमिति भावः * विशिष्टज्ञानस्यैवेति * (विशिष्टज्ञानस्य प्रवृत्तिहेतुत्वेऽङ्गीकृते इष्टभेदाग्रहस्य कारणत्वं नाङ्गीकर्तव्यम्) पुरोवर्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानस्यैवेत्यर्थः । एवकारेण पूर्वोक्तत्रितयस्य कारणता व्यवच्छिद्यते । कल्पनात् अनुमानात्, अनुमानप्रयोगस्तु, इयं प्रवृत्तिः इष्टतावच्छेदकप्रकारकज्ञानजन्या प्रवृत्तित्वात् सत्यरजतस्थलीयप्रवृत्तिवत् । ननु प्रत्यक्षत्वावच्छिन्नं प्रति सन्निकर्षस्य कारणतया रजतत्वांशे सन्निकर्षस्य इद्रियसंयुक्तसमवायादिरूपस्याभावात् कथ शुक्ताविदंरजतमिति प्रत्यक्षसम्भव इति चेन्न, तत्र लौकिकसन्निकर्षाभावेऽपि प्रत्यक्षकारणत्वेनाङ्गीकृतस्यालौकिकसन्निकर्षस्य ज्ञानलक्षणरूपस्य सम्भवेनानुपपत्त्यभावात् (रजतत्वादिज्ञानमेव ज्ञानलक्षणप्रत्यासत्तिः) अत्राय भावः, प्रमास्थलीयप्रवृत्तौ विशिष्टज्ञानस्य कारणत्वेऽङ्गीकृते अप्रमास्थलीयप्रवृत्तावपि तस्यैव लाघवेन कारणत्वस्य सुवचत्वादिति, अन्यथा प्रमाऽप्रमास्थलीयप्रवृत्तिभेदेन कार्यकारणभावद्वैविध्यमङ्गीकार्यस्यादिति गौरवप्रसङ्गः । ननु भवन्मते प्रवृत्तित्वावच्छिन्न प्रति तत्त्रयस्य कारणत्वानङ्गीकारेऽपि प्रवृत्तिकारणीभूतविशिष्टबुद्धित्वावच्छिन्न प्रति रजतस्मृतिपुरोवर्तिज्ञानयोः कारणत्वस्य स्वीकार्यतया तृतीयकारणत्वेनाङ्गीकृतेष्टभेदाग्रहस्थाने विशिष्टज्ञानस्य कारणत्वकल्पनाच्च भवन्मतेऽपि मन्मतापेक्षया नैव लाघवमिति चेन्न, सत्यरजतस्थलीयप्रवृत्तिं प्रति विशिष्टज्ञानस्य कारणतायास्सर्वसम्मताया अपलापापत्तेः विशिष्टज्ञानत्वापेक्षया इष्टभेदग्रहाभावत्वस्य गुरुत्वाच्च ॥

इत्यन्यथाख्यातिव्यवस्थापनं समाप्तम् ।

श्रीमेधादक्षिणामूर्तये नमः

# दीपिकासर्वस्वे ।

## अयथार्थानुभवादिनिरूपण प्रारम्भः ।

मू * अयथार्थानुभवं विभजते * अयथार्थेति * स्वप्नस्य मानसविपर्ययरूपत्वान्नत्रैविध्यविरोध. । संशयलक्षणमाह * एकेति * घटपटाविति समूहालम्बनेऽतिव्याप्तिवारणायैकेति । घटोद्रव्यमित्यादावतिव्याप्तिवारणायविरुद्धेति । घटत्वविरुद्धपटत्ववानित्यत्रातिव्याप्तिवारणाय नानेति । विपर्ययलक्षणमाह * मिथ्येति * तद्भाववति तत्प्रकारकनिर्णय इत्यर्थः । तर्कं लक्षयति * व्याप्येति * यद्यपि तर्को विपर्ययेन्तर्भवति, तथाऽपि प्रमाणानुग्राहकत्वाद्भेदेन संकीर्तनम् । स्मृतिं विभजते * स्मृतिरिति * सुखं लक्षयति * सर्वेषामिति * सुख्यहमित्याद्यनुव्यवसायगम्यसुखत्वादिकमेव लक्षणम्, यथाश्रुतन्तु स्वरूपकथनमिति द्रष्टव्यम् । संस्कारं विभजते * संस्कार इति * संस्कारत्वजातिमान् संस्कारः । वेगस्याश्रयमाह * वेग इति * वेगत्वजातिमान् वेगः । भावनां लक्षयति * अनु-

**भवेति * आत्मादावतिव्याप्तिवारणायानुभवेति * अनुभव-ध्वंसेऽतिव्याप्तिवारणाय स्मृतीति । स्मृतेरपि संस्कार-जन्यत्वं नवीनैरुक्तम् ॥**

व्या ॥ ननु मूलेऽयथार्थानुभवस्य त्रैविध्येन विभागोऽनुपपन्नः अनुभूतपदार्थविषयकस्मरणेन पित्तादिदोषेण शुभाशुभादृष्टैः जायमानस्य पर्यवसाने बाधितार्थविषयकस्य स्वप्नज्ञानस्य चतुर्थस्य सर्वेषामनुभवसिद्धस्य विद्यमानत्वात् इत्यत आह * स्वप्नस्येति * मानसविपर्ययो मानसभ्रमः । ननु सर्वेषामपि विपर्ययानां मानसत्वात्कथं स्वप्नस्यैव मानसविपर्ययरूपत्वमिति चेन्न, रजतत्वादेश्चक्षुषाग्राह्यस्य सादृश्यवशेन तदनधिकरणे ज्ञानं चाक्षुषभ्रमः, पटत्वादेस्त्वचाग्राह्यस्य तदनधिकरणे ज्ञानं त्वाचभ्रमः, एवमेकस्मिन् शब्दे दूरदेशवशाच्छब्दान्तरभ्रमः श्रावणभ्रमः, एकस्मिन् रसे जिह्वादोषेण रोगादिजन्येन जायमानः रसान्तरभ्रमः रसनभ्रमः, एकस्मिन् गन्धे घ्राणदोषेण जायमानः गन्धान्तरभ्रमः घ्राणीयभ्रमः, स्वाप्निकपदार्थस्यैवपञ्चभिरपीन्द्रियैर्बाह्यैरग्राह्यतया मानसत्वमुपपद्यते । ननु किं नाम मानसत्वं विपर्यये, तच्च मनइन्द्रियग्राह्यत्वरूपम् उत मनोग्राह्यपदार्थविषयकत्वरूपम्, नाद्यः निर्विकल्पकभिन्नस्य ज्ञानमात्रस्य मनइन्द्रियग्राह्यतया स्वप्नस्यैव मानसत्वाभिधानमसङ्गतम् । न द्वितीयः "मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः, इत्यादिना सुखदुःखादीनामेव मनोग्राह्यत्वस्याङ्गीकृततया मनोग्राह्यातिरिक्तरथगजाद्यनेकपदार्थविषयकस्वप्नस्य मनोग्राह्यपदार्थविषयकत्वासम्भवादिति चेन्न, अनाद्यतया स्वप्ने भासमानस्य सर्वस्यापि पदार्थस्य मनोग्राह्यत्वस्यैवाङ्गी-

कर्तव्यतया तस्य द्वितीयपक्षानुसारेण मानसविपर्ययरूपत्वोपपत्तेः । न च स्वप्नः स्मृतिरूप एवास्त्विति वाच्यम्, स्मृतेरनुभवजन्यत्व-नियमेन अनुभूतपदार्थविषयकज्ञानस्यैव स्वप्नत्वमिति नियमानुपपत्तेः । तथात्वे भाष्यविरोधाच्च । यद्यपि देशविशेषावच्छिन्नात्ममनस्संयोग एव स्वप्नः, तथापि तदसमवायिकारणकज्ञाने स्वप्नशब्द उपचर्यते ॥

संशयलक्षणविचार. तर्कसङ्ग्रहसर्वस्वे संशयलक्षणव्याख्यानप्रस्तावे निरूपितस्तत्रद्रष्टव्यः । अत्र दीपिकानिर्दिष्टो विषयस्सुगमः ॥ वेदान्तिमते ब्रह्मभिन्ने सर्वस्मिन्नपि जगति मिथ्यात्वव्यवहारदर्शनात् मिथ्यात्वं परिष्करोति * तदभाववतीति * संशये इच्छायाश्चातिव्याप्तिवारणाय निर्णय इत्युक्तम् । निर्णयत्वञ्च निश्चयत्वम्, तच्च संशयान्यज्ञानत्वम् । महानन्योविचारः प्रत्यक्षपरिच्छेदेऽयथार्थानुभवलक्षणविचारदशाया प्रदर्शित इति नात्र पुनर्विचार्यते ॥ तर्कपदस्य ऊहाद्यर्थकत्व वारयितु परिष्करोति * व्याप्येनेति * आहार्यव्याप्यवत्ताभ्रमजन्यो यो आहार्यव्यापकवत्ताभ्रमः स तर्क इत्यर्थः । आहार्यव्याप्यवत्ताभ्रमजन्यत्वानुपादाने आहार्यव्यापकवत्ताभ्रमत्वस्य आहार्यज्ञानमात्रसत्त्वादतिव्याप्तिः, तन्निवेशे आहार्यज्ञानमात्रस्य तज्जन्यत्वाभावान्नातिव्याप्तिः । प्रथमाहार्यपदाभावे यत्र नायं पुरुष इति निश्चयसत्त्वेपि शाखादिषु करादिभ्रान्त्या पुरुषत्वव्याप्यकरादिमानयमितिनिर्णयेन बाधकालीनेच्छासहितेन अयंपुरुष इत्याहार्यारोप उत्पाद्यते तत्रारोपेऽतिव्याप्तिः, तत्र करादिव्यापकपुरुषत्वरूपव्यापकधर्मप्रकारकनिश्चयत्वस्याव्याहतत्वात् । तन्निवेशे तादृशव्यापकवत्तानिश्चये आहार्यव्याप्यवत्ताभ्रमजन्यत्वाभावान्नातिव्याप्तिः । द्वितीयाहार्य-

पदाभावे आहार्यव्याप्यवत्ताभ्रमपदेन रजतत्वाभावव्याप्यवत्ताग्रह कालीन आहार्य रजतत्वव्याप्यवत्ताज्ञानं ग्राह्यम्, तज्जन्यव्यापकवत्ताभ्रमपदेन इदंरजतमित्यनाहार्य रजतत्वरूपव्यापकवत्ताज्ञानं ग्राह्यम्, अतस्तादृशे इदंरजतमित्यनाहार्यज्ञानेऽतिव्याप्तिः, तन्निवेशे तत्र व्यापकवत्तानिश्चये आहार्यत्वाभावान्नातिव्याप्तिः । तर्के आपाद्यव्यतिरेकनिश्चयः आपाद्यापादकयोर्व्याप्तिनिश्चयश्च कारणम् । अत्रापाद्यः धूमाभावः तद्व्यतिरेकनिश्चयः धूमाभावाभाववान् पर्वत इति निश्चयः । आपाद्यापादकयोर्धूमाभाववह्न्यभावयोः व्याप्तिनिश्चयः यत्र वह्न्यभावस्तत्रधूमाभाव इति निश्चयः । तर्कस्य मानसविपर्यय रूपतया विपर्ययेऽन्तर्भावसम्भवेन अयथार्थानुभवस्य त्रैविध्येन विभागोऽनुपपन्न इत्याशङ्क्याह * यद्यपीति * प्रमाणानुग्राहकत्वञ्च प्रमाणेन प्रमायां जननीयायां प्रतिबन्धकविघटनद्वारा उपयोगित्वम्, प्रतिबन्धिकाचात्र व्यभिचारशङ्का । भेदेन पार्थक्येन । तथा च तर्कस्य प्रमाणानुग्राहकत्वज्ञापनाय भेदेन संकीर्तनमिति भावः ॥

वैषयिकसुखे साधूनां द्वेषदर्शनान्मूलोक्तं तल्लक्षणं वैषयिकसुखेऽव्याप्तमिति लक्षणान्तरमाह * सुखत्वमिति * तथा च इदं सुखत्वरूपं लक्षण सुखस्य व्यावहारिकम्, व्यावर्तकन्तु इतरेच्छाऽनधीनेच्छाविषयत्वरूपमेव । कामक्रोधादिरहितानां योगिनां (ब्रह्मज्ञानिनां) सुखेच्छायाः दुःखद्वेषस्यचाभावेन दुःखेपि तल्लक्षणस्याव्याप्ततया आदिपदग्राह्य दुःखत्वमेव दुःखस्यव्यावहारिकं लक्षणम्, व्यावर्तकन्तु इतरद्वेषानधीनद्वेषविषयत्वरूपमेव । एतत्समन्वयप्रकारस्तर्कसङ्ग्रहसर्वस्वे निरूपितः । यथाश्रुतं सर्वेषामनुकूलेत्यादिकम् ॥

अनुभवेतीति * स्मृतिप्रति संस्कारंप्रतिचानुभवत्वेनैव का-रणत्व वदतां प्राचीनानामयमाशयः, तत्तद्विषयकस्मृति तादृशसं-स्कारं प्रति च अनुभवत्वेनैव कारणत्वं वाच्यम्। न तु ज्ञान-त्वेन, अनुभवत्वस्यापि ज्ञानत्ववज्जातित्वेन ज्ञानत्वसमशीलत्वात् ज्ञानत्वापेक्षया व्याप्यत्वाच्च, व्याप्यरूपेण कारणत्वसम्भवे व्यापक-रूपेण कारणत्वस्यान्यथासिद्धत्वादिति। स्मृति संस्कारं प्रति च अनुभवाना ज्ञानत्वेनैव कारणत्व वदतां नवीनानामयमाशयः, तदुभय प्रति अनुभवस्य अनभवत्वेन यदि कारणता स्यात् संस्का-रस्य स्मृतिरूपफलनाश्यतया प्रथमस्मरणेनैवानुभवजन्यस्यसस्का-रस्य नाशे तदा द्विक्षणावस्थायिनोऽनुभवस्य तत्कारणस्य सस्का-रस्यचाभावेन पुनः स्मरणान्तर न स्यात्, ज्ञानत्वेन कारणत्वा-ङ्गीकारेतु प्रथमस्मृत्या सस्कारस्य स्वतः (द्विक्षणावस्थायितया) अनुभवस्य नाशेऽपि प्रथमस्मृतेरपि स्मृत्यन्तरजनकस्य संस्कार-स्योत्पत्तेरङ्गीकृततया न कापि क्षतिः। लोकेचानुभूयते पुनः पुनः स्मरणात् (मननात्) दृढतरसम्कारोत्पत्तिः, अन्यथा वेद-स्य शास्त्रादेश्चाभ्यासे (आम्नाये) कस्यापि प्रवृत्त्यनुपपत्तिः, दा-र्ढ्यञ्च झडिति स्मृत्युत्पादप्रयोजकः सस्कारगतो जातिविशेषः। ननु दैववशेन सपन्नात् झडित्युद्बोधकसामग्रीसमवधानादेव झडि-ति स्मृतिनियमस्योपपत्तौ तादृशस्मृतिप्रयोजकत्वेन संस्कारगतो दार्ढ्यरूपो जातिविशेषो न सिद्ध्यत्येवेति चेन्न, झडिति स्मृतेः दैवाधीनोद्बोधकसामग्रीसमवधानादेवोपपत्तौ वेदशास्त्राद्यभ्यासप्रय-त्नोऽनावश्यकस्स्यात् दैववशादेव तत्स्मृतिसम्भवात्॥

ननु अनुभवस्यानुभवत्वेनैव स्मृतिसंस्कारकारणत्वमङ्गीक्रियते चरमस्मृतेरेव संस्कारनाशकत्वमभ्युपगम्यते, अन्यथा ज्ञानत्वेन तत्का

रणत्वाङ्गीकारपक्षेऽपि घटपटादिरूपनानाविषयावगाहिना समूहालम्बनात्मकानुभवेन जनितस्य तावद्विषयकसंस्कारस्य घटाद्येकैकविषयस्मरणेनापि विनाशस्याङ्गीकर्तव्यतया तत्संस्काराभावेन पटाद्येकैकविषयकस्मरणानुपपत्तिः, घटाद्येकैकविषयकतत्स्मरणेन घटाद्येकैकविषयकतत्संस्कारोत्पत्तावङ्गीकृतायामपि तदुत्तरं भिन्नविषयकतया प्राथमिकसमूहालम्बनविषयपटादिस्मारकत्वायोगश्चेति चेन्न, अन्यूनविषयकस्यैव स्मरणरूपस्य फलस्य संस्कारनाशकत्वाङ्गीकारेण घटाद्येकैकगोचरन्यूनविषयकस्मरणस्यतादृशसमूहालम्बनानुभवजन्यतावद्विषयकसंस्कारनाशकत्वासम्भवेन न तदुत्तरं पटादिस्मरणानुपपत्तिः, पुनः पुनः स्मरणादृढतरसंस्कारोत्पत्त्या च उत्तरोत्तरस्मरणकारणीभूतस्संस्कारः पूर्वस्मरणजन्यत्वेन कल्पनीय इति संस्कारं प्रति ज्ञानत्वेनैव कारणत्वमङ्गीकर्तव्यमिति सिद्धम् ॥ अनुभवत्वेन स्मृतिसंस्कारहेतुत्वमनङ्गीकृत्य ज्ञानत्वेनैव तद्धेतुत्वमङ्गीकुर्वतां नवीनानां मतं दर्शयति * स्मृतेरपीति * अत्रापिनाऽनुभवस्य परिग्रहः । एतन्मते भावनालक्षणे अनुभवजन्यत्वस्थाने ज्ञानजन्यत्वं निवेशनीयम् ॥

**मू * स्थितस्थापकं लक्षयति * अन्यथेति * संख्यादयोऽष्टौ नैमित्तिकद्रवत्ववेगस्थितस्थापकाः सामान्यगुणाः । अन्ये रूपादयो विशेषगुणाः । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणगुणावृत्तिजातिमद्गुणत्वं विशेषगुणत्वम् ॥**

व्या ॥ अत्र बोधक्रमः तर्कसङ्ग्रहसर्वस्वे निरूपितः । यद्यपि "श्लो, संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा, गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः," इति विश्वनाथपञ्चाननभट्टाचार्य-

वचनानुसारेण स्थितस्थापकसंस्कारस्य सामान्यगुणत्वं न बोध्यते, तथापि महादेवभट्टेन मूलस्थवेगपदं भावनातिरिक्तसंस्कारपरम् तेन स्थितस्थापकस्यापि सङ्ग्रह इत्युक्तम् । सामान्यगुणत्वञ्च रूपस्पर्शान्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकसंयोगविभागवेगद्रवत्वावृत्तिजातिशून्यगुणत्वम्, द्रव्यविभाजकोपाधेर्व्याप्यतावच्छेदिका संयोगविभागवेगद्रवत्वावृत्तिर्याजातिः तच्छून्यत्वे सति गुणत्वमित्यर्थ । तथा च द्रव्यविभाजकोपाधिः पृथिवीत्वादिः, तद्व्याप्यतावच्छेदिका गन्धत्वशीतत्वोष्णत्वादिरूपाजातिः तच्छून्यत्व सङ्ख्यादिसामान्यगुणेषु विद्यत इति समन्वयः । रूपस्पर्शान्यत्वानुपादाने जलीयशुक्लरूपे वायवीयानुष्णाशीतस्पर्शे च अतिव्याप्तिः, द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकगन्धत्वशीतोष्णस्पर्शत्वादिजातिशून्यत्वस्य तत्र सत्त्वात् (रूपत्वशुक्लरूपत्वस्पर्शत्वानुष्णाशीतस्पर्शत्वादेः द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वं नास्ति) अतस्तदन्यत्वनिवेश । जातौ विभागाद्यवृत्तित्वानिवेशे द्रव्यविभाजकतावच्छेदकपृथिवीत्वव्याप्यतावच्छेदकशब्दविशेषजनकतावच्छेदकजात्यवच्छिन्ने कठिनावयवद्वयसंयोगे तादृशे विभागे द्रव्यविभाजकोपाधिरूपतेजस्त्वजातिव्याप्यतावच्छेदकजात्यवच्छिन्ने तेजोवेगातिशये द्रव्यविभाजकतावच्छेदकतैजसत्वरूपजातिव्याप्यतावच्छेदकात्यन्तानलसंयोगनाश्यतावच्छेदकवैजात्यावच्छिन्न घृतादिवृत्तिद्रवत्वे च तादृशजातिशून्यत्वाभावादव्याप्तिः । जातौ तत्तदवृत्तित्वनिवेशे तु तादृशगन्धत्वादिजातिशून्यत्वमादाय समन्वयो बोध्यः । कर्मादावतिव्याप्तिवारणाय गुणत्वनिवेशः । पृथिवीत्वादिव्याप्यतावच्छेदकघटैकत्वत्वादिकमादाय तादृशसङ्ख्यायामव्याप्तिवारणाय जातिपदम् । तन्निवेशे घटैकत्वत्वादेर्जातित्वा-

भावान्नाव्याप्तिः। द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वं द्रव्यविभाजकैकैकोपाधिव्याप्यतावच्छेदकत्वरूपं ग्राह्यम्, अन्यथा संख्यात्वादिजातेरपि द्रव्यविभाजकतावच्छेदकपृथिवीत्वादिनवकप्रत्येकाभावकूटवद्वृत्तितावच्छेदकत्वरूपव्याप्यतावच्छेदकत्वस्य सत्त्वेन तच्छून्यत्वाभावादव्याप्तिस्स्यात् ॥

विशेषगुणा इति * श्लो, बुद्ध्यादिषट्क स्पर्शान्ताः स्नेहस्सांसिद्धिको द्रव, अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः, इति विश्वनाथपञ्चाननवचनम्। श्लो. रूपं गन्धो रसस्स्पर्शः स्नेहस्सांसिद्धिकोद्रवः, बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिकागुणाः, इति वचनान्तरम् * द्रव्यविभाजकोपाधीति * द्रव्यविभाजकोपाधिद्वयसमानाधिकरणा ये गुणाः तदवृत्तिजातिमत्त्वे सति गुणत्वं विशेषगुणत्वमित्यर्थः। द्रव्यविभाजकोपाधिद्वयं पृथिवीत्वजलत्वादिरूपं धर्मद्वयं, तत्समानाधिकरणा ये गुणाः द्वित्वद्विपृथक्त्वसंयोगादयः, तदवृत्तिजातिमत्त्वविशिष्टगुणत्वं रूपादिविशेषगुणेषु विद्यत इति समन्वयः। रूपे नीलत्वादिकं रसे आम्लत्वादिकं गन्धे गन्धत्व सुरभित्वमसुरभित्वं वा स्पर्शे उष्णत्व शीतत्वं वा सांसिद्धिकद्रवत्वे सांसिद्धिकद्रवत्वत्व स्नेहादिषु दशसु गुणेषु स्नेहत्वादिकं भावनायां भावनात्वञ्च जाति समुपादाय लक्षणसमन्वयो बोध्यः। उपाधिद्वयसमानाधिकरणत्वञ्च प्रत्येकं तत्तदुपाधिद्वयाधिकरणवृत्तित्वरूपम्, अन्यथा तत्तदुपाधिद्वयाधिकरणाप्रसिद्ध्याऽसम्भवापत्ते. ॥

ननु एतल्लक्षणमेकत्वादावतिव्याप्त, तादृशजातिपदेन एकत्वत्वादेर्ग्रहीतुं शक्यत्वादिति चेन्न, तादृशोपाधिद्वयसमानाधिकरणवृत्तिः गुणत्वन्यूनवृत्तिर्याजातिः तच्छून्यत्वविशिष्टगुणत्वस्य लक्ष-

णत्वात्, तथा च संख्यात्वादितादृशजातेः एकत्वादौ सत्त्वेन तच्छून्यत्वाभावान्नातिव्याप्तिः। न चैवमपि परिमाणादिष्वतिव्याप्तिः, कस्यापि परिमाणस्य उपाधिद्वयसामानाधिकरण्याभावेन परिमाणत्वादेस्तादृशजातित्वासम्भवात्। किं च स्थितस्थापकवृत्तिगुणत्वव्याप्यजातेः तादृशोपाधिद्वयसमानाधिकरणवृत्तित्वाभावेन निरुक्तजातिपदेन तस्य ग्रहीतुमशक्यतया तादृशजातिशून्यत्वस्य स्थितस्थापके सत्त्वादतिव्याप्तिरिति वाच्यम्, यद्रूपावच्छिन्नसमानाधिकरण यत्किंचिद्द्रव्यविभाजकोपाधिद्वय तद्भिन्ना स्थितस्थापकवृत्तिभिन्ना च या जातिः तादृशजातिमत्त्वविशिष्टगुणत्वं लक्षणं परिष्करणीयम्, संख्यात्वैकत्वत्वादेरपि यद्रूपपदेन धर्तुं शक्यतया तत्तद्भिन्नजातिपदेन एकत्वत्वसंख्यात्वादेर्ग्रहीतुमशक्यतया नातिव्याप्तिरेकत्वादौ। यद्रूपपदेन महत्त्वत्वपरिमाणत्वादेर्धर्तुं शक्यतया तत्तद्भिन्नजातिपदेन तस्योपादातुमशक्यतया न परिमाणेऽतिव्याप्तिः। यद्रूपपदेन संख्यात्वादेर्धर्तुं शक्यतया (यद्रूपपदेन रूपत्वादेर्धर्तुं शक्यत्वेऽपि) तत्तद्भिन्नजातिपदेन नीलत्वपीतत्वाद्यवान्तरजातिमादाय समन्वयसम्भवः। वीप्सानादरे यद्रूपपदेन संख्यात्व तद्भिन्नजातिपदेन संयोगत्वादिकमादाय संयोगादावतिप्रसङ्गः। स्थितस्थापकस्य पृथिवीमात्रवृत्तित्वाङ्गीकारे यद्रूपपदेन संख्यात्वादिक जातिपदेन स्थितस्थापकत्वञ्चादाय स्थितस्थापकेऽतिप्रसङ्गवारणाय स्थितस्थापकवृत्तिभिन्नत्वं जातौ विशेषणं देयम्, स्थितस्थापकस्य पृथिव्यादिचतुष्टयवृत्तित्वाङ्गीकर्तृमते यद्रूपपदेन स्थितस्थापकत्वस्य ग्रहीतुं शक्यतया तत्र नातिव्याप्तिरिति तद्भिन्नत्वं नोपादेयमेव। यद्रूपावच्छिन्नसामानाधिकरण्यस्य समवायघटितस्य निवेशनीयतया यद्रूपपदेन घट-

वादेर्धर्तुमशक्यतया तत्तद्भिन्नजातिपदेन घटत्वादेर्धर्तुंशक्यतया घटादावतिव्याप्तिवारणाय गुणत्वदलम् । ननु शुक्लरूपेऽव्याप्तिः, यद्रूपपदेन रूपत्वशुक्लत्वादेर्धर्तुंशक्यतया तत्तद्भिन्नजातिपदेन रूपत्वशुक्लत्वादेरग्राह्यतया नीलत्वपीतत्वादीनां तत्तद्भिन्नजातिपदेनोपादातुं शक्यत्वेपि शुक्लरूपेऽभावाच्च इति वाच्यम्, तत्तद्भिन्नजातिपदेन पार्थिवशुक्लत्वजलीयशुक्लत्वादिजातिमादाय समन्वयसम्भवात् । (तत्तद्भिन्नजातिसमानाधिकरणजातिमत्त्वविशिष्टगुणत्वस्य लक्षणत्वात्, तत्तद्भिन्ननीलत्वादिसमानाधिकरणरूपत्वादिजातिमादाय समन्वयसम्भवात् )

भावनान्यो यो वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्वनैमित्तिकद्रवत्वान्यत्वे सति गुणत्वविशेषगुणत्वम्, इति महादेवभट्टेन परिष्कृतम् (अत्र भावनान्यत्व स्पर्शावृत्तिधर्मसमवायिविशेषणम् ) वायुवृत्तिवृत्तिः स्पर्शावृत्तिर्योधर्मः संख्यात्वपरिमाणत्वादिरूपो धर्मः (धर्मसप्तकं) भावनान्यतद्धर्मसमवायिभिन्नत्वस्यगुरुत्वनैमित्तिकद्रव्यत्वादिभिन्नत्वगुणत्वयोश्च रूपादिषु षोडशविशेषगुणेषु विद्यमानत्वात्समन्वयः । भावनान्यत्वस्य सत्यन्तघटकसमवायिविशेषणत्वाभावे भावनायामव्याप्तिः । वायुवृत्तिवृत्तित्वस्य धर्मविशेषणत्वाभावे स्पर्शावृत्तिरूपत्वरसत्वादिधर्मसमवायिभिन्नत्वस्य रूपादावभावादव्याप्तिः, तन्निवेशे रूपत्वादेर्वायुवृत्तिवृत्तित्वाभावान्नाव्याप्तिः । स्पर्शावृत्तित्वस्य धर्मविशेषणत्वाभावे वायुवृत्तिवृत्तिधर्मपदेन सत्तादिकमादायासम्भवः स्पर्शेऽव्याप्तिश्च । तादृशधर्मसमवायिभिन्नत्वानुपादाने संयोगादावतिव्याप्तिः । गुरुत्वनैमित्तिकद्रवत्वान्यत्वानुपादाने गुरुत्वनैमित्ति-

17

कद्रवत्वयोरतिव्याप्तिः । सांसिद्धिकद्रवत्वसंग्रहाय नैमित्तिकद्रवत्वान्यत्वनिवेशः ॥

मू * कर्मणो लक्षणमाह * चलनेति * उत्क्षेपणादीनां कार्यभेदमाह * ऊर्ध्वेति * शरीरेति * वक्रतासम्पादकमाकुंचनम्, ऋजुतासम्पादकंप्रसारणमित्यर्थः ॥ सामान्यं लक्षयति * नित्यमिति * संयोगेतिव्याप्तिवारणाय नित्यमिति । परमाणुपरिमाणादावतिव्याप्तिवारणायानेकेति । अनुगतत्वं समवेतत्वम्, तेन नाऽभावादावतिव्याप्तिः ॥ विशेषं लक्षयति * नित्येति * समवायं लक्षयति * नित्येति * संयोगेऽतिव्याप्तिवारणाय नित्येति । आकाशा-

समवायलक्षणे, अनुगमः * नित्यत्वे सति संसर्गताविशिष्टत्वं समवायस्य लक्षणम्, संसर्गतावैशिष्ट्यञ्च स्वरूप स्वविशिष्टभेदवत्त्वोभयसम्बन्धेन; भेदे स्ववैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नसंसर्गतानिरूपित प्रतियोगितावत्त्वसम्बन्धेन, प्रतियोगितावत्ताच स्वनिष्ठावच्छेदकताकप्रतियोगिताकत्वसम्बन्धेन, इति ॥

समन्वयस्तु, नित्यत्वेसति सम्बन्धत्वमिति समवायलक्षणस्यनित्यस्वरूपसम्बन्धेऽतिव्याप्तिराशंक्यते, एवं समवायस्यापि स्वात्मकस्वरूपसम्बन्धित्वेन असम्भवो ह्यापत्स्यते, अतोऽयमनुगमः नित्यत्वेसतिसंसर्गताविशिष्टत्वमिति, वैशिष्ट्यं स्वरूपस्वविशिष्टभेदवत्त्वाभ्याम्, भेदपदेन संसर्गतानिरूपितप्रतियोगितावान्नेतिप्रतीतिसिद्धः सम्बन्धप्रतियोगिभेदो ग्राह्यः । भेदे स्ववैशिष्ट्यं स्वावच्छेदकावच्छिन्नसंसर्गतानिरूपितप्रतियोगितावत्त्वसम्बन्धेन, संसर्गतापदेन समवायत्वावच्छिन्नसंसर्गताग्रहणे तदवच्छेदकावच्छिन्नसंसर्गतानिरूपितप्रतियोगिता समवायसम्बन्धिनिष्ठा

दावतिव्याप्तिवारणायसम्बन्धेति ॥ अयुतसिद्धलक्षणमाह * ययोरिति * नीलो घट इति विशिष्टबुद्धिः विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डीपुरुष इति विशिष्टबुद्धिवत् इति समवायसिद्धिः * अवयवावयविनाविति * द्रव्यसमावायिकारणमवयवः, जन्यद्रव्यमवयवि ॥ प्रागभावं लक्षयति * अनादिरिति * आकाशादावतिव्याप्तिवारणाय सान्त इति घटादावतिव्याप्तिवारणायानादिरिति । प्रतियोगिजनकः प्रतियोगिसमवायिकारणवृत्तिः भविष्यतीतिव्यवहारहेतुः प्रागभावः ॥ ध्वंसं लक्षयति * सादिरिति * घटादावतिव्याप्तिवारणायानन्तेति । आकाशादावतिव्याप्तिवारणाय सादिरिति । प्रतियोगिजन्यः प्रतियोगिसम-

---

प्रतियोगिता, वक्ष्यमाणसम्बन्धेन तद्वत्त्वं निरुक्तभेदेऽस्ति, प्रतियोगितावत्त्वं स्वनिष्ठावच्छेदकताकप्रतियोगिताकत्वसम्बन्धेन, स्वविशिष्टभेदवत्त्वरूपद्वितीयसम्बन्धः सम्बन्धिभिन्नत्वस्थानीयः, तथाच समवाये सम्बन्धिभिन्नत्वाभावेपि समवायत्वावच्छिन्नसंसर्गतानिरूपितप्रतियोगितावत्समवेतभेदस्यानुगमघटकस्य सत्त्वान्नासम्भव इति ॥

अथवा, नित्यत्वे सति संसर्गताविशिष्टसंसर्गताश्रयत्वं समवायस्व लक्षणम् , संसर्गतायां संसर्गतावैशिष्ट्यञ्च स्वतादात्म्य स्वविशिष्टान्यवृत्तित्वोभयसम्बन्धेन, स्ववैशिष्ट्यञ्च स्वनिरूपितप्रतियोगिताश्रयत्व स्वनिरूपितानुयोगिताश्रयत्वान्यतरसम्बन्धेन ॥

समन्वयस्तु, नित्यत्वेसति संसर्गताविशिष्टसंसर्गतावत्त्वमिति, वैशिष्ट्यं स्वतादात्म्य स्वविशिष्टान्यवृत्तित्वाभ्याम् , स्वपदेन समवायत्वावच्छिन्नसंसर्गता ग्राह्या, वक्ष्यमाणान्यतरसम्बन्धेन स्वविशिष्टान्यः न सम-

**वायिकारणवृत्तिः ध्वस्तइतिव्यवहारहेतुः ध्वंसः ॥ अत्यन्ताभावं लक्षयति * त्रैकालिकेति * अन्यान्याभावेतिव्याप्तिवारणाय संसर्गेति। ध्वंसप्रागभावयोरतिव्याप्तिवारणाय त्रैकालिकेति ॥**

व्या ॥ नित्यमितीति * अत्र नित्यत्वं प्रागभावाप्रतियोगित्वं ध्वंसाप्रतियोगित्व वा भवतु, एकतरनिवेशेनापि संयोगादेरनेकसमवेतस्य वारणं भवति। एकपदमत्र स्वरूपकीर्तनपरमेव (विचारान्तरं दीपिकायां प्रत्यक्षपरिच्छेदे तर्कसङ्ग्रहसर्वस्वे च तद्विचारावसरे कृतम्) विशेषं लक्षयतीति * ननु विशेषपदार्थाङ्गीकारे कि प्रमाणमितिचेन्न, परमाणुषु परस्परभेदसाधनायैव विशेषाङ्गी-

---

वायप्रतियोग्यनुयोगी च, किन्तु समवायः, तद्वृत्तित्वं तादात्म्यञ्चास्ति निरुक्तसंसर्गतायाम्। वैशिष्टयं स्वनिरूपितप्रतियोगिताश्रयत्व स्वनिरूपितानुयोगिताश्रयत्वान्यतरसम्बन्धेन, स्वं संसर्गता, तन्निरूपितप्रतियोगिताश्रयस्समवायसम्बन्धप्रतियोगी, तन्निरूपितानुयोगिताश्रयः तदनुयोगी, अन्यतरसम्बन्धेन स्वविशिष्टान्यः समवायः, तद्वृत्तिसंसर्गतावत्वस्य समवाये सत्वाल्लक्षणसङ्गतिः। द्रव्यत्वाभावादीनांलाघवाद्द्रव्यत्वाभावादिरेक एवसम्बन्धः, घटादीनां महाकाले कालिकसम्बन्धो लाघवादेक एवमहाकाल इति स्वरूपसम्बन्धस्य क्वचित्प्रतियोगिरूपता क्वचिदनुयोगिरूपता, तथाच संसर्गताविशिष्टस्वरूपनिरुक्तलक्षणे सम्बन्धघटकप्रतियोगिभेदस्य निरुक्तमहाकालस्वरूपसम्बन्धे सत्वादतिव्याप्तिः, अतस्संसर्गताविशिष्टसंसर्गतात्वरूपमिदं लक्षणं स्वीकृतम्, महाकालस्वरूपसम्बन्धः स्वनिरूपितानुयोगिताश्रयत्वात् न निरुक्तान्यतरसम्बन्धेन स्वविशिष्टान्य इति तन्निष्ठसंसर्गतायास्तद्विशिष्टान्यवृत्तित्वाभावात् न कालिकसम्बन्धेऽतिव्याप्तिः, इति ॥

करणस्यावश्यकत्वात् । अयं परमाणुः इतरभिन्नः एतद्विशेषा-दितिरीत्यैव परमाणुषु परस्परभेदस्साधनीयः, अयं विशेषः इतर-भिन्नः तादात्म्येनैतद्विशेषादितिरीत्या विशेषैरेव विशेषेष्वपीतरभे-दस्य साधयितुं शक्यतया न विशेषेषु विशेषांतरभेदसाधनार्थं पदार्थान्तरापेक्षेति नानवस्था ॥ वैशेषिकमतानुसारेण समवाय-मनुमानेनसाधयति * नीलोघट इति * (नैयायिकमते प्रत्य-क्षमेव समवायसिद्धौ प्रमाणम्, तत्र प्रत्यक्षे विशेष्यविशेषणयोरिव तत्संसर्गरूपस्य समवायस्यापि विषयत्वमिति तन्मतम्) दण्डी पुरुष इति विशिष्टबुद्धौ दण्डपुरुषयोस्सम्बन्धस्संयोगरूपो यथा

---

अयुतसिद्धानुगमः * अधिकरणताविशिष्टभेदवत्त्वमयुतसिद्धत्वम्, भेदे अधिकरणतावैशिष्ट्यञ्च स्वविशिष्टभेदावच्छिन्नप्रतियोगिताकत्वस-म्बन्धेन, भेदे स्ववैशिष्ट्यञ्च स्वविशिष्टवस्तुप्रतियोगिकभेदविशिष्टत्व स्व-विशिष्टवस्तुप्रतियोगिकत्वोभयसम्बन्धेन, प्रथमसम्बन्धघटकवस्तुनि स्ववै-शिष्ट्यञ्च स्वनिरूपकभेदप्रतियोगितावच्छेदकत्वसम्बन्धेन, द्वितीयसम्ब-न्धघटकवस्तुनि स्ववैशिष्ट्यञ्च स्वसमानाधिकरणेत्यादिव्यापकत्व स्वा-श्रयतादात्म्योभयसम्बन्धेन, तत्र स्वाधिकरणता च स्वविशिष्टाधेयता-त्वसम्बन्धेन, आधेयतायां स्ववैशिष्ट्यञ्च स्वाश्रयाधिकरणकालनिरूपि-तत्व स्वनिरूपकभेदप्रतियोगितावच्छेदकधर्मनिष्ठत्वोभयसम्बन्धेन, भेदप्र-तियोगितावच्छेदकता च अवच्छिन्नत्वसम्बन्धेन । अत्राधिकरणतापदेन कपालस्संयोगादिनाघटवान्नेतिप्रतीतिसिद्धभेदनिरूपिता ग्राह्या ॥

समन्वयस्तु, अधिकरणताविशिष्टभेदवत्त्वमयुतसिद्धत्वम्, अधिक-रणतापदेन कपालस्संयोगादिनाघटवान्नेतिप्रतीतिसिद्धभेदनिरूपिता ग्रा-ह्या । अधिकरणताविशिष्टभेदः घटभेदविशिष्टकपालभेदावच्छिन्नप्रतियो-गिताकभेदः घटकपालान्यतरत्वरूपः । तद्भेदे अधिकरणतावैशिष्ट्यं स्व-विशिष्टभेदावच्छिन्नप्रतियोगिताकत्वसंम्बन्धेन, वक्ष्यमाणसम्बन्धाभ्यां स्व-

भासते तथा नीलो घट इत्यत्रापि नीलरूपघटयोस्सम्बन्धः समवायोपि भासत इत्यभिप्रायः। नचात्रापि संयोगस्वरूपसम्बन्धान्तरविषयकत्वं सम्भवति, बाधात्। नापि तत्र स्वरूपसम्बन्धविषयकत्वमङ्गीकरणीयम्, प्रतियोग्यनुयोगिभेदेन भिन्नानामनन्तानां स्वरूपाणां सम्बन्धत्वकल्पने गौरवादेकसमवायासिद्धिः। नचैवं स्पर्शसमवायवति वायौ रूपसमवायस्यापि समवायस्यैक्येन सत्त्वात् रूपवान्वायुरिति प्रत्ययप्रसङ्ग इति वाच्यम्, सम्बन्धसम्बन्ध्युभयसत्ताया: प्रतीतिनियामकत्वाङ्गीकारात् * द्रव्यसमवायिकारणमिति * रूपादिसमवायिकारणत्वस्य घटादावपिसत्त्वाद्द्रव्यपदम् * जन्यद्रव्यमिति * द्रव्यमवयवीत्युक्तौ परमाणु-

---

विशिष्टभेदः कपालभेदः तदवच्छिन्नप्रतियोगिताकत्वमन्यतरत्वात्मकभेदेस्ति। भेदे स्ववैशिष्ट्यञ्च स्वविशिष्टवस्तुप्रतियोगिकभेदविशिष्टत्व स्वविशिष्टवस्तुप्रतियोगिकत्वाभ्यां, वक्ष्यमाणसम्बन्धेन स्वविशिष्टं प्रथमवस्तुपदप्रतिपाद्यं घटादि, तत्प्रतियोगिकभेदविशिष्टत्वं सामानाधिकरण्यसम्बन्धेन कपालभेदेऽस्ति, वक्ष्यमाणसम्बन्धेन स्वविशिष्टं द्वितीयवस्तुप्रतिपाद्यं कपालादि, तत्प्रतियोगिकत्वमप्यस्ति। प्रथमसम्बन्धघटकवस्तुनि स्ववैशिष्ट्यञ्च स्वनिरूपकभेदप्रतियोगितावच्छेदकत्व सम्बन्धेन, स्वं अधिकरणता, तन्निरूपकभेदः संयोगादिना कपालः घटवान्नेतिभेदः, तत्प्रतियोगितावच्छेदकत्वं घटेऽस्ति। द्वितीयसम्बन्धघटकवस्तुनि स्ववैशिष्ट्यं स्वसमानाधिकरणेत्यादिव्यापकत्व स्वाश्रयतादात्म्याभ्याम्, वक्ष्यमाणसम्बन्धघटितव्यापकत्वं स्वाश्रयतादात्म्यञ्च द्वितीयवस्तुप्रतिपाद्ये कपालेऽस्ति। व्यापकत्वघटकस्वाधिकरणता स्वविशिष्टाधेयतात्वसम्बन्धेन, वक्ष्यमाणसम्बन्धाभ्यां स्वविशिष्टाधेयता "इदानीं कपालेघटोऽस्तीति, प्रतीतिसिद्धा कालनिरूपिता घटनिष्ठा कपालावच्छिन्ना आधेयता। आधेयतायां स्ववैशिष्ट्यं स्वाश्रयाधिकरणकालनि-

ष्वतिव्याप्तिः, जन्यमवयवीत्युक्तौ रूपादावतिव्याप्तिः, अत उभयोपादानम् * प्रतियोगिजनकइति * कार्यमात्रं प्रति कार्यप्रागभावस्य कारणत्वेन प्रतियोगिजनकत्वं (कार्यं प्रति कार्यप्रागभावस्य कारणत्वानङ्गीकारे तद्घटसामग्र्या जागरूकतादशायां तद्घटोत्पत्त्यनन्तरमपि पुनः तद्घटोत्पत्त्यापत्तिरपरिहारा स्यात्) " ध्वंसप्रागभावयोस्स्वप्रतियोगिसमवायिदेशवृत्तित्वनियमेन घटादिरूपप्रतियोगिसमवायिभूतकपालादिवृत्तित्व घटादिप्रागभावे सम्भवतीति लक्षणसमन्वयः । प्रागभावसद्भावे प्रमाणं दर्श

---

रूपितत्व स्वनिरूपकभेदप्रतियोगितावच्छेदकधर्मनिष्ठत्वाभ्याम्, स्वपदग्राह्याधिकरणताश्रयः कपालः, तदाश्रयकालनिरूपितत्वरूपप्रथमसम्बन्धः एवं तदधिकरणतानिरूपकभेदः कपालस्संयोगादिनाघटवान्नेति भेदः तत्प्रतियोगितावच्छेदकः घटः तन्निष्ठत्वरूपद्वितीयसम्बन्धश्च आधेयतायामस्ति । व्यापकत्वघटकभेदप्रतियोगितावच्छेदकता च अवच्छिन्नत्वसम्बन्धावच्छिन्ना, निरुक्ताधेयतायामवच्छिन्नत्वसम्बन्धेन न कपालवान्नेतिभेदः, किन्त्वन्यभेदः, तत्प्रतियोगितावच्छेदकत्वाभावरूपव्यापकत्वमस्तीति अधिकरणताविशिष्टभेदवत्त्वरूपलक्षणस्य अयुतसिद्धयोर्लक्षणसङ्गतिः ॥ तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोः अवश्यमेकमपराश्रितमेवावतिष्ठते, अत्रावपूर्वकस्थाधातोः कालवृत्तित्वमर्थः, अपराश्रितत्वं अपरावच्छिन्नत्वपर्यवसितम्, एवकारार्थः इतरतादात्म्याभावरूपव्याप्यत्वम्, तस्य च कालवृत्तित्वेऽन्वयः, तथाच ययोर्मध्ये एकमपरावच्छिन्नत्वव्याप्यकालवृत्तितावत् तावयुतसिद्धावित्यर्थः । इदमेवायुतसिद्धत्वं " यन्निष्ठकालनिरूपिते " त्यादिना न्यायबोधिन्यां सङ्गृहीतम्, तस्यायमनुगमः "अधिकरणताविशिष्टभेदवत्त्व" मिति ॥ ययोर्मध्ये एकमपराश्रितमेवावतिष्ठत इति अविनश्यदवस्थत्वघटितं सङ्ग्रहोक्तलक्षणं " समवायिकारणनाशाद्द्रव्यनाश " इति पक्षे दुष्टमित्याशयेन, तदघटितं

यति * भविष्यतीति * सादिरितीति * प्रतियोगिजन्य इति * ध्वंसं प्रति प्रतियोगिनः कारणत्वेन प्रतियोगिजन्यत्वं पूर्वोक्तन्यायेन प्रतियोगिसमवायिकारणवृत्तित्वं च सम्भवतीति समन्वयः। ध्वंसे प्रमाणं दर्शयति * ध्वस्तइतीति * प्रागभावस्थले प्रतियोगिजनकः प्रतियोगिसमवायिकारणवृत्तिरिति ध्वंसस्थले प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिरिति च न लक्षणप्रतिपादकं वाक्यम्, किन्तु मूलोक्तमेव, उभयत्र स्वप्रतियोगिसमवायिकारणवृत्तित्वस्य ध्वंसप्रागभावयोस्सत्त्वेन स्वप्रतियो-

---

कारिकोक्तन्तु "असमवायिकारणनाशाद्द्रव्यनाश इत्याशयेन। तद्घटितलक्षणे घटत्वजातेः ईश्वरतद्ज्ञानयोः आत्मात्मत्वयोः नित्यद्रव्यविशेषयोः नित्यत्वेन स्वनाशाप्रसिद्ध्याऽव्याप्तेः, अविनश्यदवस्थत्वं ध्वंसविशिष्टत्वाभावः, वैशिष्ट्यं स्वप्रतियोगित्व स्वाव्यवहितपूर्वत्वाभ्याम्, यदव्यवहितोत्तरक्षणे घटादिर्नश्यति तत्क्षणे न निरुक्तमविनश्यदवस्थत्वम्" इति न दोषः॥ (तत्तदयुतसिद्धयोर्लक्षणसमन्वयकाले प्रथमवस्तुपदेन अवयविगुणक्रियाविशेषाणां मध्ये यथायोगमेकैकं ग्राह्यम्, द्वितीयवस्तुपदेन अवयवगुणिक्रियाश्रयनित्यद्रव्याणां मध्ये एकैकं ग्राह्यम्, अधिकरणतापदेन द्वितीयवस्तुपदप्रतिपाद्यावयवादिनिष्ठाधिकरणता ग्राह्या) तावयुतसिद्धाविति * अयुतसिद्धत्वं व्याप्यवृत्तीति केषांचिन्मतम्, तत्र च मते इमावयुतसिद्धावित्येव व्यवहार आद्रियते। अन्येषां मतेत्वव्याप्यवृत्त्येवायुतसिद्धत्वम्, तत्र हि तेनायमयुतसिद्ध इत्यस्यैव व्यवहारस्य स्वीकारः। प्रथममते तदुभयत्वम् द्वितीये तदन्यतरत्वमितिलक्षणद्वयतात्पर्येण न्यायबोधिन्यामुभयपदमुपात्तम्, तथाच तदुभयत्वं तत्तदन्यतरत्वं वा मतभेदेन लक्षणमिति हृदयम्॥

पूर्वोक्तानुगमः यन्निष्ठकालनिरूपितेत्यादिलक्षणघटकानेकपदार्थघटितत्वाद्गुरुभूतः, अतो वस्तुविशिष्टमुभयत्वमन्यतरत्वं वा लघुलक्षणं सम्भ-

गिजनकत्व स्वप्रतियोगिजन्यत्वदलयोस्सार्थक्यसम्भवेपि उभयत्रापि स्वप्रतियोगिसमवायिकारणवृत्तित्वस्य प्रयोजनाभावात्, निरर्थकदल घटितस्य लक्षणत्वासम्भवात्। अथवा स्वप्रतियोगिजनकत्वमात्रं स्वप्रतियोगिजन्यत्वमात्रं वा लक्षणं, अन्यत्स्वरूपकीर्तनपरमिति वक्तव्यम् ॥

त्रैकालिकेतीति * ससर्गेति * संसर्गाभावत्वञ्च तादात्म्यभिन्नसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वम्, तथाच नान्योन्याभावेऽतिव्याप्तिः। ध्वसप्रागभावयोरपि उत्तरकालपूर्वकालरूपप्रतियोगितावच्छेदकसम्बन्धसत्त्वेन तादात्म्याभिन्नसंसर्गावच्छिन्नप्रतियोगिताकत्वस्य सत्त्वादतिव्याप्तिवारणाय त्रैकालिकेति। अथवा संसर्गाभावत्व अन्योन्याभावभिन्नाभावत्वम्, तथाच ध्वंसप्रागभावयोरन्योन्याभावभिन्नाभावत्वस्य सत्त्वादतिव्याप्तिवारणाय त्रैकालिकेति। त्रैकालिकत्वञ्च नित्यत्वम्, तच्च ध्वसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वम्, तन्निवेशे तस्य तत्राभावान्नातिव्याप्तिः। मूले सङ्ग्रहान्ते * भूतले घटोनास्तीति * अत्र घटाभावे भूतलनिरूपितविशेष्यता घटाभाववद्भूतलमित्यत्र घटाभावे भूतलनिरूपितविशेषणता सन्निकर्षः, अत्र विशेष्यत्वविशेषणत्वे स्वरूपसम्बन्धविशेषौ एतत्प्रपञ्चः तर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थ-

---

वति, वैशिष्ट्यं स्ववृत्तित्व स्वविशिष्टवस्तुवृत्तित्वाभ्याम्, वस्तुनि वैशिष्ट्यं स्वनिष्ठकालनिरूपिताधेयतात्वव्यापकत्वसम्बन्धेन, व्यापकता अवच्छिन्नत्वसम्बन्धावच्छिन्ना। अयुतसिद्धत्वव्यवहारस्य व्यासज्यवृत्तित्वमते उभयत्वं पर्याप्तिसम्बन्धेन लक्षणम्, अव्यासज्यवृत्तित्वमते स्वरूपसम्बन्धेन, प्रथमवस्तुपदप्रतिपाद्यं घटादि, द्वितीयवस्तुपदप्रतिपाद्यं कपालादीति ॥

सङ्ग्रहे अभावनिरूपणप्रस्तावे द्रष्टव्यः । नन्वत्र प्रतीतिद्वयेपि एकैव (एकरूपैव) विशेषणतातदात्म्यसन्निकर्षो भवतु न तु विभिन्नरूपं- सान्निकर्षद्वयमिति चेन्न, तथात्वे प्रतीतिवैलक्षण्यानुपपत्तेः । न च भूतले घटोनास्तीत्यत्र विशेषणत्वावच्छिन्नाधेयतायाः घटा- भाववद्भूतलमित्यत्र विशेषणत्वावच्छिन्नाधारतायाश्च सन्निकर्षत्वो- पगमेनैव सामञ्जस्ये उक्तप्रतीत्योर्वैलक्षण्यनिर्वाहाय विशेष्यतावि- शेषणतारूपसन्निकर्षद्वयाङ्गीकरणमनावश्यकमिति वच्यम्, पूर्वोपद- र्शितप्रतीत्योः तादृशाधेयत्वाधारत्वयोस्सन्निकर्षत्वाङ्गीकारे विनि- गमनाविरहेण विशेष्यताविशेषणतारूपसन्निकर्षद्वयोपपत्तेः ॥

मू * अन्योन्याभावं लक्षयति * तादात्म्येति * प्रति- योगितावच्छेदकारोप्यसंसर्गभेदात् एकप्रतियोगिकयोरत्य- न्तान्योन्याभावयोर्भिन्नत्वम् । केवलदेवदत्ताभावाद्दण्ड्य- भावप्रतीत्याविशिष्टाभावः । एकसत्त्वेपि द्वौ नस्त इति प्रतीत्या द्वित्वावच्छिन्नाभावः । संयोगेन घटवति समवा- येन घटाभावः तत्तद्घटाभावाद्घटत्वावच्छिन्नसामान्याभाव- श्चातिरिक्तः । एवमन्योन्याभावेपि । घटत्वेन पटो नास्तीति प्रतीत्या व्यधिकरणधर्मावच्छिन्नाभावो नाङ्गीक्रि- यते पटे घटत्वं नास्तीत्यर्थात् । अतिरिक्तत्वे केवला- न्वयी । सामयिकाभावोऽत्यन्ताभाव एव समयविशेषे प्रतीय- मानः । घटाभाववति घटानयनेऽत्यन्ताभावस्यान्यत्र गम- नाभावेपि तदप्रतीतेः घटापसरणे सति प्रतीतेः भूतलघट- संयोगप्रागभावध्वंसयोः अत्यन्ताभावप्रतीतिनियामकत्वं क-

लभ्यते । घटवति तत्संयोगप्रागभावध्वंसयोरसत्त्वादेवात्यन्ताभावस्याप्रतीतिः । घटापसरणेतु संयोगध्वंसस्य सत्त्वात्प्रतीतिः घटानयनात्पूर्वं संयोगप्रागभावसत्त्वात्प्रतीतिरिति । केवलाधिकरणेनैव नास्तीतिव्यवहारोपपत्तौ अभावो न पदार्थान्तरमिति गुरवः, तन्न, अभावानङ्गीकारे कैवल्यस्य निर्वक्तुमशक्यत्वात् । अभावाभावो भाव एव, नातिरिक्तः अनवस्थाप्रसङ्गात् । ध्वंसप्रागभावः प्रागभावध्वंसश्च प्रतियोग्येव । अभावाभावोऽतिरिक्त एव, तृतीयाभावस्य प्रथमाभावरूपत्वात् नानवस्थेति नवीनाः ॥

व्या ॥ भेदलक्षणे दलसार्थक्यं तर्कसंग्रहसर्वस्वे निरूपितम् । प्रतियोगितावच्छेदकारोप्यसंसर्गभेदादित्यस्य प्रतियोगितावच्छेदकधर्मभेदात् प्रतियोगितावच्छेदकसंसर्गभेदाच्चेत्यर्थः । अत्रारोप्यसंसर्गशब्देन प्रतियोगितावच्छेदकसम्बन्धो ग्राह्य इति नृसिंहप्रकाशिकायामुक्तम् । नीलकंठीये आरोप्येतिप्राचीनमताभिप्रायेणेत्युक्तम् । "प्रसक्तिपूर्वकत्वान्निषेधस्ये"ति, न्यायमनुसरतामेतेषां मते प्रसक्त्यर्थं भूतले घटसंयोगमारोप्य तदनु निषिध्यते भूतले घटो नास्तीति । प्रतियोगितावच्छेदकधर्मभेदात् प्रतियोगितावच्छेदकसम्बन्धभेदाच्च अत्यन्ताभावस्य भेदः । अन्योन्याभावस्य तादात्म्यसम्बन्धमात्रावच्छिन्नप्रतियोगिताकतया प्रतियोगितावच्छेदकसम्बन्धभेदप्रयुक्तभेदाभावेन प्रतियोगितावच्छेदकधर्मभेदादेव अन्योन्याभावस्य बहुत्वमवगन्तव्यम् । तदेवोपपादयति * केवलदेवदत्ताभावादिति * प्रतियोगितावच्छे-

दकधर्मभेदादभावभेदमुपपादयति * विशिष्टाभाव इति * द्वित्वावच्छिन्नाभाव इति * वैशिष्ट्यरूपप्रतियोगितावच्छेदकधर्मभेदाद्विशिष्टाभावः द्वित्वरूपप्रतियोगितावच्छेदकधर्मभेदादुभयाभावश्चातिरिक्त इति भावः। केवलदेवदत्ताभावादित्यस्य दण्डाद्यविशेषितदेवदत्ताभावादित्यर्थः। दण्डयभाव इत्यस्य दण्डावच्छिन्नदेवदत्तनिष्ठप्रतियोगिताकाभाव इत्यर्थः। देवदत्ते सत्यपि दण्डरूपविशेषणाभावेपि तादृशाभावस्यानुभवसिद्धत्वादिति भावः। अत्र प्रसक्तानुप्रसक्तं विशिष्टाभावस्य त्रैविध्यं निरूप्यते, विशिष्टाभावस्त्रिविधः विशेष्याभावप्रयुक्तः विशेषणाभावप्रयुक्त उभयाभावप्रयुक्तश्चेति ; सामान्ये गुणकर्मान्यत्वविशिष्टसत्ताऽभावः सत्तारूपविशेष्याभावप्रयुक्तः, गुणे सएवाभावः गुणकर्मान्यत्वरूपविशेषणाभावप्रयुक्तः, गुणे गुणकर्मान्यत्वविशिष्टद्रव्यत्वाभावः विशेष्यविशेषणोभयाभावप्रयुक्तः। एवमुभयाभावोपि द्विविधः प्रत्येकाभावप्रयुक्तः उभयाभावप्रयुक्तश्चेति, अयोगोलाके वह्निधूमोभयाभावः धूमरूपप्रत्येकाभावप्रयुक्तः, ह्रदे सोऽभावः उभयाभावप्रयुक्तः। (गुणकर्मान्यत्वविशिष्टसत्ताभावः गुणकर्मान्यत्ववैशिष्ट्यसत्तात्वरूपधर्मद्वयावच्छिन्नप्रतियोगिताको भवति, वह्निधूमोभयाभावः वह्नित्वधूमत्वतदुभयत्वरूपधर्मत्रितयावच्छिन्नप्रतियोगिताको भवति) एवं त्रितयाभावादिकमूह्यम्। प्रतियोगितावच्छेदकसम्बन्धभेदेनात्यन्ताभावस्य भेदमुपपादयति * संयोगेनेति * तथाच संयोगेन घटो नास्ति समवायेन घटो नास्ति स्वरूपेण घटो नास्तीत्यादिप्रतीतिसिद्धाभावानां प्रतियोगितावच्छेदकसम्बन्धभेदाद्भेदोऽवगन्तव्य इति भावः। विशेषाभावसामान्याभावयोर्भेदं दर्शयति * तत्तद्घटाभावादिति *

तत्तद्घटाभावो नाम तद्व्यक्तिर्नास्ति एतद्व्यक्तिर्नास्तीत्यादिप्रतीतिसिद्धतत्तद्घटनिष्ठप्रतियोगिताकाभाव एव, न तु तत्ताविशिष्टघटाभावरूपः, तत्त्वेऽस्यापि विशिष्टाभावत्वेन पृथक्कथनासङ्गते. * घटत्वावच्छिन्नसामान्याभाव इति * स च घटो नास्तीतिप्रतीतिसिद्धः घटत्वातिरिक्तधर्मानवच्छिन्नघटत्वावच्छिन्नप्रतियोगिताको भवति * तत्तद्घटाभावाद्घटत्वावच्छिन्नसामान्याभावोऽतिरिक्त इति * अन्यथा यत्किंचिद्घटवति तद्घटाभावरूपविशेषाभावप्रतीतिवत् घटोनास्तीत्यपि प्रत्ययापत्तेः ॥

एवमन्योन्याभावोपीति * एवं भेदोपि विशिष्टभेदः उभयभेदः विशेषभेदः सामान्यभेद इति प्रतियोगितावच्छेदकधर्मभेदाद्बहुविध इत्यर्थः। प्रसक्तानुप्रसक्त्याऽऽह * घटत्वेनेति * घटत्वावच्छिन्नपटनिष्ठप्रतियोगिताकाभाव एव घटत्वेन पटो नास्तीतिप्रतीतिविषयः, अस्मिन् सौढळमते तृतीयान्तेनोल्लिख्यमानधर्मस्यप्रतियोगितावच्छेदकत्वाङ्गीकारात्। प्रतियोगितायां व्यधिकरणधर्मावच्छिन्नत्वञ्च स्वावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन धर्मविशिष्टान्यत्वम्, स्वसामानाधिकरण्याभावेन धर्मविशिष्टान्यत्वं सम्भवतीति समन्वयः * नाङ्गीक्रियत इति * अभावबुद्धिं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य कारणत्वेन तन्मते प्रतियोगितावच्छेदकघटत्वादिवैशिष्ट्यस्य प्रतियोगिनिपटादावप्रसिद्ध्या प्रतियोगितावच्छेदकाविशिष्टप्रतियोगिज्ञानाभावेन न घटत्वेन पटो नास्तीत्यभावबुद्ध्युत्पत्तिः * अर्थादिति * घटत्वेन पटो नास्तीतिवाक्याभिलपनीयः पटे घटत्वं नास्तीत्यभाव इत्यर्थः * अतिरिक्तत्व इति * घटत्वेन पटो नास्तीत्यत्र पटे

घटत्वं नोस्तीत्यर्थो नोपपद्यते, तत्र एतादृशार्थप्रत्यायनसामर्थ्याभावात्, किन्तु स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावांशे घटत्वबोधौपयिकमेव सामर्थ्यं वर्तते, "अभावबुद्धिः विशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेत" इति नियमस्तु नाङ्गीक्रियते, अतस्तस्याभावस्य अतिरिक्तत्वमङ्गीकार्यमिति तद्वाक्याभिप्रायः। घटत्वेन पटस्य कुत्राप्यविद्यमानतया घटत्वेन पटाभावस्य संयोगेन गुणाभावादेरिव केवलान्वयित्वमिति भावः। अभावमात्रस्य प्रतियोगितावच्छेदकधर्मसम्बन्धावच्छिन्नप्रतियोगिनिष्ठाधेयतानिरूपिताधिकरणतया साकं विरोधस्य अङ्गीकृततया अत्र व्यधिकरणधर्मावच्छिन्नाभावस्थले तादृशाधिकरणताया अभावविरोधिन्या अभावेन तदभावस्य केवलान्वयित्वोपपत्तिरिति। एवं द्रव्यत्वेन घटो नास्तीति सामान्यरूपेण विशेषाभावस्य घटत्वेन द्रव्यं नास्तीति विशेषरूपेण सामान्याभावस्य घटत्वेन घटपटोभयं—नास्ती (द्रव्यत्वेनद्रव्यघटोभयंनास्ति) त्याद्यभावानाञ्च सौन्दलमतेऽतिरिक्तत्वमभ्युपेयते ॥

भूतले घटसत्त्वदशायां घटाभावबुद्धिर्नजयते, तदपसरणे घटाभावबुद्धिरुदेति, एतदनुसारेण सामयिकाभावः कश्चन अंगीकर्तव्य इति वदन्तं निराचिकीर्षुः सामयिकाभावस्यात्यन्ताभावापेक्षया नाममात्रतो वैलक्षण्यं नत्वर्थत इति समाधत्ते * सामयिकाभाव इति * समयविशेषे प्रतीयमान इति * समयविशेषेषु तत्तत्समयेषु प्रतीयमानतया सामयिकाभावत्वव्यवहारः, वस्तुतस्सोत्यन्ताभाव एव, नतूत्पादविनाशशाली अतिरिक्तोऽभाव इति भावः। ननु अत्यन्ताभावस्य त्रैकालिकत्वे सर्वदा सर्वत्र विद्यमानत्वस्याङ्गीकार्यतया घटसत्त्वदशायामपि घटाभावबुद्धिप्रसङ्ग इत्यत आह*

घटाभाववतीति * दीपिकास्थस्यास्यग्रन्थस्य यथाश्रुतवाक्याभिप्रायस्सुगमः, गूढाभिप्रायस्त्वयम्, "सम्बन्धसम्बध्युभयसत्तायास्सम्बन्धिप्रतीतिनियामकत्वोपगमेन सम्बन्धिनो घटाभावस्य नित्यत्वेन घटवद्देशेपि तस्य सत्त्वेपि तत्संसर्गस्य स्वरूपसम्बन्धस्य तत्रानङ्गीकारेण सम्बन्धसम्बन्ध्युभयाभावेन न तदभावप्रतीतिः, घटाभावप्रतियोगिकस्वरूपसम्बन्धश्च घटाभावप्रतीतिकालीनतत्प्रतीतिविषयतत्तद्भूतलादिस्वरूप एव, घटवद्देशे तदभावप्रतीत्यभावेन घटवद्भूतलस्य तदभावप्रतीतिकालीनत्वाभावेन न स्वरूपसम्बन्धरूपतेति स्वरूपसम्बन्धाभावेन न तत्र घटाभावप्रतीतिसम्भव इति (घटाभावप्रतीतिकालीनतत्प्रतीतिविषयत्वान्तं परिचायकरूप न तु विशेषणम्, स्वरूपस्य तत्तद्भूतलादिस्वरूपत्वस्यैव सिद्धान्तितत्वात्) सर्वेषामप्यभावानां तत्तदभावाधिकरणस्वरूपत्वमेवाङ्गीक्रियते, नत्वतिरिक्तत्वम्, कॢप्त भूतलादिधर्मिणि अकॢप्तस्य घटाभावत्वादिधर्मस्यकल्पनायां अकॢप्तस्य भूतलाद्यतिरिक्तस्य घटाभावादिरूपस्य धर्मिणः कल्पनातो लाघवस्य विद्यमानत्वादिति वदतां गुरूणां मतमनूद्य खण्डयति * केवलाधिकरणेनैवेति * केवलाधिकरणरूपत्वाङ्गीकरणेनेत्यर्थः, स्वभिन्नघटाभावाद्यविशेषिताधिकरणरूपत्वेनेतियावत्। अत्र यद्यपि अकॢप्तधर्मिकल्पनातः अनेकेषु धर्मिषु कॢप्तेषु घटाभावत्वादिधर्मकल्पनमेव गौरवग्रस्तामित्येको दोषो विद्यते, अभावस्याधिकरणरूपत्वाङ्गीकारे गगनवृत्तिशब्दाभावस्य गगनरूपतया गगनस्येव शब्दाभावस्याप्यप्रत्यक्षत्वप्रसङ्ग इत्यपरो दोषो विद्यते, तथापि कैवल्यानिर्वचनस्याशक्यत्वमिति यथाश्रुते भासमानस्यैव 'दोषस्य सद्भावे पूर्वोक्तदोषान्तरप्रद-

र्शनमनावश्यकमित्यभिप्रायेणाह * अभावानङ्गीकारे कैवल्यस्येति * अभावानङ्गीकारे अधिकरणातिरिक्ताभावानङ्गीकारे । ननु कुतो वा कैवल्यं निर्वक्तुमशक्यमिति चेन्न, किं भूतलादिस्वरूपत्वं कैवल्यम् उत तदभावविशिष्टभूतलादिस्वरूपत्वं कैवल्यम् । नाद्यः, घटवद्भूतलस्यापि तादृशत्वेन तत्र घटाभावबुद्धिप्रसङ्गः । न द्वितीयः, अतिरिक्तस्य घटाभावस्य सिद्धत्वेन अस्मदभिमतार्थसिद्धेः ॥

ननु घटाभावस्यातिरिक्तत्वे घटाभावाभावोपि घटतदभावातिरिक्तः स्वीकार्यः, एवं तत्तदभावानामतिरिक्ततास्वीकारेऽनवस्थाप्रसङ्ग इत्यत आह * अभावाभाव इति * ध्वंसप्रागभाव इति * तस्य प्रथमाभावप्रतियोगिरूपत्वम्, एवं तृतीयाभावस्य प्रथमाभावस्यैव (भावाभावस्यैव) अतिरिक्तत्वम्, द्वितीयाभावस्य प्रथमभावरूपत्वं विज्ञेयम्, समनियतानामैक्यमिति नियम एव तेषामैक्यप्रयोजक इति भावः । प्रतियोग्येव स्वप्रतियोगिप्रतियोग्येवेत्यर्थः । स्वपद ध्वंसप्रागभावप्रागभावध्वंसैतदन्यतरपरम् । तथा च घटध्वंसप्रागभावः घटस्वरूपः समनियतप्रतीतिविषयत्वात् । स एव घटप्रागभावरूपोपि भवति, घटप्रागभावप्रत्ययदशायामपि घटध्वंसप्रागभावावगाहिनः घटध्वंसो भविष्यतीतिप्रत्ययस्य घटप्रागभावप्रत्ययसमनियतस्य जायमानत्वात् । एवं घटप्रागभावध्वंसोपि घटरूपः समनियतप्रतीतिविषयत्वात्, स एव घटध्वंसरूपोपि भवति, घटध्वंसदशायामपि घटप्रागभावो नष्ट इति घटप्रागभावध्वंसावगाहिनः तत्प्रत्ययसमनियतस्य प्रत्ययस्यानुभूयमानत्वात् । काले द्रव्यत्वनास्तीतिप्रत्ययस्याभावेन काले द्रव्यत्वाभाव इति प्रत्ययानुरोधेन च नास्तिपदसमभिव्याहारस्थले स्वरूपसम्बन्धावच्छिन्नवृत्तिमदभावविषयकत्वस्य नियतम-

ङ्गीकार्यतया द्रव्यत्वाभावाभावस्य द्रव्यत्वरूपत्वे तत्र स्वरूपसम्बन्धावच्छिन्नवृत्तित्वासम्भवेन घटादौ द्रव्यत्वाभावोनास्तीतिप्रत्ययस्य द्रव्यत्वाभावाभावात्मकद्रव्यत्वविषयकस्य प्रमात्वानुपपत्ति. । द्रव्यत्वाभावाभावस्यातिरिक्तत्वे तत्प्रत्ययस्य प्रमात्वोपपत्तिश्च भवतीति नवीनमतमुपन्यस्यति * अभावाभावोऽतिरिक्तएवेति * अतिरिक्तः भावभिन्नइत्यर्थः । ननु तर्हि सर्वेषामभावानामतिरिक्तत्वे गौरवप्रसङ्गोऽनवस्था च इत्यत. आह * तृतीयाभावस्येति * घटतदभावतदभावानां परस्पर भेद एव, परन्तु घटाभावाभावाभावस्तु घटाभावरूपो भवतीति न गौरवप्रसङ्गोऽनवस्थावेति नवीनानां मतम् ॥

इति श्रीकुरुगण्टयुपाख्यश्रीराम शास्त्रिणा विरचिते

दीपिका सर्वस्वे भगवदर्पिते अय-

थार्थानुभवादिनिरूपणं

समाप्तम् ।

श्रीलक्ष्मीगणपतये नमः ।

# दीपिकासर्वस्वे ।

## षोडशपदार्थनिरूपण प्रारम्भः ।

मू * ननु प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निश्रेयसाधिगम इति न्यायसूत्रे षोडशपदार्थानामुक्तत्वात्कथं सप्तैवेत्यत आह * सर्वेषामिति * सर्वेषां सप्तस्वेवान्तर्भाव इत्यर्थः । आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति द्वादशविधं प्रमेयम् । प्रवृत्तिर्धर्माधर्मौ । रागद्वेषमोहा दोषाः । रागः इच्छा, द्वेषो मन्युः, मोहश्शरीरादावात्मभ्रमः । प्रेत्यभावो मरणम् । फलं भोगः अपवर्गो मोक्षः, स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः । प्रयोजनं सुखप्राप्तिः दुःखहानिश्च । दृष्टान्तो महानसादिः प्रामाणिकत्वेनाभ्युपगतोऽर्थस्सिद्धान्तः । निर्णयो निश्चयः । स च प्रमाणफलम् । तत्त्वबुभुत्सोः कथावादः । उभयसाधनवती विजिगीषुकथा जल्पः । स्वपक्षस्थापनाहीना परपक्षविदलनमात्रावसाना वितण्डा । कथानाम नानाव-

**त्तर्कपूर्वोत्तरपक्षवाक्यसन्दर्भः । अभिप्रायान्तरेण प्रयुक्तस्यार्थान्तरं परिकल्प्य दूषणं छलम् ॥**

व्या ॥ ननु त्वया सप्तपदार्थाङ्गीकारे षोडशपदार्थबोधकेन प्रमाणप्रमेयेतिसूत्रेण गौतममुनिप्रणीतेन विरोध इत्यत आह * सर्वेषामिति * वैशेषिकमते भावोऽभावश्चेति पदार्थद्वयमेवाभ्युपेयते । क्रमेषु प्रमेयादीनन्तर्भावयितुं तत्तत्स्वरूपमाह * आत्मेति * प्रत्यक्षप्रमाणस्य त्वक्चक्षुश्श्रोत्रजिह्वाघ्राणमनोरूपषड्विधेन्द्रियरूपस्य द्रव्ये अनुमानादिप्रमाणत्रयस्य ज्ञाने (गुणे) अन्तर्भावस्यावगतत्वेन सूत्रारम्भे प्रमाणोपन्यासे कृतेपि तद्विभागघटितनिरूपणावश्यकत्वाभावेन प्रमेयादीनां द्रव्यादिसप्तपदार्थेष्वन्तर्भावमाह * आत्मेति * आत्मेन्द्रियशरीराणां द्रव्ये अर्थस्य पृथिव्यादिरूपस्य द्रव्यादिषु बुद्धेर्गुणे मनसो द्रव्ये प्रवृत्तेर्धर्माधर्मरूपतया गुणे दोषस्येच्छाद्वेषमोहात्मकज्ञानरूपतया गुणे मरणस्य ध्वंसरूपतयाऽभावे जननस्य संयोगरूपतया गुणे फलस्य भोगरूपतया (सुखदुःखसाक्षात्कारो भोगः) गुणे अपवर्गस्य ध्वंसरूपतया अभावेचान्तर्भावः * मरणमिति * प्रेत्य मृत्वा भावः उत्पत्तिः इति व्युत्पत्या मरणपदेन मरणानन्तरभाविजननमभिधीयते चरमप्राणशरीरसंयोगध्वंसो मरणम्, चरमः यः प्राणशरीरसंयोगः तद्ध्वंस इत्यर्थः । आद्यशरीरप्राणसंयोगो जननम् * स्वसमानाधिकरणेति * स्वसमानाधिकरणो यो दुःखप्रागभावः तदसमानकालीनो यो दुःखध्वंसः स मोक्ष इत्यर्थः । स्वपद दुःखध्वसपरम् । अस्मदादिदुःखध्वसस्य तत्समानाधिकरणदुःखप्रागभावसमानकालीनतैव । मोक्षकालिकदुःखध्वंसस्य एतादृशप्रागभावासमान-

कालीनत्वम्; यद्दुःखध्वंसोत्तरं दुःखान्तरं न जायते स दुःखध्वंसो मोक्ष इत्यर्थः। दुःखप्रागभावे स्वसमानाधिकरणत्वानिवेशे शुकाद्यात्मनामपि मुक्तत्वानुपपत्तिः, तदीयदुःखध्वंसस्यापि अस्मदीयदुःखप्रागभावसमानकालीनत्वात्। तन्निवेशे तदीयात्यन्तिकदुःखध्वंसस्य तत्समानाधिकरणदुःखप्रागभावासमानकालीनतया नानुपपत्तिः। दुःखध्वंसे दुःखप्रागभावासमानकालीनत्वानिवेशे अस्मदादीनामपि दुःखध्वंसस्य कालभेदेन कस्यचित्सत्त्वान्मुक्तत्वापत्तिः, तन्निवेशे अस्मदीयदुःखध्वंसस्य इदानीन्तनस्य दुःखप्रागभावसमानकालीनत्वान्नातिप्रसङ्गः। दुःखध्वंस इत्यत्र दुःखपदाभावे मुक्तात्मसंयोगध्वंसवति घटेऽपि मुक्तात्मसंयोगध्वंसस्य मुक्तात्मान्तर्भावेण स्वसमानाधिकरणीभूतदुःखप्रागभावासमानकालीनत्वस्य सत्त्वात्तादृशघटस्यापि मुक्तत्वप्रसङ्गः, दुःखपदनिवेशेतु संयोगध्वंसस्य दुःखप्रतियोगिकत्वाभावान्न कोऽपि दोषः। पूर्वं संशयस्य निरूपितत्वेन प्रयोजनस्वरूपं निरूपयति * सुखप्राप्तिरिति * संशयस्य गुणेन्तर्भावः। प्रयोजनस्य सुखप्राप्तिरूपत्वे गुणे दुःखहानिरूपत्वेऽभावेचान्तर्भावः। दृष्टान्तस्य द्रव्यगुणादिष्वन्तर्भावः। सिद्धान्तस्य द्रव्यादिषु अवयवस्य उचितानुपूर्विकप्रतिज्ञादिवाक्यपञ्चकरूपस्य शब्दरूपतया गुणे तर्कस्यारोपविशेषरूपस्य ज्ञानविशेषरूपतया गुणेन्तर्भावः। निर्णयस्य गुणेऽन्तर्भावः। वादस्य शब्दरूपतया गुणेऽन्तर्भावः। विजिगीषुकथारूपजल्पस्यापि शब्दरूपतया गुणेन्तर्भावः। कथाविशेषरूपवितण्डाया अपि गुणेन्तर्भावः * उभयसाधनवतीति * परपक्षनिराकरणसाधिका स्वपक्षसाधनवतीत्यर्थः। स्वपक्षसाधनवत्त्वानिवेशे वितण्डायामतिव्याप्तिः। अत्र वितण्डापदात्पूर्वं

विजिगीषुकथेत्यनुवर्तते * कथानामेति * एकेन पूर्वपक्षः क्रियते अन्येन समाधीयते एवंक्रमेण नानावक्तृकत्वं वाक्यसमुदायस्याधेयम्। अथवा, कथानाम नानावक्तृप्रणीतपूर्ववाक्यनिरूपिताकांक्षादिविशिष्टोत्तरवाक्यमित्यर्थः, अत्र श्रीभागवतादिकथानां एकव्यासप्रणीतत्वेपि पृच्छकवाक्यभेदात् नानावक्तृप्रणीतत्वं निराबाधमेवेति बोध्यम्। हेत्वाभासानां स्थलभेदेन द्रव्यादिष्वन्तर्भावो ग्राह्यः * छलमिति * यथा नूतनकम्बळतात्पर्येण केनचिन्नवकम्बळोऽयंदेवदत्त इति वाक्ये प्रयुक्ते अन्यः कश्चित् नवपदस्य नवत्वसंख्याविशिष्टार्थकत्व परिकल्प्य अस्यातिदरिद्रतया कम्बळद्वयमेव नास्ति कुतोऽस्य नवकम्बळास्सन्तीति परिहसति तच्छलम्। दूषणरूपस्य छलस्य शब्दरूपतया गुणेन्तर्भाव इति भावः॥

**मू * असदुत्तरं जातिः, साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमा जातयः॥**

## * अथ संमानिरूपणमारभ्यते *

व्या॥ कूमेषु जातिमन्तर्भावयितुं जातिस्वरूपमाह * असदुत्तरमिति * असदुत्तरञ्च स्वाभिमतार्थव्याघातकस्वोत्तरवाक्यमिति नृसिंहप्रकाशिकायामभिहितम्। उत्तरस्यासत्त्वन्तु स्वासाधकतासाधारण्येन परासाधकताऽसाधकतया स्वव्याघातुकत्वम्, तथाच स्वव्याघातुकमुत्तरं जातिरिति लक्षण पर्यवस्यतीति नील-

कण्ठीयेऽभिहितम्। स्वासाधकतासाधारण्येनेत्यादेः स्वसाध्यासाधकं परोक्तहेतावसाधकत्वासाधकमुत्तरं जातिरिति पर्यवसितार्थः, स्वपदेन उत्तरस्य ग्रहणं कार्यम्। शिष्यबुद्धिवैशद्याय जातेस्सूत्रकारोक्तान् चतुर्विंशतिप्रभेदानाह * साधर्म्यवैधर्म्येति * द्वंद्वांते श्रूयमाणसमापदस्य प्रत्येक संयोजने साधर्म्यसमा वैधर्म्यसमेत्यादयश्चतुर्विंशतिजातयस्सम्भवन्ति। तथाहि. साधर्म्यसमा-वैधर्म्यसमा, उत्कर्षसमा, अपकर्षसमा, वर्ण्यसमा, अवर्ण्यसमा, विकल्पसमा, साध्यसमा, प्राप्तिसमा, अप्राप्तिसमा, प्रसङ्गसमा, प्रतिदृष्टान्तसमा, अनुत्पत्तिसमा, संशयसमा, प्रकरणसमा, अहेतुसमा, अर्थापत्तिसमा, अविशेषसमा, उपपत्तिसमा, उपलब्धिसमा, अनुपलब्धिसमा, नित्यसमा, अनित्यसमा, कार्यसमा, एताश्चतुर्विंशतिस्समा जातयः। स्वव्याघातकोत्तरस्य जातिरूपस्य शब्दरूपतया गुणेऽन्तर्भावः॥

(१) साधर्म्येति * साधर्म्येण स्थापनाहेतुदूषकमुत्तरं साधर्म्यसमेति नीलकण्ठीये प्रतिपादितम्, वाद्यभिमतस्यस्थापनाहेतोः साधर्म्येण दूषकमुत्तरमिति तदर्थः। साधर्म्येण वाद्यभिमतसाधक हेतुदूषकमुत्तर साधर्म्यसमेति नृसिंहप्रकाशिकायां निरूपितम्। यथा आत्मा सक्रियः क्रियाहेतुगुणवत्तात् लोष्टवत्, क्रियाहेतुगुणश्चात्र शाखादिक्रियाजनकवायुसंयोगादिरेवेतिवाद्युक्ते सति, तत्रोत्तर यदि सक्रियलोष्टसाधर्मात् आत्मा सक्रिय इत्युच्यंततदा परममहत्परिमाणवत्त्वादिरूपाकाशादिनिष्क्रियविभुसाधर्म्यात् निष्क्रिय एव किन्नस्यात्, न चात्र किञ्चिद्विनिगमकमस्ति सक्रियसाधर्म्यात्सक्रिय एव भवति न निष्क्रियसाधर्म्यान्निष्क्रियो भवतीति।

इयं साधर्म्यसमा जातिः । उत्तरस्यासत्त्वन्तु स्वासाधकतासाधारण्येन परासाधकत्वासाधकतया स्वव्याघातुकत्वमिति नीलकण्ठीयोक्तपरिष्कारस्य लक्ष्ये समन्वयप्रकार इत्थम्, स्वासाधकतासाधारण्येत्यादेः स्वसाध्यासाधकं परोक्तहेतावसाधकत्वासाधकमुत्तरं जातिरिति पर्यवसितार्थः, स्वपदेनोत्तरस्य ग्रहणम्, स्वसाध्यं निष्क्रियत्वं, तदभाववत्पत्रादिवृत्तित्वात् निष्क्रियसाधर्म्यादित्याद्युत्तरस्य तदसाधकत्व सम्भवति, एवं परोक्तहेतौ सक्रियसाधर्म्ये असाधकत्वसधकमनैकान्तिकत्वादिकमेव, न निरुक्तोत्तरमिति तदसाधकत्वञ्चास्ति उत्तरस्येति लक्षणसङ्गतिः । परोक्तहेतावसाधकत्वसाधनस्य स्वोद्दिष्टस्य भङ्गादुत्तरस्य स्वव्याघातुकत्वम्, अत्र समाधानत्वेनाभिमत उत्तरपदार्थः । नृसिंहप्रकाशिकायां निर्दिष्टस्य लक्षणस्य समन्वयस्सुगम । एवमन्येष्वपि समास्थलेषु समन्वयः ऊह्यः ॥

(२) वैधर्म्येति * वैधर्म्येण तद्दूषकमुत्तर वैधर्म्यसमा, वैधर्म्येण वाद्यभिमतसाधकवाद्युक्तहेतुदूषकमुत्तरवैधर्म्यसमेत्यर्थः । यथा, वाद्युक्ते पूर्वानुमाने क्रियाहेतुगुणवत्त्वरूपात् लोष्टनिरूपितसाधर्म्यात् यदि क्रियावानात्मा तदा विभुत्वरूपाल्लोष्टनिरूपितवैधर्म्यात् निष्क्रिय एवं कुतो न स्यात्, नहि लोष्टसाधर्म्यात् क्रियावता भवितव्यम् लोष्टवैधर्म्यात् निष्क्रियेण न भवितव्यमित्यत्र किंचिदपि विनिगमकमस्तीति । इयमेव वैधर्म्यसमा जातिः ॥

(३) उत्कर्षेति * परोक्तसाधनादेव तद्व्यापकस्य धर्मस्य पक्षे आपादनं उत्कर्षसमा, स्वाभिमतसाधकवाद्युक्तदृष्टान्तसाधर्म्यात् वाद्यनभिमतसाधकमुत्तरं उत्कर्षसमेत्यर्थः । यथा, शब्दोऽनित्यः

कृतकत्वाद्घटवदित्युक्ते कश्चित्तेवमाह—यदि कृतकत्वेन हेतुना घटवच्छब्दोऽनित्यः स्यात् तदा तेनैव हेतुना घटवदेव शब्दः सावयवोपि स्यात्, नहि घटदृष्टान्तेन कृतकत्वलिङ्गेन शब्देऽनित्यत्वमेव सिद्ध्यति न सावयवत्वमित्यत्र किञ्चिन्नियामकमस्ति। इयमुत्कर्षसमा जातिः ॥

(४) अपकर्षेति * परोक्तदृष्टान्तसाधर्म्येण पक्षे पराभिमतधर्मान्तरस्य अभावसाधनं अपकर्षसमा, वाद्यभिमतसाधकदृष्टान्तहेतुभ्या वाद्यभिमतार्थान्तरस्याभावसाधकमुत्तरं अपकर्षसमेत्यर्थः। यथा, पूर्वोक्तानुमाने कश्चिदाह—यदि कृतकत्वेन हेतुना घटवच्छब्दोऽनित्यः स्यात् तदा तेनैव हेतुना घटवत् श्रावणप्रत्यक्षाविषयः स्यात्, नहि पूर्वोक्तहेतुदृष्टान्ताभ्यां शब्देन अनित्येन भवितव्यम् श्रावणप्रत्यक्षाविषयेन न भवितव्यमित्यत्र किञ्चिन्नियामकमस्ति। इयमपकर्षसमा जातिः ॥

(५) वर्ण्येति * वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे साधकमुत्तरं वर्ण्यसमा। यथा, आत्मा, सक्रियः क्रियाहेतुगुणवत्त्वात् इत्यनुमाने कश्चिदाह—लोष्टस्य क्रियाजनकनोदनादिसंयोगरूपगुणवत्त्वात्तस्याक्रियावत्त्व आत्मनोपि लोष्टवत्क्रियावत्त्वे लोष्टवत् नोदनादिसंयोगवत्त्वमपि स्यात्, आत्मना यदि न नोदनादिसंयोगवत्त्वं तदा क्रियावत्त्वमपि नेष्यते। लोष्टवत्क्रियावत्त्वमात्रं स्वीक्रियते नोदनादिमत्त्वन्तु न स्वीक्रियत इत्यत्र न किञ्चिन्नियामकमस्तीति। इयं वर्ण्यसमा जातिः ॥

(६) अवर्ण्येति * साध्यहेत्वोर्धर्मयोरपि पक्षे तुल्यतासाधनं अवर्ण्यसमा, पक्षे असिद्धधर्मयोः तुल्यतया नियामकाभावप्रयुक्ता-

साधकमुत्तरमवर्ण्यसमेत्यर्थः। यथा, पूर्वोक्तानुमाने कश्चिदेवमाह—लोष्टे नोदनरूपक्रियाहेतुगुणवत्त्वं सिद्धं आत्मनि न सिद्ध, तथाचासिद्धेन क्रियाहेतुगुणवत्त्वेन क्रियावत्त्वमात्मनि यथा साध्यते तथा तुल्यतया सिद्धेन क्रियावत्त्वेन क्रियाहेतुगुणवत्त्वमपि किन्न साध्यते, विनिगमनाविरहादिति। इयमेवावर्ण्यसमा जातिः॥

(७) विकल्पेति * दृष्टान्तविकल्पं प्रदर्श्य दार्ष्टान्तिकविकल्पकथनं विकल्पसमा। यथा, पूर्वोक्तानुमाने कश्चिदेवमाह—यथा क्रियाहेतुगुणयुक्तं किञ्चिद्गुरु किञ्चिल्लघु च भवति लोष्टादि वाय्वादि च तथा क्रियाहेतुगुणयुक्त किञ्चित् लोष्टादि क्रियावत् स्यात् किञ्चिदात्मादिक्रियाशून्यमपि स्यात् इत्यत्र न किञ्चिन्नियामकमस्तीति। इय विकल्पसमा जातिः॥

(८) साध्येति * दृष्टान्तस्य पक्षतुल्यताकथनं साध्यसमा। एतद्घटकसाध्यशब्दोपि साध्यतेऽस्मिन्निति व्युत्पत्त्या पक्षवाच्येव, यथा लोष्टः तथाऽऽत्मेति यद्युच्यते तदा यथात्मा तथा लोष्ट इत्यप्यायातम्, तथाच यदि लोष्टसाधर्म्यात् आत्मनि क्रियावत्त्वं साध्यते तदा आत्मसाधर्म्यात् लोष्टेपि क्रियावत्त्वं साधनीयम्, नोचेत् यथा लोष्टः तथा आत्मेत्यपि न वाच्यम्, नहि लोष्टसदृश आत्मा आत्मसदृशो न लोष्ट इत्यत्र किञ्चिन्नियामकमस्ति। इयं साध्यसमा जातिः॥

(९) प्राप्तीति * प्राप्त्या प्रत्यवस्थान प्राप्तिसमा, प्राप्त्या हेतुनिष्ठसाध्यसामानाधिकरण्यरूपया साध्येन हेतुसाधनरूपप्रत्यवस्थानं प्राप्तिसमेत्यर्थः। यथा तत्रैव क्रियाहेतुगुणवत्त्वं पक्षे साध्यसमानाधिकरणं सदेव क्रियासाधकं वाच्यम्, तथाच उभयो-

ण्यविशेषात् क्रियाहेतुगुणवत्त्वेन क्रियावत्त्वमेव किमिति साधनीयम्, क्रियावत्त्वेन क्रियाहेतुगुणवत्त्व किं न साध्यते, तुल्यन्यायादिति। इयं प्राप्तिसमा जातिः ॥

(१०) अप्राप्तीति * अप्राप्त्या प्रत्यवस्थानं अप्राप्तिसमा, अप्राप्त्या पक्षे असिद्धरूपया दोषोद्भावनं अप्राप्तिसमेत्यर्थः यथा तत्रैव नियामकाभावात् आत्मन्यप्रमितस्य पूर्वोक्तहेतोः क्रियावत्त्वसाधकत्वे कश्चिदाह—अप्राप्तत्वाविशेषात् तेनैव हेतुना सर्वसाधनसम्भवात् स एव हेतुः साध्याभावमपि किमिति न साधयेत्। नहि साध्यमेव साधयति न साध्याभावमित्यत्र किञ्चिन्नियामकमस्ति। इयमप्राप्तिसमा जातिः ॥

(११) प्रसङ्गेति * साधनपरम्पराविषयकप्रश्नः प्रसङ्गसमा। यथा, तत्रैव क्रियावत्त्वसाधकं क्रियाहेतुगुणवत्त्वं, तत्र किं साधकम्, साधकं विना तस्य सिद्धेरभावात्, तत्रापि किञ्चित्साधकप्रदर्शने तत्रापि किंसाधकमिति प्रश्नपरम्परासम्भव इति। इयं प्रसङ्गसमा जातिः ॥

(१२) प्रतिदृष्टान्तेति * दृष्टान्तान्तरेण साध्याभावसाधनं प्रतिदृष्टान्तसमा। यथा, तत्रैव लोष्टदृष्टान्तेन पूर्वोक्तलिङ्गेन क्रियावत्त्वं यदि साध्यते तदा क्रियाहेतुगुणयुक्ताकाशं निष्क्रियं निर्णीतमिति तद्दृष्टान्तेन तेनैव हेतुना क्रियाशून्यत्वं किमिति न साध्यते। नहि लोष्टदृष्टान्तेन क्रियावत्त्वं साधनीयम् आकाशदृष्टान्तेन क्रियाशून्यत्वं न साधनीयमित्यत्र किञ्चिन्नियामकमास्ति। इयं प्रतिदृष्टान्तसमा जातिः ॥

(१३) अनुत्पत्तीति * अनुत्पत्त्या प्रत्यवस्थानं अनुत्पत्तिसमा, उत्पत्त्यभावरूपया अनुत्पत्त्या दोषोद्भावनमनुत्पत्तिसमेत्यर्थः। यथा, शब्दोऽनित्यः प्रयत्नानुविधायित्वात् घटवत् इत्युक्ते कश्चिदाह—पूर्वोक्तहेतुः यद्यनित्यत्वसाधकः तदा शब्दस्योत्पत्तेः पूर्वं तादृशहेत्वभावात् नित्यत्वम्, नित्यश्चेदनुत्पन्न एवेति। इयमनुत्पत्तिसमा जातिः॥

(१४) संशयेति * साधारणधर्मं प्रदर्श्य संशयोद्भावनं संशयसमा; उभयसाधारणधर्मप्रदर्शनपूर्वकसाध्यसंशयोद्भावनं संशयसमेत्यर्थः। यथा, पूर्वोक्तानुमाने शब्दस्य अनित्यघटनिरूपितप्रयत्नानुविधायित्वरूपं साधर्म्यं यथा विद्यते तथा नित्यशब्दत्वजातिनिरूपितश्रावणप्रत्यक्षविषयत्वरूपसाधर्म्यमप्यस्तीति उभयसाधर्म्यदर्शनादुभयकोटिकसंशयः। नह्येकसाधर्म्यदर्शनादेकस्य ज्ञानं अपरसाधर्म्यदर्शनान्नापरस्यज्ञानमित्यत्र किञ्चिन्नियामकमस्ति। इयं संशयसमा जातिः॥

(१५) प्रकरणेति * वाद्युक्तहेतोः साध्यविपरीतसाध्याभावसाधकं हेत्वन्तरोद्भावनं प्रकरणसमा। सत्प्रतिपक्षोदाहरणमेवात्रोदाहरणं बोध्यम्। इयं प्रकरणसमा जातिः॥

(१६) अहेत्विति * कालत्रयेऽपि हेतुत्वासम्भवेन अहेतुत्वकथनमहेतुसमा, हेतुत्वासम्भवपूर्वकोहेतुत्वकथनं अहेतुसमेति फलितम्। यथा, तत्रैव शब्दनिष्ठप्रयत्नानुविधायित्वं यदि साध्यपूर्वकालवृत्ति तदा तत्कालावच्छेदेन नाशप्रतियोगित्वात्मकानित्यत्वरूपसाध्याभावात् अविद्यमानं कथं साधयेत्। यद्ययं हेतुस्साध्योत्तरभावी तदा पूर्वं साधनाभावात् अविद्यमानं कथं शब्देऽ-

नित्यत्वं साधयेत्, यदि च स्वयमेककालवृत्ति तदा एककालीनत्वाविशेषात् किं साध्यं किं साधनं भवेत्, नहि तत्र किञ्चिन्नियामकमस्तीति। तत्र हेतुरहेतुना सम इति। इयमहेतुसमा जातिः॥

(१७) अर्थापत्तिरिति * अर्थापत्तिपुरस्कारेण (अर्थापत्तिसिद्धहेतुना) साध्याभावोद्भावनं अर्थापत्तिसमा। यथा, तत्रैव पूर्वोक्तहेतुरूपानित्यसाधर्म्यादनित्यत्वं यदि साध्यते तदा शब्दस्य द्रव्यत्वं विनास्पर्शवत्त्वमनुपपन्नमित्यन्यथानुपपत्त्या सिद्धस्पर्शवद्भिन्नत्वरूपनित्यसाधर्म्यात् नित्यत्वमपि सिद्ध्येत्, नह्येकेन एकमेव सिद्ध्यतीत्यत्र नियामकमस्ति। इयमर्थापत्तिसमा जातिः॥

(१८) अविशेषेति * सर्वाविशेषप्रसङ्गोद्भावनं अविशेषसमा। यथा, तत्रैव शब्दस्य अनित्यघटसाधर्म्येण पूर्वोक्तहेतुना यदि शब्दस्यानित्यत्वं तदा प्रमेयत्वरूपानित्यघटसाधर्म्येण सर्वस्याप्यनित्यत्वप्रसङ्गः, नहि त्वदुक्तसाधर्म्येणानित्यत्वं सिद्ध्यति न मदुक्तेनेत्यत्र किञ्चिन्नियामकमस्ति। इयमविशेषसमा जातिरिति॥

(१९) उपपत्तीति * उभयपक्षसाधर्म्येण साधनोपपत्तिकथनं उपपत्तिसमा। यथा, तत्रैव यद्यनित्यत्वसाधकं प्रयत्नानुविधायित्वं उपपद्यत इति शब्दस्यानित्यत्वं तदा नित्यत्वसाधकस्पर्शवद्भिन्नत्वमुपपद्यत इति नित्यत्वमपि किं न स्यादिति। इयमुपपत्तिसमा जातिः॥

(२०) उपलब्धीति * वाद्युपदर्शितसाधनाभावेपि साध्यस्योपलब्धिकथनमुपलब्धिसमा, वाद्युक्तसाधनाभावेपि पक्षोपलब्धिकथनमुपलब्धिसमेत्यर्थः। यथा, तत्रैव प्रयत्नं विनापि वायुप्रति-

यौगिकनोदनसंयोगवशात् वृक्षशाखाभङ्गजन्यपटपटेतिशब्दस्य उप-लब्धेः प्रयत्नानुविधायित्वं शब्दे नास्तीति । इयमुपलब्धिसमा जातिः ॥

(२१) अनुपलब्धीति * वादिनोनुपलब्धिवशात्कस्यचित्पदा-र्थस्यानङ्गीकारे अनुपलब्धिवशादेव वाद्यभिमतस्यापि यत्किञ्चित्प-दार्थस्याभावसाधनं अनुपलब्धिसमा, वादिना कस्यचित्पदार्थस्या-नुपलब्धिवशादनङ्गीकारे अनुपलब्धिवशादेव वाद्यभिमतयत्किञ्चि-त्पदार्थाभावसाधनमनुपलब्धिसमेत्यर्थः । यथा, तत्रैवोच्चारणा-त्पूर्वं विद्यमानस्य आवरणवशादनुपलब्धिमात्रेण यद्यस्वीकारः तदा आवरणप्रयोज्यानुपलब्धिमात्रेण विद्यमानजलस्याप्यस्वीकारप्रसङ्ग इत्युक्तेकश्चिदाह—जलाद्यावरकस्य उपलब्ध्या तस्यावरकासिद्धौ तत्प्रयुक्तानुपलब्धिमात्रेण जलास्वीकारोऽयुक्त एव, प्रकृते शब्दा-वरकस्य उपलब्ध्य भावात् तस्यावरकासिद्धौ आवरकाभावेपि श-ब्दस्यानुपलब्ध्या शब्दानङ्गीकारोपि युक्त एवेति, तत्रोत्तरमाह—यद्यावरकस्य उपलब्ध्यभावरूपानुपलब्ध्या आवरकाभावसिद्धिः तदा शब्दावरकवस्तुनः अनुपलब्धेरप्युपलब्ध्यभावरूपानुपलब्धि-प्रमाणेन शब्दावरकवस्तुविषयकानुपलब्धेरप्यभावसिद्ध्या शब्दाव-रकवस्तुनोऽभावासिद्धौ शब्दावरकवस्तुसिद्धिरिति । इयमनुप-लब्धिसमा जातिः ॥

(२२) नित्येति * धर्मस्य नित्यत्वानित्यत्वविकल्पाद्धर्मिणो नित्यत्वसाधनं नित्यसमा । यथा, शब्दस्य यादृशमनित्यत्वं भवदाभिमतं तदनित्यत्वंनित्यमनित्यं वा, यदि नित्यं शब्दावृत्त्यैव नि-त्यत्वस्य ततूसदातनत्वस्वरूपत्वात्, तथाच शब्दस्य नित्यत्वाश्र-

यानित्यत्ववत्त्वासम्भवेन नित्यत्वमेव प्राप्तम्। यदि शब्दनिष्ठा-नित्यत्वं अनित्यं तदा शब्दे कदाचिदनित्यत्वाभावोप्यस्तीति शब्दो नित्य एवेति उभयथापि शब्दस्य नित्यत्वमापतितमिति। इयं नित्यसमा जातिः॥

(२३) अनित्येति * अनित्यदृष्टान्तसाधर्म्यात् सर्वानित्यत्वप्रसङ्गोद्भावन अनित्यसमा। यथा, तत्रैव यद्यनित्येन घटेन सादृश्यात् शब्दः अनित्य इत्युच्यते तदा केनचिद्धर्मेण सर्वस्यैव तत्सदृशत्वात् सर्वस्याप्यनित्यत्वप्रसङ्ग इति। इयमनित्यसमा जातिः॥

(२४) कार्येति * वाद्युक्तहेतोः अन्यकार्येणापि सम्भवाभिधानम् कार्यसमा। यथा, तत्रैव प्रयत्नानुविधायित्वमुभयत्रापि सम्भवति, घटादिवत् शब्दस्वरूपोत्पत्तौ जलादिवत् आवरकनिवृत्तौ च उभयत्रापि प्रयत्नानुविधायित्वदर्शनात् प्रकृते शब्दस्यावरकनिवृत्तिप्रयत्नकार्यसम्भवात् शब्दे नित्यत्वमापतितम्। इयं कार्यसमा जातिः॥

अथ साधर्म्यवैधर्म्यादिसमारूपजातीनां वादिनिष्टपराजयसंपादकत्वरूपनिग्रहस्थानसामान्यलक्षणाक्रान्तत्वेन निग्रहस्थानेष्वन्तर्भावसम्भवेपि स्वव्याघातकोक्तत्वरूपविशेषधर्मस्य पार्थक्येननिरूपणप्रयोजकस्य सद्भावेन हेत्वाभासानामिव जातीनामपि पृथगुपदेशे न कापि न्यूनतेति ध्येयम्॥

इति समानिरूपणं समाप्तम्॥

## * अथ निग्रहस्थाननिरूपणं प्रारभ्यते *

**मू * वादिनोऽपजयहेतुर्निग्रहस्थानम् । तच्च प्रतिज्ञाहानिः प्रतिज्ञान्तरम् प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासः हेत्वन्तरम् अर्थान्तरम् निरर्थकम् अविज्ञातार्थकम् अपार्थकम् अप्राप्तकालम् न्यूनम् अधिकम् पुनरुक्तम् अननुभाषणम् अज्ञानम् अप्रतिभा विक्षेपः मतानुज्ञा पर्यनुयोज्योपेक्षणम् निरनुयोज्यानुयोगः अपसिद्धान्तः हेत्वाभासाश्च । शेषंसुगमम् ॥**

व्या ॥ इदानीं निग्रहस्थानपदार्थं कृतेष्वन्तर्भावयितुं आदौ निग्रहस्थानसामान्यलक्षणं तद्विभागं तत्स्वरूपञ्च दर्शयति * वादिन इति * वादिनिष्ठपराजयसम्पादकत्वं निग्रहस्थानसामान्यलक्षणमित्यर्थः । निग्रहस्थानं सूत्रानुसारेण द्वाविंशतिधा विभजते (१) प्रतिज्ञाहानिरित्यादि * यत्र प्रतिज्ञातार्थविरुद्धाभ्युपगमः प्रतिज्ञातार्थपरित्यागो वा तत्र प्रतिज्ञाहानिः । यथा, शब्दोऽनित्यः ऐन्द्रियकत्वात् घटवदित्युक्ते तत्र कश्चित् इन्द्रियवेद्यं घटत्वादि नित्यं दृष्टमिति तद्वच्छब्दो नित्य एव स्यादित्याह । तत्रोत्तरम्—तर्हि इन्द्रियवेद्यत्वाविशेषात् घटत्वादिवत् घटो नित्य एवस्यात् इत्युक्त्या अनित्यत्वसाधने दृष्टान्तस्य नित्यत्वमङ्गीकुर्वन् शब्दस्यानित्यत्वप्रतिज्ञां जहाति । इयञ्च पक्षत्यागः साध्यत्यागः हेतुत्यागः दृष्टान्तत्यागः तद्विशेषणत्यागश्चेति पञ्चधा भवति । आद्यस्तु शब्दोऽनित्यः प्रयत्नजन्यगुणत्वात् इत्युक्ते केनचित् सोऽयगकार इति प्रत्यभिज्ञाबलात् बाधे उद्भाविते अस्तु तर्हि

घटोऽनित्य इति पक्षत्यागः। पूर्वोक्तदोषाच्च शब्दोनित्य एवेति स्वीकारे साध्यत्यागः। अनित्यश्शब्दः द्रव्यत्वादित्युक्ते परेण स्वरूपासिद्धोऽयमिति दूषिते कृतकत्वादिति पुनर्हेतुप्रयोगे हेतु-त्यागः। दृष्टान्तत्यागस्तूदाहृतः। एवं द्रव्यात्मकशब्दः अनित्य-कृतकत्वादित्यत्र आश्रयासिद्धेरुद्भावने अस्तु तर्हि शब्दोऽनित्य इति पक्षविशेषणत्यागः। एवमेव साध्यविशेषणत्यागहेतुविशेषणत्या-गादिकमूहनीयम्। इति प्रतिज्ञाहानिः॥

(२) प्रतिज्ञान्तरमिति * पूर्वोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशे-षणविशिष्टतया प्रतिज्ञातार्थकथनम् प्रतिज्ञान्तरम्, पूर्वोक्तप्रति-ज्ञाया दूषिताया तत्र विशेषणान्तरदानं प्रतिज्ञान्तरमित्यर्थः। तद्द्विविधं पक्षविशेषणदानात् साध्यविशेषणदानाच्च। यथा-आद्यं, शब्दोऽनित्य इत्यत्र ध्वनावशतः सिद्धसाधने उद्भाविते वर्ण-रूपेति पक्षविशेषणदानम्। अन्त्य यथा, क्षित्यादिकं गुणजन्य कार्यत्वादित्यत्र अदृष्टजन्यत्वेन सिद्धसाधने उद्भाविते सविषयकेति-गुणविशेषणदानम्॥

(३) प्रतिज्ञाविरोध इति * स्वोक्तसाध्यविरुद्धहेतुकथनं प्रति-ज्ञाविरोधः, प्रतिज्ञाहेत्वोः विरोधः प्रतिज्ञाविरोध इत्यर्थः। यथा द्रव्य गुणभिन्नं रूपत्वात् इति॥

(४) प्रतिज्ञासन्न्यास इति * स्वोक्तेऽर्थे परेण दूषिते तदप-लापः प्रतिज्ञासन्न्यासः, स्वयं प्रतिज्ञातस्यापह्नवः प्रतिज्ञासन्न्यास इत्यर्थः। यथा, शब्दः अनित्यः इन्द्रियवेद्यत्वादित्युक्ते परेण सामान्ये व्यभिचारमुद्भाव्य दूषिते केनोच्यते शब्दोऽनित्य इति स्वोक्तिमपलपति। तत्रापह्नवश्चतुर्विधो भवति, कएवमाहेत्येकः,

परमतानुवादोऽयं मया कृत इति द्वितीयः, स्वयमुक्तेपि एवमुक्तमिति त्वं वदेति तृतीयः, तत्परोक्तं मया इदमेवोक्तमिति चतुर्थः ॥

(५) हेत्वन्तरमिति * परोक्तदोषोद्दिधीर्षया पूर्वोक्तहेतुकोटौ विशेषणान्तरोपपादनं हेत्वन्तरम्, शुद्धहेतौ दूषिते तत्र विशेषणान्तरोपादानम् हेत्वन्तरमित्यर्थः। यथा, शब्दोऽनित्यः प्रत्यक्षत्वादित्यत्र सामान्ये व्यभिचारे उद्भाविते जातिमत्त्वेसतीति विशेषणदानम् ॥

(६) अर्थान्तरमिति * प्रकृतानुपयुक्तार्थकथनमर्थान्तरमिति, प्रयुक्तस्यानुपयुक्तार्थकथनमर्थान्तरमित्यर्थः। यथा, शब्दो नित्यः अस्पर्शवत्त्वादित्युक्ते हेतुरितिपद हिनोतेस्तुनिप्रत्यये कृते कृदन्तम्, पदञ्च सुप्तिङन्तमित्याद्यर्थान्तरकथनम् ॥

(७) निरर्थकमिति * अवाचकश्शब्दो निरथकम्, अवाचकवर्णप्रयोगो निरर्थकमित्यर्थः। यथा, शब्दोऽनित्यः जबगडदशत्वात् झभघढधपितवत्। अथवा, असाधुशब्दप्रयोगो निरर्थकमित्यर्थ., यथा, शब्दमनित्यमित्यादि ॥

(८) अविज्ञातार्थकमिति * परिपत्प्रतिवाद्यबोधप्रयोजकपदप्रयोगः अविज्ञातार्थकम्, वादिना वारत्रयमुक्तमपि प्रतिवादिना सदस्यैरपि यन्नबुद्ध्यते तत् अविज्ञातार्थकमित्यर्थः। तच्च क्लिष्टान्वयं अप्रसिद्धार्थकं त्वरितोच्चरित लाक्षणिकमित्यादिरूपम् ॥

(९) अपार्थकमिति * परस्परानन्वितार्थकपदसमूहोऽपार्थकम्, यथा, शब्दः शब्दत्वं घटः पटी वा नित्यमनित्यञ्च प्रमेयत्वादित्यादि ॥

(१०) अप्राप्तकालमिति * अवयवानां व्युत्क्रमेण कथनमप्राप्तकालम्, यथा, कृतकत्वात् शब्दोऽनित्य इत्यादि ॥

(११) न्यूनमिति * यत्किंचिदवयवशून्यावयवाभिधानं न्यूनम्, स्वमतसिद्धावयवानां मध्ये एकस्यानुक्तिरित्यर्थः। उदाहरण स्फुटम् ॥

(१२) अधिकमिति * अधिकहेत्वादिकथनमधिकम्, अनन्वितानुपयुक्तपुनरुक्तभिन्नस्य सिद्धप्रयोजनस्य पुनः कथनमाधिकमित्यर्थः। हेतूदाहरणाधिक्यमिति वा। यथा, शब्दोऽनित्यः श्रावणत्वाच्छब्दत्वाच्चेत्यादि। एवमुदाहरणद्वयेपि बोध्यम् ॥

(१३) पुनरुक्तमिति * अनुवादं विना कथितस्य पुनः कथनम्, वादिमध्यस्थानुमति विना शब्दार्थयोः पुनः कथनं पुनरुक्तमित्यर्थः। यथा, शब्दोऽनित्यः शब्दोऽनित्य इति शब्दपुनरुक्तम् ॥

(१४) अननुभाषणमिति * परिषदा त्रिरभिहितस्यापि अननुवादः अननुभाषणम्, वादिना त्रिरुक्तस्य वाक्यस्य सदस्यैः विज्ञातार्थस्य अननुवादः अननुभाषणमित्यर्थः। उदाहरणं स्पष्टम् ॥

(१५) अज्ञानमिति * परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि वाक्यार्थस्याबोधः अज्ञानम्, वादिना त्रिरुक्तवाक्यस्य सदस्यैः ज्ञातार्थस्य अर्थानवबोधः अज्ञानमित्यर्थः। स्पष्टम् ॥

(१६) अप्रतिभेति * उत्तरार्हं परोक्तं बुद्ध्वापि उत्तरस्यास्फूर्तिवशात् तूष्णींभावः अप्रतिभा, प्रतिवादिनाऽनूदिते वादिवाक्ये तदर्थे विज्ञातेपि उत्तरास्फूर्तिवशात् तूष्णींभावः अप्रतिभेत्यर्थः। स्पष्टम् ॥

(१७) विक्षेपइति * असम्भवत्कालान्तरकार्यव्यासङ्गमुद्भाव्य कथाविच्छेदः, असम्भवत्कार्यान्तरव्यासङ्गात्कथाविच्छेदः विक्षेप इत्यर्थः । यथा, इदमेकं कार्यं तिष्ठति तत्कृत्वाऽवशिष्टं करिष्यामीति ॥

(१८) मतानुज्ञेति * स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानम्, स्वपक्षे दोषाभ्युपगमपूर्वकं परपक्षे दोषप्रसञ्जनम् मतानुज्ञेत्यर्थः । यथा, त्वं चोर इत्युक्ते त्वमपि चोर इत्यादिकम् ॥

(१९) पर्यनुयोज्योपेक्षणमिति * उद्भावनार्हपरकीयनिग्रहस्थानानुद्भावनम्, वादिनो निग्रहस्थानसत्त्वेपि प्रतिवादिनः तदनुद्भावनं पर्यनुयोज्योपेक्षणमित्यर्थः । इदमपि स्पष्टम् ॥

(२०) निरनुयोज्यानुयोग इति * निग्रहस्थानरहिते निग्रहस्थानोद्भावनम्, अनिग्रहे भ्रान्त्या निग्रहोद्भावनं निरनुयोज्यानुयोग इत्यर्थः । छलजात्योरेतन्मध्येऽन्तर्भाव इति ॥

(२१) अपसिद्धान्त इति * एकसिद्धान्तमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमवलंब्य उत्तरदानम् अपसिद्धान्तः । यथा, व्यक्तं एकप्रकृतिकम् विकारत्वात् एकमृत्पिण्डवृत्तिघटशरावोदंचनादिवत् इति सांख्यमतमवलंब्य प्रयुक्ते का प्रकृतिः कोवा विकार इति प्रतिवादिना पृष्टे यस्मिन् धर्मिण्यवस्थिते एकधर्मनिवृत्तौ धर्मान्तरमुत्पद्यते सा प्रकृतिः, यो धर्मो निवर्तते उत्पद्यते च स विकारः इति वादिना उक्ते पुनः प्रतिवादी वदति—अपसिद्धान्तः, तव मते असतः उत्पत्त्य भावात् सतो विनाशाभावाच्च, किन्तु आविर्भावतिरोभावमात्रम्, कार्यकारणयोरभेदात्, कारणरूपेण सूक्ष्मतयाऽवस्थितिः तिरोभावः, कार्यरूपेण स्थूलतयाऽवस्थान-

मविर्भावः इति । सत्कार्यवादिमते प्रकृतिविकारयोरुद्भवाभावादिदमनुमानं न सिद्ध्यति, असतः कार्यतावादेत्वपसिद्धान्त इति ॥

(२२) हेत्वाभासाश्चेति * तल्लक्षणं अनुमानपरिच्छेदेऽभिहितम् । चकार उक्तसमुच्चायकः ॥ ननु वितण्डाहेत्वाभासच्छलानामपि निग्रहस्थानलक्षणाक्रान्तत्वेन निग्रहस्थानेष्वन्तर्भावसम्भवे तेषां पृथगुपादान किं निमित्तमिति चेन्न, तेषां निग्रहस्थानलक्षणाक्रान्तत्वेपि वितण्डात्वादिनापि ज्ञानस्योपयोगित्वात्पृथगुपादानसम्भवात् । नच तर्हि हेत्वाभासानां सूत्रे पार्थक्येन निग्रहस्थानेषु च परिगणने वितण्डाच्छलयोः निग्रहस्थानेष्वपरिगणने किं बीजमिति वाच्यम्, स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हस्य मुनेस्सम्मतत्वादितिनियमस्यात्रानुसन्धेयत्वात् । वितण्डाहेत्वाभासच्छलानान्तु पृथगुपादानेपि निग्रहस्थानरूपत्वमपि निर्विवादमेव । ननु निग्रहस्थानाना द्वाविंशतिधा विभागेपि तेषामन्तर्भावानुक्तेर्ग्रन्थकारस्य न्यूनतेत्यत आह * शेषं सुगममिति * शेषं क्लृप्तपदर्थान्तर्भूतत्वादिकम् । प्रतिज्ञाहान्यननुभाषणाज्ञानाऽप्रतिभाविक्षेपपर्यनुयोज्योपेक्षणानामभावे अन्येषा हेत्वाभासव्यतिरिक्तानां निग्रहस्थानानां गुणे हेत्वा भासानाञ्च यथायथं द्रव्यादिष्वन्तर्भावो बोध्यः ॥

इति श्रीकुरुगंट्युपनामक श्रीरामशास्त्रिणा विरचिते दीपिकासर्वस्वे भगवदर्पिते षोडशपदार्थनिरूपणं समाप्ति मगमत् ॥

श्री लक्ष्मीनारायणाभ्यां नमः ।

# दीपिकासर्वस्वे ।

## अथ शक्त्यादिविचार प्रारम्भः ।

**मू * ननु करतलानलसंयोगे सत्यपि प्रतिबन्धके सति दाहानुत्पत्तेः शक्तिः पदार्थान्तरमिति चेन्न, प्रतिबन्धकाभावस्य कार्यमात्रे कारणत्वेन शक्तेरनुपयोगात्, कारणत्वस्यैव शक्तिपदार्थत्वात् ॥**

व्या ॥ ननु दाहं प्रति वह्नेः अन्वयव्यतिरेकाभ्यां कारणत्वं क्लृप्तम्, तत्र कारणतावच्छेदकं न वह्नित्वम्, प्रतिबन्धकीभूतमणिसमवधाने दाहानुत्पत्तेः, किन्तु दाहानुकूलशक्तिमत्त्वेन वह्नेः दाहकारणत्वं स्वीकार्यम्, साच उत्पादविनाशशालिनी, एवं च मणिसमवहितवह्नौ शक्तेर्नाशस्वीकारेण तद्विशिष्टवह्निरूपकारणाभावात् न तदा दाहापत्तिः, प्रतिबन्धकापनयने तादृशशक्तेरुत्पत्तिर्स्वीकारेण तादृशशक्तिविशिष्टवह्निसत्त्वादेव दाहोत्पत्तिस्सम्भवति, तस्माद्दाहान्यथानुपपत्त्या स्वीकृतायाः शक्तेः क्लृप्तपदार्थेष्वनन्तर्भूतत्वात् अतिरिक्तत्वमावश्यकमिति कथं सप्तैव पदार्था इति प्राभाकरमतमुपन्यस्यति (शक्तेरतिरिक्तत्वसाधकानुमानप्रयोगादिकं प्रत्यक्षपरिच्छेदे निरूपितं तत्र द्रष्टव्यं) नन्विति * करतलानलसंयोगेसत्यपीति * इदञ्च दाहकारणसत्त्वप्रदर्शनाय * शक्तिरिति * दाहा-

न्यथानुपपत्त्या वह्नौ शक्तिरित्यर्थः * पदार्थान्तरमितीति * तथाच द्रव्यत्वाद्यभावत्वान्तक्लृप्तपदार्थविभाजकधर्मभिन्नपदार्थविभाजकधर्मवत्त्वे सति तादृशपदार्थविभाजकधर्मान्यतमशून्यत्वे सति वस्तुत्वादितिपरिशेषानुमानात् शक्तेरतिरिक्तत्वसिद्धिरिति भावः । दाहं प्रति मणित्वेन प्रतिबन्धकत्वस्वीकारमात्रेण मणिसमवधानकाले दाहापत्तिवारणेन शक्तिस्वीकारे प्रमाणाभावः । नचैव मणिसमवधाने उत्तेजकवशात् अनुभवसिद्धदाहानुपपत्तिः मण्यभावरूपकारणाभावादिति वाच्यम्, उत्तेजकाभावविशिष्टमणेरेव प्रतिबन्धकत्वं स्वीकृत्य तादृशविशिष्टमण्यभावस्यैव कारणत्वस्वीकारेण प्रकृतेतत्सत्त्वान्नोक्तानुपपत्तिः । नचैवं वह्नित्वमण्यभावत्वाभ्यां कार्यकारणभावद्वयकल्पनाप्रयुक्तं गौरवं दुर्वारमिति वाच्यम्, अनन्तशक्तितत्प्रागभावतद्ध्वंसकल्पनाप्रयुक्तगौरवापेक्षया ईदृशकार्यकारणभावद्वयकल्पनाप्रयुक्तगौरवस्याकिञ्चित्करत्वात् इत्याशयेन परिहरति * प्रतिबन्धकाभावस्येति * उत्तेजकाभावविशिष्टमण्यभावस्येत्यर्थः * कार्यमात्र इति * दाहत्वादिरूपकार्यतावच्छेदकधर्मावच्छिन्न इत्यर्थः * कारणत्वेनेति * अन्यथानुपपत्त्या स्वीकृतकारणत्वेनेत्यर्थः उक्तानुपपत्तिवारणायेति शेषः * शक्तेरनुपयोगादिति * शक्तेरप्रामाणिकत्वादित्यर्थः । नन्वेवं सति वह्नौ दहनशक्तिरिति सकलप्रावादो व्याहन्येतेत्यत आह * कारणत्वस्यैवेति * दाहकारणत्वस्यैवेत्यर्थः * शक्तिपदार्थत्वादिति * शक्तिपदतात्पर्यविषयत्वादित्यर्थः ॥

**मू * ननु भस्मादिना कांस्यादौ शुद्धिदर्शनात् आधेयशक्तिरङ्गीकार्येति चेन्न, भस्मादिसंयोगसमानकालीनास्पृश्य-**

**स्पर्शप्रतियोगिकयावदभावसहितभस्मादिसंयोगध्वंसस्य शुद्धिपदार्थत्वात् । स्वत्वमपि न पदार्थान्तरम्, यथेष्टविनियोगयोग्यत्वस्य स्वत्वरूपत्वात् तदवच्छेदकश्च प्रतिग्रहादिलब्धत्वमेवेति ॥**

व्या ॥ करतलानलसंयोगेत्यादिग्रन्थेन प्राभाकराभिमतां अनुकूलशक्तिं निराकृत्य मीमांसकैकदेश्यभिमतां आधेयशक्तिं निराकर्तुं तदीयमतमुपन्यस्यति * ननुभस्मादिनेति * भस्मादिनेत्यत्रादिपदेनाम्लादेः कांस्यादेरित्यत्रादिपदेन ताम्रादेश्च परिग्रहः कार्यः * शुद्धिदर्शनादिति * शुद्धेः दर्शनात्, शुद्धेः मालिन्यनिवृत्तिपूर्वकशुद्धेः, दर्शनात् प्रत्यक्षसिद्धत्वादित्यर्थः । कांस्यादिशुद्धिप्रयोजकाः "श्लो ॥ भस्मना शुद्ध्यते कांस्यं, ताम्रमाम्रेण शुद्ध्यति, गोमयाच्छुद्ध्यते भूमिः, नारी तु रजसा तथा, इत्यादिवचनेन प्रतिपादिताः, एतत्पद्यस्थचरमदलेन मृण्मयेन रजसा पञ्चलोहान्तर्गतं पित्तलं नारीं च शुद्ध्यतीत्यर्थो ग्राह्यः * आधेयशक्तिरिति * ज्ञापकशक्तेर्व्यवच्छेदः । शुद्धिरूपेत्यादिः । तथाच कांस्यादिषु आधेयभूता शुद्धिरूपा आधेयशक्तिरङ्गीकार्येत्यर्थः । तथाच शक्तेरस्या अतिरिक्तायास्सद्भावे सप्तैव पदार्था इति कथनमसमञ्जसमिति भावः । शुद्धिरूपा आधेयशक्तिः एतादृशसंयोगध्वंसरूपैव नातिरिक्तः पदार्थ इति नैयायिकः समाधत्ते * भस्मादिसंयोगेति * भस्मादिसंयोगसमानकालीनाः ये अस्पृश्यस्पर्शप्रतियोगिका यावन्तोऽभावाः तत्समुदायसहितः यो भस्मादिसंयोगध्वंसः स एव शुद्धिपदार्थ इत्यर्थः (यावदभावसहितत्वञ्च संयोगध्वंसे स्वसामानाधिकरण्यस्वसमानकालीनत्वोभयसम्बन्धेन तद्विशिष्टत्वरूपम्) भस्मा-

दिसंयोगध्वंसस्यैव शुद्धिपदार्थत्वाङ्गीकारे प्रकृते भस्मादिसंयोगाभावेपि यत्र कांस्यादौ प्राक्तनस्य भस्मादिसंयोगस्य नाशानन्तरं यदा पुनरपि अस्पृश्यस्पर्शस्सम्भवति तदा तत्रापि भस्मादिसंयोगध्वंसस्य सत्त्वात् तस्मिन्नपि कांस्यादौ शुद्धिप्रसङ्गः (अस्पृश्यस्पर्श काले शुद्धिर्नकस्यापीष्टा) अतो ध्वंसे अस्पृश्यस्पर्शप्रतियोगिकयावदभावसहितत्वनिवेशः, तदा तस्याभावान्नापत्तिः। अभावे यावत्त्वानिवेशे प्रकृते भस्मादिसंयोगाभावेपि यत्र प्राक्तनस्य भस्मादिसंयोगस्य नाशः यत्किञ्चिदस्पृश्यस्पर्शश्च वर्तते तत्रापि यत्किञ्चिदस्पृश्यस्पर्शाभावरूपस्य विशेषाभावस्य सत्त्वाच्छुद्धिप्रसङ्गः, यावत्त्वनिवेशे तु प्रकृते विद्यमानस्य अस्पृश्यस्पर्शस्याभावस्यापि यावदन्तर्गततया तदा तस्याभावान्नापत्तिः। अस्पृश्यस्पर्शानां अनेकजातीयानां एकरूपेण निवेशस्य कर्तुमशक्यतया एकरूपेण अस्पृश्यस्पर्शसामान्याभावस्य निवेशयितुमशक्यतया प्रातिस्विकरूपेण तत्तदभावकूटस्य निवेशः कार्यः। ननु चैत्रस्येदंधनमित्यादौ धनादौ प्रतीयमानस्य स्वत्वरूपस्य पदार्थान्तरस्य विद्यमानत्वात्कथंसप्तैव पदार्था इत्यत आह * स्वत्वमपि न पदार्थान्तरमिति * अत्रापिशब्देन अनुक्तप्रतियोगित्वकार्यत्वकारणत्वादिपरिग्रहः कार्यः * तदवच्छेदकमिति * तत्प्रयोजकमित्यर्थः। तथाच दानप्रतिग्रहविक्रयादिलब्धत्वं धनादौ पुरुषस्य स्वत्व सम्पादयतीत्यर्थः। प्रतियोगिताया नित्यवृत्तेः प्रतियोगिरूपत्वं तदवच्छेदकरूपत्व वा, अनित्यवृत्तेस्तस्याः प्रतियोगितावच्छेदकरूपत्वम्, नित्यवृत्तेरनित्यवृत्तेर्वा तस्याः प्रतियोगितावच्छेदकरूपत्वं ग्राह्यम्, एवं कार्यत्वकारणत्वादीनामप्यन्तर्भावो ग्राह्यः॥ इति शक्तिविचारस्समाप्तः॥

## ❁ अथ विधिवाद आरभ्यते ❁

मू ※ अथ विधिर्निरूप्यते, प्रयत्नजनकचिकीर्षाजनकज्ञानविषयो विधिः, तत्प्रतिपादको लिङादिर्वा। कृत्यसाध्ये प्रवृत्त्यदर्शनात् कृतिसाध्यताज्ञानं प्रवर्तकम्। नच विषभक्षणादौ प्रवृत्तिप्रसङ्गः, इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य काम्यस्थले विहितकालशुचिजीवित्वनिमित्तज्ञानजन्यस्य नित्यनैमित्तिकस्थले प्रवर्तकत्वात्। नचाननुगमः, स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वस्यानुगतत्वादिति गुरवः। तन्न, लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव चिकीर्षाद्वारा प्रयत्नजनकत्वात्। नच नित्यनैमित्तिकस्थले इष्टसाधनत्वाभावात् अप्रवृत्तिप्रसङ्गः, तत्रापि प्रत्यवायपरिहारस्य पापक्षयस्य च फलत्वकल्पनात्, तस्मात् कृतिसाध्येष्टसाधनत्वमेव लिङर्थः॥

व्या॥ सर्वेषां पदार्थानां सप्तसु पदार्थेष्वन्तर्भाव निरूप्य मूलस्य न्यूनतां परिहर्तुं विधिं निरूपयति * अथेति * गुरुमतसाधारण्येन नैयायिकमतसाधारण्येन च विधिपदार्थं निरूपयति * प्रयत्नजनकेति * शब्दार्थस्तु, प्रयत्नजनिका या चिकीर्षा तज्जनकं यद्ज्ञानं तद्विषयो विधिरित्यर्थः। गुरुमते कृतिसाध्यत्वमेव लिङर्थः, तन्मते कृतिसाध्यताज्ञानमेव चिकीर्षाद्वारा प्रयत्नकारणमिति कार्यकारणभावः स्वीकृतः। नैयायिकमते कृतिसाध्यता-

विशिष्टेष्टसाधनताविशिष्टबलवदनिष्टाननुबन्धित्वं विध्यर्थः, एतन्मते एतादृशविशिष्टविषयकं ज्ञानं चिकीर्षाद्वारा प्रयत्नसाधनमिति प्राञ्चो वदन्ति। कृतिसाध्यताज्ञानं इष्टसाधनताज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानञ्च दण्डचक्रादिन्यायेन पृथगेव चिकीर्षाद्वारा प्रयत्नकारणानीति नवीनावदन्ति। केचन बलवद्द्विष्टसाधनताज्ञानस्य प्रवृत्तिप्रतिबन्धकत्वमङ्गीकृत्य बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्तिकारणत्वं नाङ्गीकुर्वन्ति। तादृशविशिष्टविषयकज्ञानस्य प्रवृत्तिकारणत्वाङ्गीकर्तृप्राचीनमते विशेषणविशेष्यभाववैपरीत्येन विनिगमनाविरहप्राप्ताः बहवः कार्यकारणभावास्सम्भवन्ति, तथाहि, कृतिसाध्यताविशिष्टेष्टसाधनताविशिष्टबलवदनिष्टाननुबन्धित्वज्ञानत्वेनैकं कारणत्वम्, बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताविशिष्टकृतिसाध्यताज्ञानत्वेनापरं कारणत्वम्, इष्टसाधनताविशिष्टकृतिसाध्यताविशिष्टबलवदनिष्टाननुबन्धित्वज्ञानत्वेनान्यत्कारणत्वम्, इष्टसाधनताविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यताज्ञानत्वेनापरं कारणत्वम्, कृतिसाध्यताविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानत्वेनान्यत्कारणत्वमङ्गीकार्यम्, एवमेतादृशा बहवः कार्यकारणभावास्सम्भवन्तीति प्राचीनमते महागौरव प्रसज्यते। एतद्ज्ञानत्रयस्य पृथगेव कारणत्वाङ्गीकर्तृनवीनमते तादृशकार्यकारणभावानामसम्भव इति ततो लाघवञ्च ग्राह्यम्। कृत्यसाध्ये चन्द्रानयनादौ प्रवृत्त्यदर्शनेन कृतिसाध्यताज्ञानस्य द्विष्ट (दुःख) साधने विषभक्षणादौ प्रवृत्त्यदर्शनेन इष्टसाधनताज्ञानस्य विषसंपृक्तान्नभक्षणादौ तृप्तिरूपेष्टसाधनत्वकृतिसाध्यत्वयोस्सत्त्वेपि मरणजनके प्रवृत्त्यदर्शनेन बलवदनिष्टाननुबन्धित्वज्ञानस्य च चिकीर्षाद्वारा प्रवृत्तिहेतुत्वमङ्गीकार्यम्। यथा परामर्शद्वारा व्याप्तिज्ञाननिष्ठं

अनुमितिकारणत्वं अनुमितिजनकपरामर्शजनकत्वविशिष्टानुमिति-जनकत्वरूपं तथा कृतिसाध्यताज्ञानादिनिष्ठं चिकीर्षाद्वारा प्रयत्न-हेतुत्वमपि प्रयत्नजनकचिकीर्षाजनकत्वे सति प्रयत्नजनकत्वरूपं ग्राह्यम्। केचित्तु, कृतिसाध्यत्वादिज्ञानस्य चिकीर्षां प्रत्येव कारण-त्वम्, चिकीर्षाया एव प्रवृत्तित्वावच्छिन्नं प्रति कारणत्वमिति वदन्ति। केचित्तु, चिकीर्षामद्वारीकृत्य "तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेनेति न्यायमनुसृत्य तत्त्रयस्यैव प्रवृत्तिहेतुत्वमभ्युपगच्छन्ति; तन्मते तत्का-रणत्रयस्य सत्त्वेपि यत्र चिकीर्षाप्रतिबन्धकोपनिपातः तत्रानुभव-सिद्धस्यप्रवृत्त्यभावस्य अपलापप्रसङ्गइत्याद्यनुपपत्तयो दुर्वाराः। चिकीर्षाप्रतिबन्धकाभावस्यापि प्रवृत्तिकारणकोटौ प्रवेशने स्वप्रति-बन्धकाभावस्य स्वकारणकोटौ प्रवेशस्यानुभवतस्समुचितत्वे अन्य-प्रतिबन्धकाभावस्यापि स्वकारणकोटौ प्रवेशनेऽसामञ्जस्य गौरव-श्चेत्यलम्॥

गुरुमते प्रयत्नजनकचिकीर्षाजनकज्ञानं कृतिसाध्यताज्ञानमात्रं, तद्विषयत्वं कृतिसाध्यत्वेऽक्षतमिति समन्वयः। नैयायिकमते तादृशज्ञानं कृतिसाध्यत्वविशिष्टेष्टसाधनत्वविशिष्टबलवदनिष्टाननुब-न्धित्वरूपविशिष्टविषयकं ज्ञानमादाय प्राचीनमते तादृशविशिष्टे समन्वयो ग्राह्यः। नवीनमते कृतिसाध्यत्वादित्रिकविषयक समुच्च-यात्मकं ज्ञानं एकैकविषयकज्ञानत्रयं वा समुपादाय तत्त्रिके समन्वयः कार्यः। अन्नम्भट्टोपि चिकीर्षाद्वारैव कृतिसाध्यत्वादिज्ञानस्य कारणत्वमङ्गीकरोतीति एतादृशविधित्वनिर्वचनानुसारेण ज्ञायते। विधायक एव विधिरित्याशयेनाह * तत्प्रतिपादकइति * लिङा-दीत्यादिपदेन लोट्तव्यप्रत्ययादिपरिग्रहाः। गुरुमतमुपपादयति *

कृत्यसाध्यइति * कृत्यसाध्यत्वेनावगते चन्द्रानयनादावित्यर्थः * कृतिसाध्यताज्ञानं प्रवर्तकमिति * चिकीर्षां द्वारीकृत्य प्रवृत्तिजनकमित्यर्थः। ननु कृत्यसाध्यत्वेनावगते चन्द्रानयनादौ प्रवृत्तिप्रसङ्गवारणाय कृत्यसाध्यत्वज्ञानाभावस्यैव प्रवर्तकत्वमङ्गीकार्यमितिचेन्न, तथासति विनिगमनाविरहेण कृतिसाध्यत्वाभावतद्व्याप्यवत्ताज्ञानयोः कृतिसाध्यभेदतद्व्याप्यवत्ताज्ञानयोश्च कारणत्वस्याङ्गीकर्तव्यतया गौरवेण कृतिसाध्यताज्ञानस्यैव कारणत्वस्यावश्यमभ्युपेयत्वात्। ननु विषभक्षणादावपि कृतिसाध्यताज्ञानसद्भावात्प्रवृत्तिप्रसङ्ग इत्याशङ्क्यां प्रकारान्तरेण परिहरति * नचेति * इष्टसाधनतालिङ्गकेति * इष्टसाधनतालिङ्गकत्वञ्च इष्टसाधनतारूपहेतुविषयकानुमानज्ञानजन्यत्वम्, अनुमानप्रयोगस्तु, अयं मत्कृतिसाध्यः मत्कृतिविनाऽनुपपद्यमानत्वे सति मदिष्टसाधनत्वात् इति रीत्या ग्राह्यः। विषभक्षणादौ इष्टसाधनताज्ञानाभावान्नप्रवृत्तिप्रसङ्गः * काम्यस्थलइति * ज्योतिष्टोमयागादिरूपकाम्यस्थलइत्यर्थः। ननु मीमांसाया स्वर्गाद्यर्थं दर्शपूर्णमासादिकमेव केवलामुष्मिकफलककाम्यत्वेन परिगणितम्, नतु ज्योतिष्टोमस्य काम्यत्वं कुत्रापि श्रूयते इतिचेन्न, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेतिवत् ज्योतिष्टोमेन स्वर्गकामोयजेतेत्यत्रापि स्वर्गरूपफलस्य श्रुत्या काम्यत्वानपायात्। वस्तुतस्तु, ज्योतिष्टोमस्यापि अग्निहोत्रादिवत् नित्यत्वमेव, फलश्रुतिस्तु तत्र प्ररोचनार्थेति साम्प्रदायः। ज्योतिष्टोमस्य नित्यत्वस्वीकारे दर्शपूर्णमासादिकं कारीर्यादिकञ्च काम्यकर्मोदाहरणं ग्राह्यम्॥

विहितकालेति * ज्योतिष्टोमादिकाम्यस्थले इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानं प्रवर्तकम्। सन्ध्यावन्दनाग्निहोत्रादिनित्यस्थले

विहितकालशुचिजीवित्वज्ञानाधीनं कृतिसाध्यताज्ञानं प्रवर्तकम् । नैमित्तिकस्नानादौ आशौचादिनिमित्तज्ञानाधीनं पथिकृदिष्ट्यादौ दर्शपूर्णमासातिपत्तिज्ञानाधीनं कृतिसाध्यताज्ञानं प्रवर्तकम् । अनुमानप्रयोगस्तु, अहं एतत्कालकृतिसाध्यसन्ध्यावन्दनकः एतत्कालशुचिजीवित्वात्. अहं एतत्कालीनकृतिसाध्यस्नानकः आशौचवत्त्वादिति रीत्या ग्राह्यः । अननुगमइति * एकस्य प्रवृत्तिसामान्यप्रयोजकस्याभावादित्यर्थः * स्वविशेषणवत्तेति * स्वं वर्तमानः पुरुषः, तद्विशेषण तद्वृत्तिः कामनादिरूपो धर्मः, तद्वत्ताप्रतिसन्धानं स्वविषयसाधनत्वसम्बन्धेन तद्विशिष्टत्वज्ञानम्, तज्जन्यत्वस्य, अनुगतत्वात् प्रवृत्तिप्रयोजकत्वेनैकस्य धर्मस्य निश्चितत्वादित्यर्थः (स्व पक्षः, तद्विशेषण तद्वृत्त्यसाधारणधर्मः, तथाच पक्षविशेष्यकपक्षवृत्त्यसाधारणधर्मप्रकारकज्ञानजन्यत्वस्येत्यर्थः इति नृसिहप्रकाशिकायामुक्तम्) गुरूणां मत खण्डयति * तन्नेति * जन्यत्वाद्यघटितस्य कारणतावच्छेदकत्वेलाघवमित्याह * लाघवेनेति * किञ्च गुरुमते व्याप्तिपक्षधर्मत्वादिज्ञानप्रयुक्तगौरवं स्यात्, नैयायिकमते तदभाव इत्यपि ग्राह्यम् * कृतिसाध्येति * अत्र बलवदनिष्टाननुबन्धित्वस्याप्यन्तर्भावः कार्यः । तथाच कृतिसाध्यत्वादित्रिकस्य एकविशिष्टापरत्वेन चिकीर्षाद्वारा प्रवृत्तिकारणत्वं प्राचीनमते । नवीनमते तत्रयस्य* दण्डचक्रादिन्यायेन पृथगेव कारणत्वमभ्युपेयते । ननु ज्योतिष्टोमेन स्वर्गकामोयजेतेति श्रुत्या ज्योतिष्टोमादिकाम्यकर्मण एव फलं श्रूयते, नित्यनैमित्तिकयोः अकरणे प्रत्यवायः करणे फलाभावश्च श्रूयते, आशौचादिनिमित्तज्ञानाधीनं स्नानादिकं दर्शपूर्णमासातिपातप्रयुक्तं पथिकृदिष्ट्यादिकं नैमित्तिकम्, तत्रोभयत्र फलाश्रवणेन इष्टसाधनत्वा-

भाव इत्यत आह * नित्यनैमित्तिकइति * प्रागभावस्यानादित्वेन जन्यत्वाभावेपि नित्यकर्माचरणप्रत्यवायप्रागभावयोः अन्वयव्यतिरेकसद्भावेन ययोरन्वयव्यतिरेकौ स्तः तयोः प्रयोज्यप्रयोजकभावस्य निश्चितत्वेन योगक्षेमसाधारणं जन्यत्वं प्रत्यवायपरिहारस्याक्षतमितीष्टत्वमव्याहतमित्याह * प्रत्यवायपरिहारस्येति * प्रत्यवायप्रागभावस्येत्यर्थः । सन्ध्यावन्दनादेः मुख्यमिष्टसाधनत्वमप्युपपादयति * पापक्षयस्येति * चकारः पूर्वकल्पेऽस्वरसोद्भावनार्थः । तथाच "सन्ध्यामुपासते येतु सततं संश्रितव्रताः, विधूतपापास्तेयान्ति ब्रह्मलोकं सनातनम्" नित्यनैमित्तिकैरेवकुर्वाणो दुरितक्षयम्, इत्यादिवचनैः पापक्षयस्य ब्रह्मलोकावाप्तेश्च फलत्वं प्रतिपाद्यत इति भावः । नचैवं नित्यनैमित्तिकयोरपि काम्यत्वापत्तिः फलवत्त्वादिति वाच्यम्, फलकामनापूर्वकानुष्ठानाभावात्, तत्तद्विधिवाक्ये फलकामिनमुद्दिश्य तदर्थफलसाधनत्वेन विधानाभावाच्च काम्यत्वानुपपत्तेः * तस्मादिति * प्रवृत्तिमात्रे इष्टसाधनताज्ञानस्य कारणत्वकल्पने बाधकाभावादित्यर्थः * कृतिसाध्येति * कृतिसाध्यताविशिष्टेष्टसाधनताविशिष्टबलवदनिष्टाननुबन्धित्वं तत्रिकं वा लिङर्थः । अत्रैवकारः कृतिसाध्यत्वमात्रस्य लिङर्थताव्यवच्छेदकः ॥

**मू * ननु ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र लिङा स्वर्गसाधनमपूर्वं कार्यं प्रतीयते, यागस्याशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वायोगात्तद्योग्यं स्थायिकार्यमपूर्वमेव लिङर्थः । कार्यं कृतिसाध्यं कृतेस्सविषयत्वाद्विषयाकांक्षायां यागो विषयत्वेनान्वेति; कस्य कार्यमिति नियो-**

ज्याकांक्षायां स्वर्गकामपदं नियोज्यपरतयाऽन्वेति, कार्य-बोद्धा नियोज्यः, तेन ज्योतिष्टोमनामकयागविषयकं स्वर्ग-कामस्य कार्यमिति वाक्यार्थस्सम्पद्यते, वैदिकलिङो याव-ज्जीवमग्निहोत्रं जुहुयादिति नित्यवाक्येप्यपूर्वमेव वाच्यं कल्प्यते, आरोग्यकामो भेषजपानं कुर्यादित्यादौ लौकिक-लिङः क्रियाकार्येलक्षणेतिचेन्न, यागस्याप्ययोग्यतानिश्चया-भावेन साधनतया प्रतीत्यनन्तरं तन्निर्वाहार्थमवान्तरव्यापा-रतयाऽपूर्वकल्पनात् कीर्तनादिना नाशश्रुतेः न यागध्वंसो व्यापारः, लोकव्युत्पत्तिबलात्क्रियायामेव कृतिसाध्येष्टसा-धनत्वं लिङा बोध्यत इति लिङ्त्वरूपेण विध्यर्थत्वं आ-ख्यातत्वेन प्रयत्नार्थकत्वम्, पचति पाकंकरोतीति विवरण-दर्शनात् किंकरोतीति प्रश्ने पचतीत्युत्तराच्च आख्यातस्य प्रयत्नार्थकत्वात् ॥

व्या ॥ ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र लिङादेः कार्ये (कृति-साध्यापूर्वे) शक्तिमङ्गीकुर्वतां गुरूणां मतमुपन्यस्यति * नन्विति * अत्र नैयायिकमते कृतिसाध्यत्वविशिष्टेष्टसाधनत्वविशिष्टबलवदनि-ष्टाननुबन्धित्वविशिष्टज्योतिष्टोमनामकयागानुकूलकृतिमान् स्वर्ग-काम इति शाब्दबोधः । गुरुमते तु ज्योतिष्टोमनामकयागविष-यिणी पुरुषसमवेता या कृतिः तत्साध्यं स्वर्गसाधनीभूतमपूर्वमिति लिङर्थविशेष्यकोबोधः अङ्गीक्रियते । प्रथमान्तपदार्थमुख्यविशेष्य-कबोधो नैयायिकमते, धात्वर्थमुख्यविशेष्यकबोधो वैयाकरणमते, आख्यातार्थमुख्यविशेष्यकबोधो मीमांसकमतेऽभ्युपेयते । लिङि

लिङ्त्वमाख्यातत्वञ्चेति धर्मद्वयं विद्यते, नैयायिकमते लिङ्त्वावच्छिन्नस्य कृतिसाध्यत्वादिधर्मत्रिकार्थकत्वं आख्यातत्वावच्छिन्नस्य कृतित्वावच्छिन्नार्थकत्वञ्चाभ्युपेयते। अतएव यजति यजेतेत्यत्र बोधयोर्भेदस्सुवचः, यतः यजतीत्यत्र लिङोऽभावेन यजनानुकूलकृतिमानिति यजेतेत्यत्र लिङस्सद्भावेन कृतिसाध्यत्वादिविशिष्टयागानुकूलकृतिमानिति बोधोऽङ्गीक्रियते * स्वर्गसाधनमपूर्वमिति * ननु इष्टसाधनत्वादेर्लिङर्थत्वे स्वर्गसाधनत्वप्रतीतिः कथमिति चेन्न, स्वर्गकामपदसमभिव्याहारेण इष्टस्वर्गरूपत्वेन अन्वयोपपत्तेः * अपूर्वमेवलिङर्थइति * अत्रायमाशयः, लिङः स्वर्गसाधनीभूतापूर्वरूपकार्य एव शक्तिरङ्गीकार्या, नतु इष्टसाधनत्वादिविशिष्टकृतिसाध्यतारूपकार्यत्वे। तथाहि, कार्यत्वे शक्तिकल्पने यागस्य द्रव्यत्यागरूपत्वेन त्यागस्यचेच्छारूपत्वेन (देवतोद्देशेन द्रव्यत्यागो यागः। स्वस्वत्वध्वंसजनकेच्छा त्यागः) इच्छायाश्च क्षणद्वयावस्थायित्वेन साधनस्य कार्याव्यवहितप्राक्क्षणवृत्तित्वनियमेन कालान्तरभाविस्वर्गरूपेष्टसाधनत्व इदानीन्तनेच्छारूपयागे न सम्भवतीतीष्टसाधनत्वान्वयस्य बाधस्सम्भवति। तादृशकार्ये शक्तिकल्पने तु अपूर्वस्य इदानीन्तनयागजन्यत्वस्याक्षततया तस्य स्वर्गपर्यन्तस्थायित्वाङ्गीकारे बाधकाभावेन नान्वयानुपपत्तिरिति। अन्वयप्रकारं दर्शयति * कार्यं कृतिसाध्यमिति * यागे कृतिसाध्यत्वं साक्षादन्वेति, अपूर्वे तु यागद्वारा तदन्वेतीति बोध्यम्। विध्यर्थापूर्वमुख्यविशेष्यकबोधं दर्शयति * कार्यबोद्धेति * मत्कृतिसाध्यमिति ज्ञानवानित्यर्थः। * तेनेति * स्वर्गकामस्य लिङर्थे कार्ये तदेकदेशे यागस्यान्वयेनेत्यर्थः। तथाच ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र बोधप्रकार इत्थम्, धान्येन धनवानित्यत्रेव ज्योतिष्टोमेनेति

तृतीयाया अभेदोऽर्थः, तस्य यजिधात्वर्थयागेऽन्वयः, तस्य लिङर्थी भूतकृतिसाध्यत्वरूपकार्यत्वावच्छिन्नघटकक्रतौ विषयतासम्बन्धेनान्वयः, स्वर्गकामपदार्थस्य समवेतत्वसम्बन्धेन कार्यत्वेन बोध्यमाने अपूर्वस्वरूपे कार्यत्वावच्छिन्नेऽन्वयः। "तत्कामेन क्रियमाणं वेदविहितं कर्म तज्जनकं भवतीति नियमेन स्वर्गकामेन क्रियमाणं कर्म तज्जन्यमपूर्वञ्च स्वर्गजनकं भवतीति स्वर्गजनकत्वमर्थात्कार्यरूपेऽपूर्वेमानसिकबोधे भासते। शब्दजन्यो बोधस्तु, ज्योतिष्टोमाभिन्नयागविषयककृतिसाध्यमपूर्वं स्वर्गकामसमवेतमिति, अयमेव बोधः वाक्यार्थस्सम्पद्यतइत्यनेन ग्रन्थकृता प्रदर्शितः॥

मीमांसकैकदेशिनस्तु प्रकारान्तरेण तत्र बोधप्रकारं वदन्ति। तथाहि, यजेतेत्यत्रास्त्यंशद्वयं यजिधातुः प्रत्ययश्च, प्रत्ययेप्यस्त्यंशद्वयं आख्यातत्वं लिङ्त्वञ्च, तत्राख्यातत्वं दशलकारसाधारणम् लिङ्त्वं पुनः लिङ्मात्रे, उभाभ्यामप्यंशाभ्यां भावनैवोच्यते, भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः, सा द्विविधा शब्दभावना अर्थभावनाचेति, तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषश्शाब्दीभावना, साच लिङंशेनोच्यते, लिङ्श्रवणे अयं मां प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानयमिति नियमेन प्रतीतेः, यद्यस्माच्छब्दान्नियमेनप्रतीयते तत्तस्य वाच्यम्, यथागामानयेत्यत्र अस्मिन् वाक्ये गोशब्दस्य गोत्वं, सच व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः, वैदिकवाक्ये तु पुरुषाभावात् लिङादिशब्दनिष्ठ एव, अतएव शब्दभावनेति व्यवह्रियते, साच भावना अंशत्रयमपेक्षते साध्यं साधनमिति कर्तव्यताञ्च किं भावयेत्केनभावयेत्कथंभावयेदिति, तत्र साध्याकांक्षायां वक्ष्यमाणांश-

त्रयोपेता आर्थीभावना साध्यत्वेनान्वेति, एकप्रत्ययगम्यत्वेनसमानाभिधानश्रुतेः, सङ्ख्यादीनामेकप्रत्ययगम्यत्वेपि अयोग्यत्वान्नसाध्यत्वेनान्वयः, साधनाकांक्षायां लिङादिज्ञानं करणत्वेनान्वेति, तस्य च करणत्वं न भावनोत्पादकत्वेन, तत्पूर्वमपि तस्याश्शब्दे सत्त्वात्, किन्तु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिर्वर्तकत्वेन वा, इति कर्तव्यताकांक्षायां अर्थवादज्ञाप्यप्राशस्त्यमितिकर्तव्यतात्वेनान्वेति। प्रयोजनेच्छाजनिताक्रियाविषयव्यापारः आर्थीभावना, साच आख्यातत्वांशेनोच्यते, आख्यातसामान्यस्य व्यापारवाचित्वात्, साप्यंशत्रयमपेक्षते साध्यंसाधनमितिकर्तव्यताञ्च किं भावयेत् केन भावयेत् कथं भावयेदिति, तत्र साध्याकांक्षायां स्वर्गादिफलं साध्यत्वेनान्वेति, साधनाकांक्षायां यागादिः करणत्वेनान्वेति, इति कर्तव्यताकांक्षायां प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वेति। तथाच यागकरणिका स्वर्गादिसाध्यका प्रयाजाद्यङ्गजातनिष्ठेतिकर्तव्यताका या आर्थीभावना तत्साध्यका प्राशस्त्यज्ञाननिष्ठेतिकर्तव्यताका लिङादिज्ञानकरणका शाब्दीभावनेति तन्मते बोधः॥

**अयंविषयः मीमांसार्थसंग्रहादुद्धृतः अगनिर्दिष्टः॥**

ननु नित्यकर्मस्थले फलजननाभावेन कथं तत्रापूर्वबोधसम्भव इत्यत आह * यावज्जीवमिति * अपूर्वमेव वाच्यं कल्प्यत इति * अत्र वाच्यमपूर्वमेवेति योजना। कल्प्यते अनुमीयत इत्यर्थः। अनुमानप्रयोगस्तु, यावज्जीवमित्यादिश्रुतिघटकलिङ्पदं अपूर्ववाचकं वैदिकलिङ्त्वात् ज्योतिष्टोमेनेतिश्रुतिघटकलिङ्पदवदिति, तथाच वैदिकलिङ्मात्रस्याप्यपूर्ववाचकत्वं सिद्ध्यतीति भावः। लौकिकवाक्यस्थलेऽपूर्वभानासम्भवादाह *

आरोग्यकामइति * क्रिया कार्य इति * क्रिया धात्वर्थः, कार्यं कार्यत्वम्, तथाच धात्वर्थनिष्ठकार्यत्व इत्यर्थः। लौकिकालौकिकवाक्यसाधारण्येन लिङादेः कार्यत्वादावेव शक्तिरङ्गीकर्तव्येत्याशयेन समाधत्ते * यागस्येति * यागस्य फलजननायोग्यत्वात् फलसाधनत्वेन भानं न सम्भवतीत्युक्तदोषं निराचष्टे * अयोग्येति * योगे फलजनना योग्यतासंशायसत्त्वेपि तस्य विघटकत्वाभावेनतद्बोधस्य नानुपपत्तिरित भावः। वाक्यादिष्टसाधनत्वेन यागेऽवगते सति आशुतरविनाशिनो यागस्य व्यापारमन्तरेण फलजवकत्वासम्भबेन तत्र फलजनकत्वनिर्वाहाय मध्येऽपूर्वं व्यापारतया कल्प्यत इत्याह * तन्निर्वाहार्थमिति * ननु अपूर्वस्य व्यापारत्व कुतः, यागध्वंस एव व्यापारो भवत्वित्यत आह * कीर्तनादिनेति * आदिपदेन कर्मनाशा (कर्मनाशानाम्नी नदी) जलस्पर्शादिपरिग्रहः। यागध्वंसस्यैव व्यापारत्वे कीर्तनादिना नाश्यत्वं तस्य न स्यात्, तस्य नाशरहितत्वात्। "कर्मनाशाजलस्पर्शात् करतोयातिलंघनात्, गण्डकीबाहुतरणात् धर्मः क्षरति कीर्तनात्, इति वंचनं कीर्तनादेर्धर्मनाशकत्वबोधकमिति ज्ञेयम्। किञ्च यागध्वंसस्य व्यापारत्वे तस्य सार्वदिकत्वेन नाशासम्भवेन सर्वदा स्वर्गपरम्पराप्रसङ्गः इति दोषान्तरञ्च विज्ञेयम्॥

लोकव्युत्पत्तिबलादिति * लोकव्यवहारबलादित्यर्थः। स लोकव्यवहारश्च यो जनो यत्र कार्ये प्रवर्तते स जनः कृतिसाध्यत्वेन इष्टसाधनत्वन च तत्कार्यज्ञानवान् इत्याकारका बाध्यः। अथवा, यदिच्छया यत्र प्रवृत्तिः तत्तत्साधनमिति वा लोकव्यवहारः * विध्यर्थत्वमिति * प्रयत्नार्थकत्वमिति * लिङि लिङत्वमाख्यातत्वंचेति धर्मद्वयं विद्यते, तत्र लिङ्त्वावच्छिन्नस्य इष्टसाधनत्वादौ

आख्यातत्वावच्छिन्नस्य लाघवात्कृतित्वावच्छिन्ने शक्त्यङ्गीकारेण ततएव तदुभयबोध इति भावः (प्रयत्नशक्ततावच्छेदकमाख्यातत्वं विधिशक्ततावच्छेदकं लिङत्वमिति विवेकः) आख्यातस्य प्रयत्नार्थकत्वे हेतुमाह * पचाति पाकं करोतीति * तत्रैव हेत्वन्तरमाह * किंकरोतीतिप्रश्ने पचतीत्युत्तराच्चेति ॥

**मू * रथो गच्छतीत्यादावनुकूलव्यापारे लक्षणा । देवदत्तः पचति देवदत्तेन पच्यते तण्डुल इत्यादौ कर्तृकर्मणोर्नाख्यातार्थत्वम् , किन्तु तद्गतैकत्वादीनामेव, तयोराक्षेपादेव लाभः । प्रजयतीत्यादौ धातोरेव प्रकर्षे शक्तिः । उपसर्गाणां द्योतकत्वमेव, न तत्र शक्तिः ॥**

व्या ॥ नन्वाख्यातस्य कृतिशक्तत्वेङ्गीक्रियमाणे चैत्रस्तण्डुलं पचतीत्यादौ तण्डुलकर्मकपचनानुकूलकृतिमानिति बोधोत्पत्त्या कृत्यर्थकत्वस्योपपत्तावपि रथो गच्छति घट करोतीत्यादौ गमनानुकूलव्यापारवान् रथः घटविषयककृत्याश्रयश्चैत्रः इति बोधोत्पत्त्या आख्यातस्य कृतिबोधकत्वासम्भवेन कृताविव व्यापारे आश्रयत्वादौ च आख्यातस्य शक्तेरङ्गीकर्तव्यतया शक्यतावच्छेदकभेदेन शक्तिभेदाङ्गीकारे महागौरवमित्यत आह * रथोगच्छतीति * आख्यातस्य शक्तिस्तु कृतित्वावच्छिन्न एवाङ्गीक्रियते, व्यापारे आश्रयत्वादौ च लक्षणाभ्युपेयते, नातश्शक्यतावच्छेदकानन्त्यप्रयुक्तगौरवप्रसङ्ग इति भावः । ननु शक्यतावच्छेदकानन्त्यप्रयुक्तगौरवाभावेपि लक्ष्यतावच्छेदकानन्त्यप्रयुक्तं गौरवमपरिहार्यमिति चेन्न, यत्रयत्रान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा लक्षणाबीजं वर्तते तत्र सर्वत्र

लक्षणाया अङ्गीकर्तव्यतया लक्ष्यतावच्छेदकानन्त्यप्रयुक्तगौरवकथनस्यानुचितत्वात् * अनुकूलव्यापारे लक्षणेति * यद्यपि लक्षणा व्यापारएवाङ्गीक्रियते, नत्वनुकूलत्वविशिष्टे तस्मिन्, तथापि अनुकूलतासम्बन्धेन धात्वर्थस्य आख्यातार्थेऽन्वयलाभाय अनुकूलत्वकथनमित्यवधेयम्। अनुकूलव्यापारे लक्षणाङ्गीकरणं प्राचीनमताभिप्रायेण। नवीनमतेतु जानाति इच्छति यतते इत्यादाविव रथो गच्छतीत्यादावप्याश्रयत्वएव लक्षणाङ्गीक्रियते। ननु नवीनमते रथोगच्छतीत्यादौ धात्वर्थस्य गमनस्य आश्रयतासम्बन्धेन रथेऽन्वयस्वीकारेणैवोपपत्तौ आख्यातस्याश्रयत्वे लक्षणाङ्गीकरणमनावश्यकमिति वाच्यम्, नामार्थयोरिव नामार्थधात्वर्थयोरप्यभेदातिरिक्तसम्बन्धेन अन्वयस्याव्युत्पन्नतया गमनस्याश्रयतासम्बन्धेनरथेऽन्वयायोगात्, धात्वर्थनामार्थयोरभेदसम्बन्धेनान्वयः स्तोकंपचतीत्यादौ दृश्यते। तत्र बोधः स्तोकाभिन्नपाकानुकूलकृतिमानिति॥

देवदत्तस्तण्डुलंपचतीत्यादौ कर्त्राख्यातस्थले आख्यातस्य कर्तरि (कृतिविशिष्टे) देवदत्तेन पच्यते तण्डुल इति कर्माख्यातस्थले कर्मणि (कर्मत्वविशिष्टे) शक्तिमङ्गीकुर्वतां वैयाकरणानां मतं निराकरोति * देवदत्तइति * नाख्यातार्थत्वमिति * आख्यातस्य कर्त्रादौ शक्तिस्वीकारे अनन्तानां कृत्यादीनां तच्छक्यतावच्छेदकत्वमङ्गीकार्यमिति गौरवं तन्मते स्यात्, कृतौ कर्मत्वादौ आख्यातस्य शक्तिस्वीकारे तु कृतित्वस्य कर्मत्वत्वादेश्चानुगततया तत्र शक्यतावच्छेदकत्वकल्पने लाघवमिति नैयायिकाशयः। वस्तुतस्तु, कर्त्राख्यातस्थले कर्माख्यातस्थलेच सर्वत्रापि आख्यातसामान्यस्य कृतित्वावच्छिन्नएव शक्तिः, कर्माख्यातस्थलेपि कर्मत्वादौ

लक्षणैवेति नैयायिकमतम् * तद्गतैकत्वादीनामेवेति * आदिना कृत्यादेः परिग्रहः, तथाच कृतिः कर्त्रादिगतैकत्वादिकञ्च आख्यातेन बोध्यतइति भावः। ननु कृत्यादीनामाख्यातार्थत्वे कर्त्रादीनां प्रतीतिरनुपपन्नेत्यत आह * आक्षेपादेवेति * अर्थापत्तिप्रमाणादेवेत्यर्थः, कर्त्रादि विना कृत्यादेरनुपपन्नतया कृत्यादिना कर्त्रादिराक्षिप्यतइति भावः। तथाच न्यायमते प्रथमान्तार्थमुख्यविशेष्यकबोधाङ्गीकारेण देवदत्तस्तंडुलंपचतीत्यत्र तण्डुलकर्मकपचनानुकूलकृतिमानिति बोधः, देवदत्तेन पच्यते तण्डुल इत्यत्र देवदत्तसमवेतकृतिजन्यपाककर्मीभूतस्तण्डुल इति बोधः स्वीक्रियते ॥

ननु नैयायिकमते आख्यातेन कृत्यादेरभिधाने (कर्तृकर्मणोरनभिधाने) आख्यातेनानभिहिते कर्तरि कर्तृवाचकपदोत्तरं तृतीयाविधानेन चैत्रेण पच्यते तण्डुल इत्यादाविव चैत्रेण तण्डुलं पचतीति प्रयोगप्रसङ्गः, एवमाख्यातेन कर्मण्यनभिहिते कर्मवाचकपदोत्तरं द्वितीयाविधानेन चैत्रस्तण्डुलं पचतीत्यादाविव चैत्रेण पच्यते तण्डुलमिति द्वितीयान्ततण्डुलपदघटितप्रयोगापत्तिः (अनभिहिते कर्तरि तृतीया, कर्मणि द्वितीया, इति सूत्रक्रमो ग्राह्यः) इति वाच्यम्, तत्सूत्रघटककर्तृकर्मपदयोः कर्तृत्वकर्मत्वाद्यर्थकतयाऽदोषात्। अथवा, कर्तृपदेन कर्तृगतसंख्यायाः कर्मपदेन कर्मगतसंख्यायाश्च बोध्यमानत्वाङ्गीकारेण नानुपपत्तिः, चैत्रस्तण्डुलंपचतीत्यत्र आख्यातेन कर्तृगतैकत्वसंख्याया अभिहिततया न तत्र चैत्रपदोत्तरं तृतीयाप्रसक्तिः, चैत्रेण पच्यते तण्डुल इत्यत्र आख्यातेन कर्मगतसंख्याया अभिहिततया न तत्र तण्डुलपदोत्तरं द्वितीयाप्रसक्तिः॥ उपसर्गाणां वाचकत्वमङ्गीकुर्वतां मतं खण्ड-

यति * प्रजयतीत्यादाविति * अत्रत्यधानोरेव प्रकृष्टजयरूपार्थे शक्तिरित्यर्थः । ननु तर्हि धातोरेव तादृशार्थे शक्तिस्वीकारे प्राद्युपसर्गाणां वैयर्थ्यमित्यत आह * उपसर्गाणामिति * द्योतकत्वमेव तात्पर्यग्राहकत्वमेवेत्यर्थः । धातोः प्रकृष्टजयादिरूपार्थाः प्राद्युपसर्गबलात्सम्भवन्तीति भावः । उपसर्गाणां द्योतकत्वकथनेन इतरनिपातानामेवकारादीनां वाचकत्वमिति ज्ञायते ॥

श्री विश्वेश्वराय नमः ।

## पदार्थतत्त्वज्ञानस्य मोक्षोपयोगित्वनिरूपण प्रारम्भः ।

मू * पदार्थज्ञानस्य परमप्रयोजनं मोक्षः, तथाहि "आत्मावाऽरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुत्या श्रवणादीनामात्मसाक्षात्कारहेतुत्वबोधनात् श्रुत्या देहादिविलक्षणात्मज्ञाने सत्यपि असम्भावनानिवृत्तेर्वाक्यार्थानुसन्धानरूपमननसाध्यत्वात् मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षोपयोगः, तदनन्तरं श्रुत्युपदिष्टयोगविधिना निदिध्यासने कृते तदनन्तरं देहादिविलक्षणात्मसाक्षात्कारे सति देहादावहमित्यभिमानरूपमिथ्याज्ञाननाशे दोषाभावात्प्रवृत्त्यभावे धर्माधर्मयोरभावे जननाभावः, पूर्वधर्माधर्मयोरनुभवानुरोधेन नाशे चरमदुःखध्वंसलक्षणो मोक्षो जायते । ज्ञानमेवमोक्ष साधनम् , मिथ्याज्ञाननिवृत्तेः ज्ञानमात्रसाध्यत्वात् "तमेवं विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय" इति श्रुत्या साधनान्तरनिषेधाच्च । ननु "तत्प्राप्तिहेतुर्वि-

ज्ञानं कर्मचोक्तं महामुने" इति कर्मणो मोक्षसाधनत्वश्रवणात् ज्ञानकर्मणोस्समुच्चय इति चेन्न, "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयं, ज्ञानञ्च विमलीकुर्वन्नभ्यासेन च पाचयेत्" अभ्यासाच्च क्वचिदज्ञानात् कैवल्यं लभते नर, इत्यादिना कर्मणोज्ञानसाधनत्वप्रतिपादनात्, ज्ञानद्वारैव कर्मणो मोक्षसाधनत्वम् न साक्षात्, तस्मात्पदार्थतत्त्वज्ञानस्य मोक्षः परमप्रयोजनमिति सर्वं रमणीयम् ॥

इत्यन्नंभट्टोपाध्यायकृता तर्कसंग्रहदीपिका समाप्ता ॥

व्या * मोक्षरूपप्रयोजनानिरूपणे प्रेक्षावतामास्तिकानां एतद्ग्रन्थाभ्यासे प्रवृत्तिर्नस्यादिति मोक्षप्रयोजनकत्वञ्चास्यग्रन्थस्योपपादयति * पदाथज्ञानस्येति * पदार्थतत्त्वज्ञानस्येत्यर्थः * परमप्रयोजनमिति * मोक्षस्य परमप्रयोजनत्वकथनेन पदार्थतत्त्वज्ञानस्य अवान्तरप्रयोजनसद्भावस्सूच्यते। अस्याश्श्रुतेरयमर्थः, अरे मैत्रेयि, आत्मा द्रष्टव्यः साक्षात्कर्तव्यः, आत्मसाक्षात्कारे हेतुमाह * श्रोतव्यइति * प्रथमं श्रोतव्यः वेदान्तवाक्यजन्यसाक्षात्कारविषयीकर्तव्यः, मन्तव्यः मननविषयीकर्तव्यः, निदिध्यासितव्यः, निदिध्यासनविषयीकर्तव्यः (युक्तिभिरनुचिन्तनं मननम्, निदिध्यासनं नाम ध्यानं तच्च विजातीयप्रत्ययप्रवाहानन्तरितसजातीयप्रत्ययप्रवाहरूपम्) अग्निहोत्रं जुहोति यवागूं पचतीत्यत्रेव शब्दक्रमादर्थक्रमस्य प्राबल्यमङ्गीकृत्य आत्मा श्रोतव्यः मन्तव्यः निदिध्यासितव्यः द्रष्टव्यः इति क्रमेण पूर्वापरभाववैपरीत्येन पदानां समन्वयः

कार्यः, श्रवणाद्यनन्तरभावित्वादात्मदर्शनस्य । असंभावनानिवृत्तेः अप्रामाण्यज्ञाननिवृत्तेरित्यर्थः * मननसाध्यत्वादिति * मननञ्च युक्तिभिरनुचिन्तनम्, अनुमितिरिति यावत्, साच आत्मा इतरभिन्न इत्यादिरूपा, इतरभेदबुद्धिं प्रति प्रतियोगिविधया इतरपदार्थज्ञानस्यावश्यकत्वेन पदार्थनिरूपणमन्तरा पदार्थज्ञानाभावेन तत्संपादनाय सकलपदार्थनिरूपणमावश्यकम्, एवं पदार्थतत्त्वज्ञानस्य परम्परया मोक्षसाधनत्वं सम्भवति । एतदेव विशदयति * तदनन्तरमिति * योगविधिनेति * योगश्चित्तवृत्तिनिरोधः । तथाच श्रवणे वेदान्तशास्त्रस्य मनने न्यायशास्त्रस्य निदिध्यासने योगशास्त्रस्य च आवश्यकतास्तीति ज्ञायते । मिथ्याज्ञानं वासनासहितमिथ्याज्ञानं । दोषः रागादिः । ज्ञानकर्मसमुच्चयस्य मोक्षसाधनत्वं निराकरोति * ज्ञानमेव मोक्षसाधनमिति * रज्जौ सर्पभ्रमः यथा रज्जुज्ञानेन नश्यति तथा प्रकृतेप्यधिष्ठानभूतात्मज्ञानेन देहादावहंप्रत्ययरूपस्य मिथ्याज्ञानस्य नाशस्सम्भवतीत्याह * मिथ्याज्ञाननिवृत्तेरिति * तत्र श्रुतिं प्रमाणयति * तमेवमिति * कैवल्यंलभतेनरइत्यत्रादिपदेन "क्षीयन्तेचास्यकर्माणि तस्मिन् दृष्टे परावर इति श्रुतेः "ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेर्जुनेति स्मृतेः "नित्यं नैमित्तिकं कर्म ज्ञानमुत्पाद्य नश्यतीति "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते "सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसीत्यादिस्मृतीनाञ्च संग्रहः * ज्ञानद्वारैव कर्मणो मोक्षसाधनत्वमिति * केवलं भगवदर्पणबुध्या कामनारहितैस्समाचरितैः कर्मभिः दुरितक्षयरूपाचित्तशुद्धिर्भवति, ततो विषयेषु वैराग्यं, ततः श्रवणादौ प्रवृत्तिः, ततोमननादिक्रमेण तत्त्वज्ञानोत्पत्तिः ततो मिथ्याज्ञाननाशः, तदनुमोक्षप्राप्तिरिति क्रमोऽत्र ग्राह्यः ॥

* समानिरूपणस्थलेनिग्रहस्थानानिरूपणस्थलेच नृसिहप्रकाशिकायां निर्दिष्ट एवविषयः मनोरमः सुलभइति तत उद्धृत्य किंचिद्विनिमयेनात्रनिरूपितइति विज्ञाप्यते ॥

इति श्रीमदान्ध्रदेशविद्योतमानगुंटूरुमण्डलान्तर्वर्तिकृष्णातटिनीसमीपवर्तिवेमूरुग्रामवास्तव्येन श्रीन्यायवेदान्ततन्त्रसमुपलब्धनिरवधिकप्रज्ञाविशेषवेमूर्युपनामकरामब्रह्मसुधीन्द्रगुरुवरपदपङ्कजसेवासमधिगतविज्ञानेन तेनालिसंस्कृतकलाशालायां तर्कालङ्कारशास्त्राध्यापकेन कुरुगटयुपनामकसूर्यनारायणशास्त्रिद्वितीयतनयेन श्रीकन्नमाम्बागर्भसंभूतेन हरितसगोत्रेण तर्कसंग्रहसर्वस्वपञ्चलक्षणीसर्वस्वकृता श्रीरामशास्त्रिणा प्रणीते श्रीमदन्नम्भट्टविरचिततर्कसंग्रहदीपिकाव्याख्यानरूपे दीपिकासर्वस्वे भगवदर्पिते शक्तिविधिवादादिकं समाप्तिमगमत् ॥

श्रीः श्रीः श्रीः

श्री शिवायै नमः ।

# दीपिकासर्वस्वे ।

## पारिभाषिकपदार्थसंग्रहप्रारंभः ।

### * धात्वर्थविचारः *

चैत्रो ग्रामं गच्छतीत्यादौ गमेः उत्तरदेशावच्छिन्नसंयोगानुकूलव्यापारोर्थः ॥ चैत्रः ओदनं भुङ्क्ते इत्यत्र भुजेः गलबिलाधोदेशसंयोगानुकूलव्यापारोर्थः ॥ अग्निहोत्रं जुहोतीत्यत्र जुहोतेः अग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारोर्थः ॥ ब्राह्मणाय धनं ददातीत्यत्र ददातेः स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलेच्छाऽर्थः ॥ वृक्षात्पर्णंपततीत्यत्र पततेः अधोदेशावच्छिन्नसंयोगानुकूलव्यापारोऽर्थः ॥ धनं प्रतिगृण्हातीत्यत्र गृण्हातेः स्वस्वत्वजनकेच्छारूपस्वीकारविशेषोऽर्थः ॥ अग्निः काष्ठं दहतीत्यत्र दहतेः पूर्वरूपनाशः रूपान्तरोत्पत्तिर्वाऽर्थः ॥ घटः उत्पद्यतइत्यत्र उत्पद्यतेः आद्यक्षणसम्बन्धोर्थः ॥ ग्रन्थमारभतइत्यत्र आङ्पूर्वकरभतेः आद्यकृतिरर्थः ॥ चिकीर्षितं प्रतिजानीते इत्यत्र प्रतिपूर्वकजानातेः उत्तरकालकृतिसाध्यत्वप्रकारकज्ञानजनकशब्दोऽर्थः ॥ चैत्रस्स्वपितीत्यत्र स्वपितेः ज्ञानशून्यावस्थाऽर्थः ॥ उच्चारयतीत्यत्र उच्चारयतेः कण्ठताल्वाद्यभिघातसंयोगजन्यध्वनिविशेषोऽर्थः ॥ स्नातीत्यत्र स्नातेः शरीरमालिन्यापकर्षकजलसंयोगोऽर्थः ॥ कचभरं शोषयतीत्यत्र शोषयतेः जलसंयोगनाशनानुकूलतेजोवाय्वन्यतरसंयोगानुकूलव्यापारोऽर्थः ॥

मार्गं पृच्छतीत्यत्र पृच्छतेः जिज्ञासाविषयार्थविषयकज्ञानजनकशब्दप्रयोगोऽर्थः ॥ धर्मं वक्तीत्यत्र वक्तेः ज्ञानजनकशब्दप्रयोगरूपव्यापारोऽर्थः ॥ हरिं भजत इत्यत्र भजतेः प्रीत्यनुकूलव्यापारः (पूज्यत्वप्रकारकज्ञानरूपभक्तिः) अर्थः ॥ व्याघ्राद्बिभेतीत्यत्र अनिष्टसंपादकत्वप्रकारकज्ञानं धात्वर्थः ॥ ध्यायतीत्यत्र विजातीयज्ञानानन्तरितसजातीयज्ञानपरम्परा धात्वर्थः ॥ म्रियतइत्यत्र चरमप्राणशरीरसंयोगनाशो धात्वर्थः ॥ निरूपयतीत्यत्र लक्षणस्वरूपविभागप्रामाण्यादिप्रकारकज्ञानानुकूलव्यापारो निपूर्वकरूपधात्वर्थः ॥ विभजतइत्यत्र परस्परविरुद्धसामान्यधर्मव्याप्यविशेषधर्मप्रकारकज्ञानानुकूलव्यापारो विपूर्वकभजधात्वर्थः ॥ लक्षयतीत्यत्र लक्षणप्रकारकज्ञानानुकूलव्यापारो लक्षधात्वर्थः ॥

कान्तायामनुरज्यतीत्यत्र सुखसाधनत्वप्रकारिका (मदनप्रयोज्या) विलक्षणेच्छा धात्वर्थः ॥ धनं प्रतिगृह्णातीत्यत्र पुण्यार्थकदानजन्यस्वत्वजनकः स्वीकारो धात्वर्थः ॥ अस्तीत्यत्र कालसम्बन्धित्वं धात्वर्थः ॥ ग्रामं क्रीणातीत्यत्र मूल्यदानजन्यस्वत्वजनकः स्वीकारः स्वत्वजनकमूल्यदानं वा धात्वर्थः ॥ ग्रामं विक्रीणातीत्यत्र मूल्यग्रहणजन्यपरस्वत्वानुकूलत्यागः परस्वत्वजनकमूल्यग्रहणं वा विक्रयः ॥ नरकं प्राप्नोतीत्यत्र भोगानुकूलपातित्यं 'धात्वर्थः ॥ स्वर्गं गच्छतीत्यत्र भोगावच्छिन्नगमनं धात्वर्थः ॥ धनं लभते प्राप्नोतीत्यादौ स्वत्वजनकव्यापारो धात्वर्थः ॥ गां दोग्धि पय इत्यत्र मोचनानुकूलव्यापारो धात्वर्थः, बहिःक्षरणावच्छिन्नव्यापारो मोचनम् ॥ शिष्यं धर्मं वदति वक्ति ब्रूते उपदिशति आचष्टे इत्यादौ प्रतिपत्त्यवच्छिन्नव्यापारो वदप्रभृतिधात्वर्थः ॥ शत्रुं शतानि जयतीत्यत्र ग्रहणावच्छिन्नपराभवो धात्वर्थः ॥ प्रजाश्शतं

दण्डयतीत्यत्र ग्रहणावच्छिन्ननियन्त्रणं धात्वर्थः ॥ सुधां समुद्रं मथ्नातीत्यत्र उत्थानावच्छिन्नं उन्मत्थनं (आलोडनं) धात्वर्थः ॥ पान्थं पन्थानं पृच्छतीत्यत्र अभिधानावच्छिन्नव्यापारो धात्वर्थः ॥ नृपमर्थंप्रार्थयते याचते भिक्षतीत्यादौ दानायप्रेरणं दीयतामित्यभिलापरूपा प्रवर्तना धात्वर्थः ॥ ग्राममजां वहति नयतीत्यादौ गत्यवच्छिन्नव्यापारो धात्वर्थः ॥ ओदन पचतीत्यादौ ओदनपदस्य तण्डुलादौ लक्षणाङ्गीकार्य, विक्लृत्यनुकूलव्यापारो धात्वर्थः ॥ पुत्रंधर्ममनुशास्तीत्यत्र देशनयाप्रवर्तनानुकूलव्यापारः धात्वर्थः ॥ सन्ध्यां विधेहीत्यादौ समिधमाधेहीत्यादौ उपदेशरूपो धात्वर्थः ॥ शाखाग्रमाकर्षतीत्यत्र गतिहेतुविकर्षणं (नम्रीभवनं) धात्वर्थः ॥ गामवरुणद्धिव्रजमित्यत्र गतिप्रतिषेधहेत्वावरणं धात्वर्थः ॥ वृक्षं फलान्यवचिनोतीत्यत्र छिदाहेतुविघट्टनं (चालनं) धात्वर्थः ॥ तण्डुलं पचतीत्यत्र रूपादिपरावृत्तिफलकतेजस्संयोगावच्छिन्ना क्रिया धात्वर्थः ॥ तृणं छिनत्तीत्यादौ आरम्भकसंयोगविरोधिविभागावच्छिन्ना क्रिया धात्वर्थः ॥ विष्णुं यजत इत्यादौ प्रीत्यवच्छिन्नसमन्त्रकद्रव्यत्यागो धात्वर्थः ॥ पितरमाराधयति उपास्ते पूजयतीत्यादौ गौरवप्रयुक्तप्रीत्यवच्छिन्नक्रिया धात्वर्थः, अयमाराध्यइत्यादिज्ञानं गौरवम् ॥ परमात्मानमाराधयतीत्यादौ गौरवप्रयुक्तक्रियैव धात्वर्थः ॥ घृतं जुहोतीत्यादौ वन्ह्याधिकरणकपतनावच्छिन्नमन्त्रकरणकक्रिया धात्वर्थः । लोष्टमुत्क्षिपतीत्यादौ ऊर्ध्वदेशसंयोगफलकक्रियावच्छिन्नव्यापारोऽर्थः ॥ एवमपक्षिपतीत्यादावपि ज्ञेयम् ॥ तरुं त्यजतीत्यत्र विभागजनकक्रिया धात्वर्थः ॥ व्याघ्राद्बिभेतीत्यत्र स्वानिष्टस्य भावित्वेन चिन्तनं धात्वर्थः ॥ अधर्माद्विरमतइत्यादौ निवृत्तिस्तदर्थः ॥ शत्रुं पराजयतइत्यादौ अभिभवहेतुव्यापारस्तदर्थः ॥ पापाज्जुगुप्सतइत्यादौ गर्हापूर्वकानिवृत्तिस्तदर्थः ॥

## ❀ प्रतिबध्यप्रतिबन्धकभावविचारः ❀

तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयः प्रतिबन्धकः । यथा, ह्रदोवन्हिमानितिबुद्धिं प्रति ह्रदोवन्ह्यभाववानितिनिश्चयः प्रतिबन्धकः, संयोगसम्बन्धावच्छिन्नवन्हित्वावच्छिन्नप्रकारतानिरूपितह्रादत्वावच्छिन्न विशेष्यताशालिबुद्धित्वावच्छिन्नं प्रति संयोगसम्बन्धावच्छिन्नवन्हित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकातानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनात्र प्रतिबध्यप्रतिबन्धकभावो ग्राह्यः ॥

तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्तानिश्चयोपि प्रतिबन्धकः यथा, ह्रदोवन्हिमानितिबुद्धिं प्रति ह्रदोवन्ह्यभावव्याप्यवानितिनिश्चयः प्रतिबन्धकः, निरुक्ततादृशबुद्धित्वावच्छिन्नं प्रति वन्ह्यभावव्याप्यत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनात्र प्रतिबध्यप्रतिबन्धकभावो ग्राह्यः । किञ्च वन्ह्यभावाभाववदवृत्तिजलवान् ह्रद इति पूर्वपक्षीयव्याप्तिविषयकनिश्चयस्य वन्ह्यभावाभाव (वन्हि) व्यापकीभूताभावप्रतियोगिजलवान् ह्रद इति व्यतिरेकव्याप्तिविषयकनिश्चयस्य जलव्यापकवन्ह्याभावसमानाधिकरणजलवान् ह्रद इति सिद्धान्तव्याप्तिविषयकनिश्चयस्य च तदभावव्याप्यवित्तानिश्चयमुद्रयैव तद्वत्ताबुद्धिं प्रति प्रतिबन्धकत्वं ग्राह्यम् नतु प्राकारान्तरेण परन्तु 'वन्हिव्यापकीभूताभावप्रतियोगिजलवान् ह्रदः इति विशिष्टविषयकनिश्चयस्य वन्हिव्यापकीभूताभावप्रतियोगि जलं जलवान् ह्रद इति निश्चयविशिष्टनिश्चयस्य च वन्हिमत्ताबुद्धिं प्रति प्रतिबन्धकत्वनिर्वाहाय वन्हिव्यापकीभूताभावप्रतियोगित्वत्वावच्छिन्नप्रकारतानिरूपितजलत्वावच्छिन्न -

विशेष्यताशालिनिश्चयविशिष्टजलत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्त्वेनैकरूपेण लाघवात् प्रतिबन्धकत्वं ग्राह्यम्, नहि पूर्वोक्तनिश्चयसाधारण्येन वन्हिव्यापकीभूताभावप्रतियोगिमीनशैवालादिमत्तानिश्चयानामपि एकरूपेण प्रतिबन्धकत्वं कल्पयितु शक्यते॥ वन्हिव्यापकीभूताभावप्रतियोगित्वविशिष्टविषयकनिश्चयविशिष्टह्रदविषयकनिश्चयत्वादिना सर्वनिश्चयसाधारण्येन प्रतिबन्धकत्वकल्पने तु वन्हिव्यापकीभूताभावप्रतियोगि जलं शैवालवान् ह्रद इत्यादिनिश्चयानामपि तत्प्रतिबन्धकत्वापत्तिप्रभृतयोऽतिप्रसङ्गा दुर्वाराः, अतो विशेषरूपेण प्रतिबध्यप्रतिबन्धकभावः वन्हिव्यापकीभूताभावप्रतियोगिजलं जलवान् ह्रदः वन्हिव्यापकीभूताभावप्रतियोगि मीनशैवालादिकं तद्वान् ह्रद इत्यादिनिश्चयविशिष्टनिश्चयानामेकरूपेण न सम्भवति परन्तु वन्हिव्यापकीभूताभावप्रतियोगिजलवान् ह्रदः वन्हिव्यापकीभूताभावप्रतियोगिमीनशैवालादिमान् ह्रद इत्यादिविशिष्टविषयकनिश्चयानान्तु निश्चयविशिष्टनिश्चयासाधारण्येन वन्हिव्यापकीभूताभावप्रतियोगित्वत्वाच्छिन्नप्रकारतानिरूपितप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैकरूपेण लाघवात् प्रतिबन्धकत्वं कल्पयितुं शक्यते एवं जलव्यापकवन्ह्यभावसमानाधिकरणजलवान् ह्रदः जलव्यापकवन्ह्यभावकालीनजलवान् ह्रदः इति विशिष्टविषयकनिश्चययोः जलव्यापको वन्ह्यभावः जलवान् ह्रदः इति निश्चयविशिष्टनिश्चयस्य च जलव्यापकत्वत्वावच्छिन्नप्रकारतानिरूपितवन्ह्यभावत्वावच्छिन्नविशेष्यताशालिनिश्चयविशिष्टजलत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैकरूपेण लाघवात् वन्हिमत्ताबुद्धिप्रतिबन्धकत्वं ग्राह्यम् वन्ह्यभावव्या-

प्यजलवान् हृदः वन्ह्याभावव्याप्यशैवालादिमान् हृदः वन्ह्याभावव्याप्यवान् हृदः इत्यादिनिश्चयानां वन्ह्याभावत्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतानिरूपितप्रकारतानिरूपितहृद - त्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैकरूपेण लाघवात् हृदोवन्हिमानितिबुद्धि प्रति प्रतिबन्धकत्वं ग्राह्यम्। किञ्च, येन सम्बन्धेन यस्य तदभावव्याप्यत्वमभिमतं तदभावव्याप्यनिष्ठतत्सम्बन्धावच्छिन्नप्रकारताशालिनिश्चयस्य तद्वत्ताबुद्धिप्रतिबन्धकत्वं वाच्यम्, नातो वन्ह्याभावव्याप्यजलवान् हृदः वन्ह्याभावव्याप्यजलाधिकरणतावान् हृदः वन्ह्याभावव्याप्यतद्रूपवान् हृद इत्यादिनिश्चयानामपि प्रतिबन्धकत्वानुपपत्तिः ॥

तद्वत्ताबुद्धि प्रति तदभावावच्छेदकतया (तदभावव्याप्यत्वेन) गृहीतधर्मवत्तानिश्चयोपि प्रतिबन्धकः। यथा, हृदो वन्हिमानितिबुद्धि प्रति जलवान् वन्ह्याभाववान् इति निश्चयविशिष्टः जलवान् हृद इति निश्चयः प्रतिबन्धकः, तादृशतद्वत्ताबुद्धि प्रति तादृशनिश्चयस्य जलव्यापकवन्ह्याभावप्रतियोगिकस्वरूपसंबन्धावच्छिन्नवन्ह्याभावत्वावच्छिन्नप्रकारतानिरूपितजलावच्छिन्नविशेष्यताशालि - निश्चयविशिष्टजलत्वावच्छिन्नप्रकारतानिरूपितहृदत्वावच्छिन्नाविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्व ग्राह्यम्, निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतास्वीकारस्थले सर्वत्र निश्चये निश्चयवैशिष्ट्यं स्वसमानकालीनत्त्व (स्वावच्छेदककालावच्छिन्नत्व) समवायघटितस्वसामानाधिकरण्योभयसम्बन्धेन ग्राह्यम्। तथाच जलवान् वन्ह्याभाववान् जलवान् हृद इति समूहालम्बनात्मकनिश्चये जलवान् वन्ह्याभाववानितिनिश्चयविशिष्टे जलवान्हृदइति निश्चये वन्ह्याभाववजलवद्वृत्तिजलवान्हृद इति निश्चये वन्ह्याभाववजलवत्काली-

नजलवान् ह्रद इत्यादिविशिष्टविषयकनिश्चयेषु च पूर्वोक्तरीत्या लाघवादेकरूपेणनिश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वं कल्पनीयम्-अन्यथा तादृशानां निश्चयानां पृथक्पृथक्प्रतिबन्धकत्वस्वीकारे सर्वत्र एतादृशस्थले प्रतिबध्यप्रतिबन्धकभावनानात्वप्रयुक्त महागौरवं प्रसज्येतेत्येवधेयम् ।

तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयःप्रतिबन्धक इत्यस्य तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपितद्धर्मावच्छिन्नविशेष्यताशालिलौकिकसन्निकर्षाजन्यदोषविशेषाजन्यानाहार्यबुद्धित्वावच्छिन्नं प्रति तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्न (स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धावच्छिन्न) प्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशाल्यप्रामाण्यज्ञानानास्कन्दितनिश्चयः प्रतिबन्धक इत्यर्थो वक्तव्यः । स्वपदं प्रतिबन्धकनिश्चयविषयाभावपरं । प्रतिबध्यप्रतिबन्धकज्ञानीयविशेष्यतयोः एकधर्मावच्छिन्नत्वनिवेशात् न घटो वह्निमानित्यादिबुद्धिं प्रति ह्रदोवन्ह्याभाववानित्यादिनिश्चयानां प्रतिबन्धकत्वापत्तिः । प्रतिबध्यज्ञानीयप्रकारतायाः प्रतिबन्धकनिश्चयविषयाभावीयप्रतियोगितायाश्च एकधर्मावच्छिन्नत्वैकसम्बन्धावच्छिन्नत्वयोर्निवेशात् न प्रमेयवान् जलवान् वा ह्रद इति बुद्धिं प्रति वन्ह्याभाववान् ह्रद इति निश्चयस्य प्रतिबन्धकत्वापत्ति नवा ह्रदस्समवायेनवह्निमानितिबुद्धिं प्रति संयोगेन वन्हेरभाववान् ह्रद इति निश्चयस्य प्रतिबन्धकत्वापत्तिश्च । प्रतिबध्यतावच्छेदककोटा

बुद्धौ लौकिकसन्निकर्षाजन्यत्वनिवेशात् न चक्षुस्संयोगादिलौकिकसन्निकर्षजन्य घटवद्भूतलमित्यादिप्रत्यक्षं प्रति घटाभाववद्भूतलमित्यादिनिश्चयानामप्रतिबन्धकत्वेपि कापि क्षतिः। तत्रैव दोषविशेषाजन्यत्वनिवेशात् न पीतश्शङ्ख इत्यादिपित्तकामिलादिदोषविशेषजन्यबुद्धिं प्रति पीतत्वाभाववान् शङ्ख इति निश्चयस्याप्रतिबन्धकत्वेपि कापि क्षति। तत्रैवानाहार्यत्वनिवेशात् न ह्रदोवह्निमानित्याहार्यबुद्धिं प्रति ह्रदोवह्न्यभाववानितिनिश्चयस्याप्रतिबन्धकत्वेपि कापि क्षतिः। प्रतिबन्धकतावच्छेदककोटौ निश्चये अप्रामाण्यज्ञानानास्कन्दितत्वनिवेशात् न ह्रदोवह्निमानितिबुद्धिं प्रति अप्रामाण्यज्ञानास्कन्दितस्य ह्रदोवह्न्यभाववानितिनिश्चयस्याप्रतिबन्धकत्वेपि कापि क्षतिः (बाधकालीनेच्छाजन्यज्ञानमाहार्यं, तद्द्विविधं नियताहार्यमनियताहार्यंचेति, तत्र स्वविरोधिधर्मधर्मितावच्छेदकस्वप्रकारकज्ञानं नियताहार्यं, तद्भिन्नमनियताहार्यं। इद ज्ञानमप्रमेत्यप्रमात्वप्रकारकज्ञानविषयीभूत ज्ञानं अप्रामाण्यज्ञानास्कन्दितज्ञानम्) प्रतिबन्धकतावच्छेदककोटौ प्रकारतायां तादृशाभावत्वावच्छिन्नत्वनिवेशात् न ह्रदोवह्निमानितिबुद्धिं प्रति प्रमेयवान्ह्रद इति निश्चयस्य प्रतिबन्धकत्वप्रसङ्गः। तत्रैव स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वनिवेशात् न ह्रदोवह्निमानितिबुद्धिं प्रति कालिकसम्बन्धेन वन्ह्यभाववानिति कालिकसम्बन्धावच्छिन्नवन्ह्याभावत्वावच्छिन्नप्रकारताशालिनिश्चयस्य प्रतिबन्धकत्वप्रसङ्गः। अतो निरुक्तबुद्धित्वमेव प्रतिबध्यतावच्छेदकम्, नत्वनुमितित्वादिकं किमपि, बुध्यन्तराणामप्रतिबध्यत्वप्रसङ्गेन न अनुमितित्वादेस्तादृशनिश्चयप्रतिबध्यतावच्छेदकत्वसम्भव। निरुक्ततादृशनिश्चयत्वमेव प्रतिबन्धकतावच्छेदकमित्यवधेयम् ॥

अनुमितित्वावच्छिन्नं प्रत्येव साध्यसिद्धिः प्रतिबन्धिका, अत्र पक्षविशेष्यकसाध्यविधेयकानुमितित्वं प्रतिबध्यतावच्छेदकम् पक्षविशेष्यकसाध्यप्रकारकनिश्चयत्वं प्रतिबन्धकतावच्छेदकम् । अन्यथा निरुक्तबुद्धित्वस्य प्रतिबध्यतावच्छेदकत्वे सिद्धिसत्त्वे प्रत्यक्षशाब्दादिज्ञानानुत्पत्तिप्रसङ्ग, तत्रापि सिषाधयिषाविरहविशिष्टसिद्धेरेव अनुमितिप्रतिबन्धकत्व वाच्यम् । एव तदभावव्याप्यवत्तानिश्चयप्रतिबध्यतावच्छेदकं तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयप्रतिबध्यतावच्छेदकमपि तादृशबुद्धित्वमेव । सामान्यतोऽनुमितित्वावच्छिन्न प्रति सिद्धेः प्रतिबन्धकत्वस्वीकारे भिन्नविषयकसिद्धितो भिन्नविषयकानुमितेः प्रतिबन्धप्रसङ्गः, एव सामान्यतः तद्वत्ताबुद्धि प्रति तदभाववत्तानिश्चयादीना प्रतिबन्धकत्वस्वीकारे तच्छब्दस्य बुद्धिविषयसर्ववाचित्वेन घटाभाववत्तानिश्चयादितः पटादिमत्ताबुद्धिप्रतिबन्धप्रसङ्गः, अतस्सर्वत्र विशेषरूपेणैव प्रतिबध्यप्रतिबन्धकभावो वाच्यः । दाहत्वावच्छिन्नं प्रति सूर्यकान्तमण्यभावविशिष्टचन्द्रकान्तमणेः प्रतिबन्धकत्व वक्तव्यम् । समानविषयकानुमितित्वावच्छिन्नं प्रति सिषाधयिषाविरहाविशिष्टसमानविषयकप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वमङ्गीकार्यम् । भिन्नविषयकप्रत्यक्षं प्रति प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्र्याः प्रतिबन्धकत्वमङ्गीकर्तव्यम् । समानविषयकशाब्दबुद्धि प्रति शाब्दबोधेच्छाविरहविशिष्टसमानविषयकानुमितिसामग्र्या. प्रतिबन्धकत्वमङ्गीकार्यम् । अभावमात्रस्य स्वप्रतियोगितावच्छेदकधर्मसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतया साक विरोधो वक्तव्यः । घटोऽवृत्तिरितिबुद्धि प्रति घटवानिति घटत्वावच्छिन्नप्रकारताशालिनिश्चयस्य प्रतिबन्धकत्वमङ्गीकार्यम् ॥

ह्रदोवन्हिमानितिह्रदविशेष्यकबुद्धि प्रति ह्रदोवन्ह्यभाववानिति

ह्रदविशेष्यकनिश्चयएव प्रतिबन्धकः, ह्रदेवन्हिरिति ह्रदविशेषणकबुद्धिं प्रति ह्रदेवन्ह्यभाव इति ह्रदविशेषणकनिश्चयएव प्रतिबन्धकः इति केपाञ्चिदाशयः। ह्रदोवन्हिमानितिबुद्धिं प्रति ह्रदेवन्ह्यभावः ह्रदोवन्ह्यभाववानितिनिश्चयद्वयमपि प्रतिबन्धकमिति सिद्धान्त, तादृशनिश्चयद्वयस्य पृथक्पृथक्प्रतिबन्धकत्वाङ्गीकारे गौरवप्रसङ्गेन तन्निश्चयद्वयस्यैकरूपेण प्रतिबन्धत्व वाच्यम्। स च प्रकार इत्थम्, वन्हित्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नं प्रति स्वरूपत्वावच्छिन्नसंसर्गताभिन्नसंसर्गत्वानिरूपिका या वन्ह्यभावत्वावच्छिन्ना विषयता तन्निरूपिता या आधेयतात्वावच्छिन्नसंसर्गताभिन्नसंसर्गत्वानिरूपिका ह्रदत्वावच्छिन्ना विषयिता तच्छालिनिर्णयः प्रतिबन्धक इति, अत्र विषयतात्वावच्छिन्नस्य निवेशनेन तादृशसंसर्गत्वानिरूपकत्वस्य तत्तद्विषयताविशेषणत्वस्वीकारेण (तत्तत्संसर्गतानिरूपकत्वस्य तत्तद्विषयताविशेषणत्वानङ्गीकारेण) तादृशनिश्चयद्वयीयविषयतानां सग्रहस्सम्भवतीति नानुपपत्तिः। अथवा, तादृशबुद्धित्वावच्छिन्नं प्रति वन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितत्वविशिष्टस्वरूपत्वावच्छिन्नत्वाभाव ह्रदत्वावच्छिन्नप्रकारतानिरूपितत्वविशिष्टाधेयतात्वावच्छिन्नत्वाभावैतदुभयाभाववती या वन्ह्यभावत्वावच्छिन्नविषयतानिरूपिता सांसर्गिकविषयता (संसर्गता) तन्निरूपिता या ह्रदत्वावच्छिन्ना विषयता तच्छालिनिर्णयः प्रतिबन्धक इति। ह्रदोवन्ह्याभाववानितिनिश्चयीयप्रकारतायां प्रथमविशिष्टाभावस्याभावेन ह्रदेवन्ह्यभावइतिनिश्चयीयप्रकारतायां द्वितीयविशिष्टाभावस्याभावेन निरुक्तोभयाभावस्य पूर्वोक्तनिश्चयद्वयीयसंसर्गतायामक्षतत्वेन न कापि क्षतिः॥ यदि पूर्वोक्तवन्ह्यभावविषयकनिश्चयद्वयस्य ह्रदोवन्हिमा-

नितिबुद्धिं प्रति ह्रदेवन्हिरितिबुद्धित्यपि प्रतिबन्धकत्वानुभवः तदा प्रतिबध्यतावच्छेदकमपि तद्बुद्धिद्वयसाधारण्येन कल्पनीयम्। तत्प्रकारश्च, संयोगत्वावच्छिन्नसंसर्गताभिन्नसंसर्गत्वानिरूपकवन्हित्वावच्छिन्नविषयतानिरूपिता या आधेयतात्वावच्छिन्नसंसर्गताभिन्नसंसर्गत्वानिरूपिका ह्रदत्वावच्छिन्ना विषयता तच्छालिबुद्धित्वमेव प्रतिबध्यतावच्छेदकमितिवक्तव्यम्। अथवा, वन्हित्वावच्छिन्नप्रकारतानिरूपितत्वविशिष्टसंयोगत्वावच्छिन्नत्वाभाव ह्रदत्वावच्छिन्नप्रकारतानिरूपितत्वविशिष्टसंयोगसम्बन्धावच्छिन्नाधेयतात्वावच्छिन्नत्वाभावेतदुभयाभाववती या वन्हित्वावच्छिन्नविषयतानिरूपिता सांसर्गिकविषयता तन्निरूपिता या ह्रदत्वावच्छिन्ना विषयता तच्छालिबुद्धित्वं प्रतिबध्यतावच्छेदकमुभयसाधारणं भवतीति वेदितव्यम्। ह्रदोवन्हिमानितिबुद्धित्वावच्छिन्न प्रति वन्ह्यनधिकरण. पर्वतः• पर्वतावृत्तिर्वन्हिः इत्यादिनिश्चयाना तदभावादि प्रकारकनिश्चयमुद्रया प्रतिबन्धकत्वाभावेपि अनुमितित्वाद्यवच्छिन्नं प्रतिसिद्धिगौरवनिश्चयादीनामिव पृथगेव साक्षादेव प्रतिबन्धकत्वमङ्गीकार्यम्, नातो वन्ह्यनधिकरणपर्वतादिष्वपि हेत्वाभासलक्षणानाक्रान्ततेति ध्येयम्॥ अन्यः कोपि विषयः तर्कसंग्रहसर्वस्वे पारिभाषिकपदार्थसंग्रहे प्रतिबध्यप्रतिबन्धकभावनिरूपणप्रस्तावे निरूपितः तत्र द्रष्टव्यः॥

## ❁ कार्यकारणभावविचारः ❁

साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयतानिरूपितपक्षतावच्छेदकावच्छिन्नोद्देश्यताशाल्यनुमितित्वावच्छिन्न प्रति (साध्यतावच्छेदकसम्बन्धेन साध्यवान् पक्ष इत्यनुमिति प्रति)

निरूपितत्वसंम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिता या स्वरूपसम्बन्धावच्छिन्ना व्याप्तित्वावच्छिन्ना प्रकारता तन्निरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्ना हेतुतावच्छेदकावच्छिन्ना प्रकारता तन्निरूपिता या पक्षतावच्छेदकावच्छिन्ना विशेष्यता तच्छालिनिश्चयः (साध्यव्याप्यहेतुमान्पक्षइति परामर्शात्मकनिश्चयः) कारणम् (तादृशानुमितित्वं कार्यतावच्छेदकं, एतादृशनिश्चयत्वं कारणतावच्छेदक बोध्यम्) अन्तराभाससमानपदार्थनिष्ठविशेष्यताप्रकारतयोरभेदाङ्गीकर्तृमताभिप्रायेणायं पूर्वोक्तः कार्यकारणभावः। तादृशविशेष्यताप्रकारतयोर्भेदाङ्गीकर्तृमते तु वक्ष्यमाणः कार्यकारणभावो ग्राह्यः। तथाहि. निरुक्तानुमितित्वावच्छिन्नं प्रति निरूपितत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिता या विशेष्यता तदवच्छिन्ना स्वरूपसम्बबन्धावच्छिन्ना या व्याप्तित्वावच्छिन्ना प्रकारता तन्निरूपितविशेष्यत्वावच्छिन्ना या हेतुतावच्छेदकसम्बन्धावच्छिन्ना हेतुतावच्छेदकावच्छिन्नाप्रकारता तन्निरूपिता या पक्षतावच्छेदकावच्छिन्ना विशेष्यता तच्छालिनिश्चयः कारणमिति। तादृशविशेष्यताप्रकारतयोर्भेदाङ्गीकर्तृमते तयोरवच्छेद्यावच्छेदकभावोङ्गीक्रियते॥

समानाधिकरणविशेष्यताप्रकारतयोरभेदाङ्गीकर्तृमते तादृशानुमितित्वावच्छिन्नं प्रति साध्याभाववदवृत्तित्वरूपपूर्वपक्षीयव्याप्तिविषयकपरामर्शस्य कार्यकारणभाव इत्थम्। तथाहि, प्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नाधिकरणत्वावच्छिन्नप्रकारतानिरूपितप्र-

तियोगितानिरूपकत्वसम्बन्धावच्छिन्नवृत्तितात्वावच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयः कारणमिति। तादृशविशेष्यताप्रकारतयोरवच्छेद्यावच्छेदकभावाङ्गीकर्तृमते कार्यकारणभावप्रकार इत्थम्। तथाहि, तादृशानुमितित्वावच्छिन्नं प्रति प्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना साध्यतावच्छेदकावच्छिन्ना या प्रकारता तन्निरूपितविशेष्यत्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना अभावत्वाव च्छिन्ना या प्रकारता तन्निरूपितविशेष्यत्वावच्छिन्ना निरूपितत्वसम्बन्धावच्छिन्ना अधिकरणत्वावच्छिन्ना या प्रकारता तन्निरूपित विशेष्यत्वावच्छिन्ना प्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना वृत्तितात्वावच्छिन्ना या प्रकारता तन्निरूपितविशेष्यत्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना अभावत्वावच्छिन्ना या प्रकारता तन्निरूपितविशेष्यत्वावच्छिन्ना हेतुतावच्छेदकसम्बन्धावच्छिन्ना हेतुतावच्छेदकावच्छिन्ना या प्रकारता तन्निरूपिता या पक्षतावच्छेदकावच्छिन्ना विशेष्यता तच्छालिनिश्चयः कारणमिति। अयञ्च निर्णयः साध्याभावाधिकरणनिरूपितवृत्तित्वाभावविशिष्टहेतुमान्पक्ष इति। एवमेव सिद्धान्तव्याप्तिविषयकपरामर्शस्य व्यतिरेकव्याप्तिविषयकपरामर्शस्यापि मतभेदेन कार्यकारणभावो ग्राह्यः। तत्प्रकारश्च ग्रन्थगौरवभयान्न लिख्यते॥

समानाधिकरणविशेष्यताप्रकारतयोरभेदाङ्गीकर्तृमते वक्ष्यमाणानुपपत्तिस्सम्भवतीति तयोर्भेदवादिमतान्तरे अवच्छेद्यावच्छेदकभावः स्वीकृतः। अनुपपत्तिप्रकारास्त्वित्थम्, रक्तदण्डविशिष्टपुरुषवद्भूतल-

मिति निश्चयदशायां यथा पुरुषो दण्डी नवेति दण्डदण्डाभावप्रकारस्संशयो नोदेति तथा दण्ड' पुरुषवान्नवेति पुरुषपुरुषाभावप्रकारकस्संशयोपि न स्यात्, तदा दण्डविशेष्यकपुरुषाभावप्रकारकबुद्ध्यात्मकसंशयप्रतिबन्धकीभूतस्य पुरुषनिष्ठप्रकारता (पुरुषनिष्ठविशेष्यत्वाभिन्नप्रकारता) निरूपितदण्डनिष्ठविशेष्यता (दण्डनिष्ठप्रकारत्वाभिन्नविशेष्यता) शालिनिश्चयरूपस्य निरुक्तनिश्चयस्य सद्भावात् इति। तयोरवच्छेद्यावच्छेदकभावस्वीकारे तु पुरुषनिष्ठप्रकारतानिरूपितदण्डनिष्ठविशेष्यताशालिनिश्चयरूपत्वस्य दण्डः पुरुषवान्नवेति संशयप्रतिबन्धप्रयोजकस्य पूर्वनिर्दिष्टनिश्च येऽभावान्नानुपपत्तिः। यदिच तदभाववत्ताबुद्धि प्रति तद्वत्तानिश्चयस्य तन्निष्ठप्रकारतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावच्छेदकविशेष्यतात्वावच्छिन्नतन्निष्ठविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्व स्वीक्रियते समनाधिकरणविशेष्यताप्रकारतयोरैक्येपि प्रकारतात्वेन विशेष्यतात्वेनैवतयोर्निरूप्यनिरूपकभावस्याङ्गीकृततया रक्तदण्डविशिष्टपुरुषद्भूतलमितिनिश्चये तादृशप्रकारताविशेष्यतयोस्तत्संशयप्रतिबन्धकज्ञाननिरूपितयोरभावेन नानुपपत्तिरित्युच्येत तदा तयोरभेदाङ्गीकर्तृमतमपि समञ्जसमेवेत्यवधेयम् ॥

पर्वतोवन्हिमानित्यनुमिति - प्रति वन्ह्यभाववदवृत्तिधूमवान् पर्वत इति परामर्शस्य कारणत्वस्वीकारे सिद्धान्तव्याप्तिविषयकपरामर्शोत्तर व्यतिरेकव्याप्तिविषयकपरामर्शोत्तरमपि तादृशानुमितरुत्पद्यमानतया व्यतिरेकव्यभिचारप्रसङ्गेन तादृशानुमिति प्रति पृथक्पृथक् तत्तद्व्याप्तिविषयकपरामर्शाना कारणत्वमङ्गीकार्यम्, तथाङ्गीकारेच सिद्धान्तव्याप्तिविषयकपरामर्शोत्तरं पूर्वपक्षीयव्याप्त्या-

दिविषयकपरामर्शोत्तरजायमानानुमित्यापत्तिवारणाय तत्तद्व्याप्ति-विषयकपरामर्शाव्यवहितोत्तरजायमानानुमित्यापत्तिवारणाय तत्त-द्व्याप्तिविषयकपरामर्शाव्यवहितोत्तरजायमानानुमितित्वावच्छिन्न प्रति तत्तद्व्याप्तिविषयकपरामर्शस्य कारणत्व वक्तव्यम्, एवमपि पर्व-तोवन्हिमानित्यनुमिति प्रति वन्हिव्याप्यधूमवान्पर्वत इति धूमविषय-कपरामर्शस्य कारणत्वे वन्हिव्याप्यभस्मवान् वन्हिव्याप्यालोकवान् इत्यादितपरामर्शानां पृथक्कारणत्वस्याङ्गीकर्तव्यतया कार्यकारण-भावानन्त्यप्रयुक्तगौरवप्रसङ्गेन वन्हित्वा वच्छिन्नप्रकारतानिरू-पिता या व्याप्तित्वावच्छिन्ना प्रकारता तन्निरूपिता या प्रकारता तन्निरूपिता या पर्वतत्वावच्छिन्ना विशेष्यता तच्छालिनिर्णयः कार-मित्येतत्सर्वनिर्णयसाधारण तादृशनिश्चयत्वरूपेण कार्यकारणभावो-ऽङ्गीकार्यः। एव कार्यकारणभावाङ्गीकारेपि धूमविषयकपरा मर्शोत्तर आलोकादिविषयकपरामर्शोत्तरजायमानानुमित्यापत्ति-वारणाय पूर्ववत् धूमादिपरामर्शाव्यवहितोत्तरजायमानानुमिति प्रति धूमादिविषयकपरामर्शस्य कारणत्वमङ्गीकार्यम्। एवमपि वन्हि-व्याप्यधूमविषयकैतत्परामर्शाव्यवहितोत्तर वन्हिव्याप्यधूमविषयक-तत्परामर्शाव्यवहितोत्तरजायमानानुमित्यापत्तिवारणाय तत्तत्पराम-र्शाव्यवहितोत्तरत्वं तत्तत्परामर्शकार्यतावच्छेदककोटौ निवेशनीयम्। एवमन्यत्रापि अन्वयव्यतिरेकव्यभिचारयोरन्यतरस्य प्रसक्तिस्थलेषु पूर्ववत्कार्यकारणभावो ग्राह्यः। प्रतिबन्धकसम्भावदशायां कार्योत्प-त्त्यपत्तिवारणाय कार्यमात्रं प्रतिबन्धकाभावस्य कारणसामग्रीसत्त्व-दशाया पुनस्तत्कार्योत्पत्त्यापत्तिवारणाय कार्यमात्रकार्यप्राग-भावस्य च कारणत्वं वेदितव्यम्। प्राचीनमते अनुमिति प्रति साध्यसंशयरूपपक्षतायाः कारणत्वमङ्गीक्रियते, नवीनमते

सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतायाः अनुमितिकारणत्वमङ्गीक्रियते। भावनाख्यसंस्कारं प्रति अनुभवस्यानुभवत्वेनैव कारणत्वम्, नतु ज्ञानत्वादिव्यापकधर्मपुरस्कारेण तस्य तत्कारणत्वम्। स्मृतिं प्रति संस्कारः कारणं संस्कारं प्रत्यनुभवः कारणमित्येके, स्मृतिप्रत्यनुभवस्य करणत्वेन अनुभवसंस्कारयोरुभयोरपि तां प्रति करणत्वमित्यपरे। विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य विशेषणज्ञानत्वेनैव कारणत्वम्, नत्वनुभवत्वादिविशेषधर्मपुरस्कारेण, अनुभवत्वादिना तत्कारणत्वेऽङ्गीक्रियमाणे विशेषणस्मृत्यादीनां विशिष्टबुद्धिकारणत्वाभावप्रसङ्ग, स्मृत्यादीनां पृथक्पृथक् विशिष्टबुद्धिं प्रति कारणतास्वीकारेऽनन्तकार्यकारणभावस्वीकारप्रयुक्तगौरवप्रसङ्गः, अतो ज्ञानत्वेनैव विशेषणज्ञानस्य तत्कारणत्वं वाच्यम् उदाहरणम्, वन्हिव्याप्यो धूम इति व्याप्तिविशिष्ट (व्याप्तिप्रकारक) बुद्धिं प्रति वन्हिव्याप्तिरूपविशेषणज्ञानं कारणम्। एवमन्यत्राप्यूह्यम्॥

विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकज्ञानं कारणम्, विशेषणेयद्विशेषणं तद्विशेषणतावच्छेदकम्। उदाहरणम्, वन्हिव्याप्यधूमावान्पर्वत इति व्याप्तिविशिष्टधूमवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकव्याप्तिप्रकारकज्ञानं कारणम्, व्याप्तिप्रकारकंज्ञानं वन्हिव्याप्यो धूम इति ज्ञानम् अस्यापि ज्ञानत्वेनैव कारणत्वम् वक्तव्यम्, अन्यथा पूर्वोक्तरीत्याऽतिप्रसङ्गः। पर्वतोवन्हिमानितिपक्षविशेष्यकानुमितिं प्रति वन्हिव्याप्यधूमवान् पर्वत इति पक्षविशेष्यकपरामर्शएव कारणम्, पर्वते वन्हिरित्याधेयतासम्बन्धेनपक्षविशेषणकानुमितिं प्रति वन्हि-

व्याप्यधूमः पर्वते इति पक्षविशेषकपरामर्शएव कारणमिति-कतिपयपण्डितानामाशयः । पर्वतविशेष्यकात् पर्वतविशेषण काच्च परामर्शात् पर्वतोवन्हिमानिति पर्वतविशेष्यकैवानुमिति-र्जायत इति कैपाञ्चिदाशयः। एतन्मते परामर्शद्वयसाधारण्येन कार्य-कारणभावस्त्वित्थम्, संयोगसम्बन्धावच्छिन्नवन्हित्वावच्छिन्नविधेय तानिरूपितपर्वतत्वावच्छिन्नोद्देश्यताशाल्यनुमितित्वावच्छिन्नं प्रति सं-योगत्वावच्छिन्नसंसर्गताभिन्नसंसर्गत्वानिरूपिका या वन्हिव्याप्त्य-वच्छिन्ना विषयता तन्निरूपिता या आधेयतात्वावच्छिन्नसंसर्गत्वा-भिन्नसंसर्गत्वानिरूपिका या पर्वतत्वावच्छिन्ना विषयता तच्छालि-निश्चयः कारणमिति ॥ अथवा, तादृशानुमितित्वावच्छिन्नं प्रति साध्यव्याप्त्यवच्छिन्नप्रकारतानिरूपितत्वविशिष्टसंयोगत्वावच्छिन्न-त्वाभाव पर्वतत्वावच्छिन्नप्रकारतानिरूपितत्वविशिष्टाधेयतात्वाव-च्छिन्नत्वाभावैतदुभयाभाववती यावन्हिव्याप्त्यवच्छिन्नविषयतानि-रूपिता सांसर्गिकविषयता (संसर्गता) तन्निरूपिता या पर्वत-त्वावच्छिन्ना विषयता तच्छालिनिर्णयः कारणमिति संयोगेनवन्हि-व्याप्यवान्पर्वतः वन्हिव्याप्यः पर्वते इति निश्चयद्वयसाधारणः कार्यकारणभावो ग्राह्यः । पर्वतविशेष्यकनिश्चयीयसंयोगत्वाव-च्छिन्नसंसर्गतायां प्रथमाभावस्याभावेन पक्षविशेषणकनिश्चयीयाधे-यतात्वावच्छिन्नसंसर्गतायां द्वितीयाभावस्याभावेन च तादृशोभया-भावस्य तादृशनिश्चयद्वयीयसंसर्गतायामव्याहतत्वेनन कापि क्षतिः । अनुमितित्वावच्छिन्नं प्रति अनाहार्याप्रमाण्यज्ञानानास्कन्दितनिश्चया-त्मकपरामर्शस्य कारणत्वम्। शाब्दबोधमात्रे न तात्पर्यज्ञानं कारणं किन्तु नानार्थकस्थलीयबोधे तत्कारणमित्येके वदन्ति । लाघवेन शाब्दबोधमात्रे तात्पर्यज्ञानं कारणमिति सिद्धान्तः ॥

## ❀ अनुगमविचारः ❀

अनुगमोनाम अननुगतस्य (यत्तत्पदयादृशतादृशपदस्वपदादि-घटितत्वेन दुर्विज्ञेयस्य) विषयजातस्य आनुगत्यसम्पादनप्रकारः (सौलभ्येन तावदर्थविषयकज्ञानजननानुकूलो यत्तदादिपदाघटितो निर्दुष्टो वाक्यसमुदायः) सच अनुगमो द्विविधः प्रकारमुद्रयाऽनुगमः, संसर्गमुद्रयाऽनुगमश्चेति, आद्ये सम्बन्धवैरळ्यम्, द्वितीये सम्बन्धबाहुळ्यमितिद्वयोर्भेदोऽवगन्तव्यः, दिङ्मात्रमुदाह्रियते, तथाहि, अनुगमप्रकारस्तु, एतद्ज्ञाने तद्ज्ञानसमानाकारकत्वञ्च तद्वृत्तिमुख्यविशेष्यतावृत्तित्वम्. मुख्यविशेष्यतावृत्तित्वञ्च स्ववृत्ति-मुख्यविशेष्यतावत्त्वसम्बन्धेन, मुख्यविशेष्यतावत्त्वञ्च स्वसमनियत-त्वस्वनिरूपितविषयतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकधर्मवृत्ति-त्वोभयसम्बन्धेन, धर्मवृत्तित्वञ्च स्वनिरूपितविषयतात्वावच्छिन्नपर्या-प्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तथाच घटवद्भूतलमितिज्ञानस्य समानाकारकं ज्ञानं घटवद्भूतलमितिज्ञानं घटवद्भूतलंपटं कुड्यञ्च इत्याद्यनेकावगाहिसमूहालम्बनात्मकज्ञानञ्च भवति, एवमुत्तरज्ञा-नस्य पूर्वज्ञानञ्च समानाकारकं भवत्येव नातो घटत्वेन घटावगाहि-ज्ञानं घटत्वेन पटावगाहिज्ञानञ्च समानाकारकं भवति अतएव घटत्वेनैकघटावगाहिज्ञानं घटत्वेननानाघटावगाहिज्ञानञ्च घटत्वेन घटपटावगाहिज्ञानसमानाकारकं भवति अतएव घटवद्भूतलमिति-ज्ञानं घटवद्भूतलवान्देशइतिज्ञानसमानाकारकञ्च न भवति, घट-वद्भूतलवान्देशइतिज्ञानं घटवद्भूतलमितिज्ञानसमानाकारकञ्च न भवति। घटत्वेन घटज्ञानं पटत्वेन घटज्ञानसमानाकारकञ्च न भवति। अतएव घटोरूपवानितिज्ञानं घटोरसवानितिज्ञानसमा-नाकारकञ्च न भवतीति सिद्धम्॥ अयमनुगमेविवेचन्यामुक्तिः॥

प्रकारविधयाऽनुगमप्रकारस्तु. यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितिनिरूपितप्रतिबन्धकता तद्रूपावच्छिन्नत्वं हेत्वाभासत्वमितिलक्षणस्थाने प्रकृतानुमितिनिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं हेत्वाभासत्वमित्यनुगमप्रकारः, रूपे प्रतिबन्धकतावैशिष्ट्यञ्च स्ववृत्तिर्यः किञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावः तादृशाभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वसम्बन्धेनेति ॥ अस्मिन्नेव लक्षणे संसर्गमुद्रयाऽनुगमप्रकारस्तु, प्रकृतानुमितिनिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं हेत्वाभासत्वम्, रूपे प्रतिबन्धकतावैशिष्टयञ्च आधेयत्वसम्बन्धेन, आधेयताच स्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, स्वाधिकरणत्वञ्च स्वविशिष्टनिश्चयत्वसम्बन्धेन, निश्चये स्ववैशिष्टयञ्च स्वावच्छिन्नविषयतानिरूपकत्वसम्बन्धेनेति ॥ एतादृशा बहवोऽनुगमाः ससमन्वयाः दीपिकासर्वस्वे टिप्पण्यां निरूपितास्तत्र द्रष्टव्याः ॥ गोलोकयतिरनुगमप्रचुरा ॥

## ❀ दशविधलकारस्थलेशाब्दबोधविचारः ❀

चैत्रोगच्छतीत्यत्र लट्समभिव्याहारस्थले वर्तमानकालिकगमनानुकूलकृतिमांश्चैत्र इति बोधः, अत्र वर्तमानकालिकत्वं कृतिश्चाख्यातार्थः, धात्वर्थे वर्तमानकालिकत्वस्य विशेषणतया कृतेर्विशे-

ष्यतयाचान्वयः, वर्तमानकालिकत्वञ्च इहशब्दप्रयोगाधिकरणकालवृत्तित्वम् एवलिडादिस्थले भूतकालिकत्वं कृतिः लृडादिस्थले भविष्यत्कालिकत्वं कृतिश्चाख्यातार्थो ग्राह्यः, समन्वयः पूर्ववदेव, भूतकालिकत्वञ्च वर्तमानध्वसप्रतियोगित्वम्, तच्च शब्दप्रयोगाधिकरणकालवृतिध्वसप्रतियोगित्वरूपम्, भविष्यत्कालिकत्वञ्च वर्तमानप्रागभावप्रतियोगित्वम्, तच्च शब्दप्रयोगाधिकरणकालवृत्तिप्रागभावप्रतियोगित्वरूपम् ॥ चैत्र. अगच्छत् अगमत् जगामेत्यादिषु लङ्लुङ्लिट्समभिव्याहारस्थलेषु भूतकालिकगमनानुकूलकृतिमांश्चैत्र इति बोधः । चैत्रो गन्ता गमिष्यति अगमिष्यत् इत्यादिषु लुट्लृट्लृङ्समभिव्याहारस्थलेषु भविष्यत्कालिकगमनानुकूलकृतिमाश्चैत्र इति बोधः । गच्छेत् गम्यात् गच्छत्वित्यादिषु लिङ्लोट्समभिव्याहारस्थलेषु बलवदनिष्टाननुबन्धित्वविशिष्टसाधनताविशिष्टकृतिसाध्यत्वविशिष्टगमनानुकूलकृतिमानिति बोधः । एवमन्यत्रापि ग्राह्यम् श्लो, लड्वर्तमाने लेड्वेदे भूते लुङ्लङ्लिटस्तथा, विध्याशिषोस्तु लिङ्लोटौ लृड्लृट्लुट्च भविष्यतीति सामान्यवचनम्, लुङ्लङ्लिडादीनामर्थभेदो वर्तते वक्ष्यमाणरीत्या । क्रमेण लडादी नामर्थो निरूप्यंत, तथाहि, वर्तमाने धात्वर्थे विवक्षिते सति भवतीति लट् प्रयोक्तव्यः । भूते अनद्यतन परोक्षे च धात्वर्थे विवक्षिते सति लिट् स्यात् बभूवेति । अतीताया रात्रे पश्चार्थेन सह आगमिन्या रात्रेः पूर्वार्धेन युक्तो दिवसोऽद्यतनः, तादृशदिवसवृत्तिधात्वर्थोऽप्यद्यतनः, तद्भिन्नोऽनद्यतन., प्रत्यक्षाविषयोर्थः परोक्षपदवाच्यः, भूतत्वं परिष्कृतमेव । अनद्यतने भूते धात्वर्थे विवक्षिते लङ् स्यात्, यथा अभवदिति । अद्यतनभूते (भूतत्वमात्र विशिष्टे) धात्वर्थे

विवक्षिते लुङ् स्यात्, यथा अभूदिति। अनद्यतने भविष्यति धात्वर्थे विवक्षिते लुट् स्यात्, यथा भवतेति। क्रियार्थायां क्रियायां सत्यामसत्याञ्च अनद्यतने भविष्यत्यर्थे विवक्षिते लृट स्यात्, यथा भविष्यतीति। हेतुहेतुमद्भावे सति क्रियाया अनिष्पत्तौ गम्यमानायां भविष्यत्यर्थे विवक्षिते लृङ् स्यात्, यथा अभविष्यदिति सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यदिति। विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनाशीष्षु लिङ्लोटौ प्रयोक्तव्यौ, यथा भूयात् भवत्वित्यादि। विध्यादिषु लिङ् यथा भवेदिति। आशिषि लिङ्, यथा भूयादिति। एवमन्यत्रापि ग्राह्यम्॥

गतः गतवानित्यत्र भूतकालिकगमनानुकूलकृतिमानिति गच्छनित्यत्र वर्तमानकालिकगमनानुकूलकृतिमानिति गमिष्यन्नित्यत्र भविष्यत्कालिकगमनानुकूलकृतिमानिति च बोधः। गन्तव्यो ग्राम इत्यत्र इष्टसाधनीभूतगमनकर्मीभूतो ग्राम इति बोधः, लिङ्लोट् तव्यप्रत्ययानामिष्टसाधनत्वार्थकत्वात्। गन्धग्राहकं घ्राणमित्यत्र गन्धविषयकप्रत्यक्षजनकं घ्राणमिति घ्राणग्राह्यो गन्ध इत्यत्र घ्राणेन्द्रियजन्यप्रत्यक्षविषयो गन्ध इति बोधः। गत्वा पश्यतीत्यादौ गमनोत्तरकालिकदर्शनवानिति बोध.। एवमागत्येत्यादावपि। गन्तुं प्रयतत इत्यादौ गमनफलकयत्नवानिति बोधः। प्रयोजकव्यापारे प्रेरणादौ वाच्ये धातोः परतः णिच् स्यात्, चैत्रो मैत्रं ग्रामं गमयतीति णिजन्तसमभिव्याहारदशायां ग्रामनिष्ठसंयोगानुकूलमैत्रनिष्ठव्यापारानुकूलकृतिमांश्चैत्र इति बोध., उभयत्र द्वितीयार्थ आधेयत्वम्। इच्छायां सन्प्रत्ययः, चैत्रो ग्रामं जिगमिषतीत्यत्र (गन्तुमिच्छतीत्यर्थे जिगमिषतीति रूपं) ग्रामनिष्ठसंयोगानुकूलव्यापार विषयकेच्छाश्रयश्चैत्र इति बोधः। पौनः पुन्येऽतिशये च द्योत्ये

भोभूयत इति यङन्तरूपं स्यात् । पुनः पुनरतिशयेन वा भवतीत्यर्थे भोभवतीति यङ्लुगन्तरूप स्यात् । चैत्रो ग्रामं गच्छतीत्यत्र कर्त्राख्यातस्थले ग्रामनिष्ठसंयोगानुकूलव्यापारानुकूलकृतिमानिति बोधो जायते, चैत्रेण गम्यते ग्राम इत्यत्र कर्माख्यातस्थले तु तद्वैपरीत्येन चैत्रनिष्ठकृतिप्रयोज्यव्यापारप्रयोज्यसंयोगाश्रयो ग्राम इति बोधः । एवं कर्माख्यातस्थलीयणिजन्तसन्नन्तादिस्थलेष्वपि बोधप्रकारो ग्राह्यः । रथो गच्छतीत्यत्र गमनाश्रयो रथ इति जानाति इच्छति यतते इत्यादौ ज्ञानाद्याश्रय इति च बोधः । घटो नश्यति ध्वस्त इत्यत्र नाशप्रतियोगी घट इति बोधः । घटो भूतलेन संयुक्तः संयुक्त इत्यादौ भूतलानुयोगिकसंयोगप्रतियोगी घट इति बोधः । घटः पटो न भवतीत्यादौ पटस्य स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेन नञर्थभूतान्योन्याभावेन्वयः, तादृशाभावस्य आश्रयतासम्बन्धेन घटेन्वयः, तथाच पटनिष्ठप्रतियोगिताकान्योन्याभाववान् घट इति बोधः । नीलो घट इत्यादौ समानविभक्तिकस्थले "निपातातिरिक्तनामार्थयोर्भेदसम्बन्धेनान्वयाभाव इति, नियमानुसारेण नीलाभिन्नो घट इति बोधः । निपातातिरिक्तेत्यस्यानुपादाने घटः पटो न भवतीत्यादौ पटस्य स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेन न नञर्थीभूताभावेऽन्वयानुपपत्तिप्रसङ्ग , तदुपादाने नञादेर्निपातत्वेन नानुपपत्तिः । भूतले न घट इत्यत्र सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहारस्थले नञः नान्योन्याभावार्थकत्वम्, किन्तु अत्यन्ताभावार्थकत्वमेव । घटो नास्तीत्यत्र तु घटस्य नञर्थभूतात्यन्ताभावे स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेनान्वयाङ्गीकारेण भूतलवृत्तिर्घटाभाव इति बोधमङ्गीकुर्वन्ति केचन । नैयायिकमते प्रथमान्तार्थमुख्यविशेष्यकबोधाङ्गीकारेण भूतलवृत्त्यभावप्रतियोगी घट इति

बोधमङ्गीकुर्वन्त्यपरे । पुत्रेण सहागतः पितेत्यत्र पुत्रपदं पुत्रागमनलाक्षणिकम्, सहशब्दार्थस्समानकालिकत्वम्, तृतीयार्थोऽधिकरणत्वम्, तस्य कालेऽन्वयः, तथाच पुत्रागमनसमानकालीन यदागमन तद्वान् पितेति बोध । अथवा, तृतीयार्थो निरूपितत्वम्, सहशब्दार्थस्साहित्यं, तस्यागमने सामानाधिकरण्यसम्बन्धेनान्वयः, तथाच सामानाधिकरण्यसम्बन्धेन पुत्रनिरूपितसाहित्यविशिष्ट यदागमनं तद्वान् पितेति बोधः । पुत्रेण विनाऽगतः पितेत्यत्र पुत्रागमनाभावकालिकागमनकर्ता पितेति बोध । न मुक्ती राममन्तरेत्यत्र रामपदं रामभक्तिपरम् रामभक्त्यभावस्य मुक्त्यभावस्य च प्रयोज्यप्रयोजकभावस्सम्बन्धः, तथाच रामभक्त्यभावप्रयोज्यो मुक्त्यभाव इति बोधः (यत्रच प्रयोज्यप्रयोजकभावरूपस्य अन्यस्य वा सम्बन्धस्य प्रकारविधया भान नाङ्गीक्रियते तत्र तत्तत्सम्बन्धैः तत्तत्प्रकारविशिष्टविशेष्यभान अङ्गीकर्तव्यमित्येतत् न विस्मरणीयम) इत्यादिशब्दार्थविचारः तर्कसंग्रहसर्वस्वे पारिभाषिकपदार्थसंग्रह कृतस्तत्रद्रष्टव्यः ॥.

कालाध्वनोरत्यन्तसंयोगे द्वितीया, अत्यन्तसंयोगो नाम व्यापकत्वम्, मासमधीते चैत्र इत्यत्र मासत्वव्यापकाध्ययनवांश्चैत्र इति बोधः । क्रोशं कुटिला नदीत्यत्र क्रोशत्वव्यापककौटिल्यवती नदीति बोधः । अत्र घट इत्यत्र एतद्देशनिरूपितवृत्तितावान् घट इति अद्य घट इत्यत्र एतत्कालनिरूपितवृत्तितवान् घट इति तत्र द्रव्याणि नवेत्यत्र तद्घटकीभूतानि द्रव्याणीति बोधः । यावज्जीवं सन्ध्यामुपासीतेत्यत्र स्वजीवनकालव्यापकं सन्ध्योपासनमिति बोधः । अग्रे वृक्षः कपि संयोगी मूले नेत्यत्र अग्रावच्छि कपि-

संयोगवान्वृक्षःमूलावच्छिन्न कपिसंयोगाभाव वान्वृक्ष इति बोधः। इहपर्वते नितम्बे हुताशनो न शिखरे इत्यत्रापि नितंबावच्छिन्नः पर्वतवृत्तिहुताशन शिखरावच्छिन्नः पर्वतवृत्तिहुताशनाभाव इति बोधः। एवं इह चत्वरे गौर्नास्तीत्यत्र चत्वरवृत्तिः गवाभाव एतत्कालावच्छिन्न इति बोधः। केचित्तु, अत्र "देशे वृत्तौ कालस्येव काले वृत्तौ देशस्याप्यवच्छेदकत्वमङ्गीकृत्य एतत्कालवृत्तिगवाभावश्चत्वरावच्छिन्न इति बोधमङ्गीकुर्वन्ति। अतएव कपिसंयोगकपि विभागादीनां संयोगेन द्रव्यमात्रस्य च दैशिकाव्याप्यवृत्तित्वमङ्गीक्रियते, जन्यद्रव्यगुणकर्मणां सर्वेषामपि कालिकाव्याप्यवृत्तित्वं निर्विवादम् अवच्छेदकदेशकालभेदेन तत्तदभावयोः परस्परसामानाधिकरण्य दैशिकाव्याप्यवृत्तित्व कालिकाव्याप्यवृत्तित्वमितिव्यवह्रियते। एव घटध्वंसप्रागभावयोरपि अवच्छेदककालभेदेन तत्तत्प्रतियोगिसमानाधिकरणतया कालिकाव्याप्यवृत्तित्वमक्षतम्। भेदस्य तु कालिकाव्याप्यवृत्तित्वं दैशिकाव्याप्यवृत्तित्वमपि वा न संभवति, तस्य व्याप्यवृत्तित्वमेव। "तदधिकरणधर्मस्यैव तद्वृत्तिधर्मावच्छेदकत्वम्, इति नियमानुसारेण तद्वृक्षवृत्तिकपिसंयोगाभावाद्य वच्छेदकत्वं तद्वृक्षावयवभूतमूलादिदेशस्यैव सम्भवति नान्यमूलादीनां, अन्यमूलादेः तद्वृक्षावयवत्वासम्भवेन तद्वृक्षानधिकरणत्वात्॥

रक्तीभूतो घट इति च्विप्रत्ययस्थले आरक्तो रक्तीभवतीत्यर्थे पूर्वकालावच्छिन्नात्यन्ताभावप्रतियोगिरक्तत्वविशिष्टाभिन्नो घट इति बोधः। एव लोहितायते इतिक्यष्प्रयोगस्थलेपि अलोहितो लोहितो भवतीत्यर्थे पूर्वकालावच्छिन्नाभावप्रतियोगिलोहितत्ववानिति बोधः। इच्छायां क्यच्, पुत्रीयतीत्यत्र पुत्रमात्मनइच्छतीत्यर्थे विवक्षिते

आत्मीयत्व (स्वशरीरजन्यत्व) प्रकारकपुत्रविशेष्यकेच्छावान् इति बोध: । इच्छायां काम्यच्, पुत्रकाम्यतीत्यत्र पुत्रमात्मनइच्छतीत्यर्थे विवक्षिते क्यच्स्थल इव बोध. । उपमानभूतकर्मवाचकात्परत आचारे क्यच्, पुत्रीयतीत्यत्र पुत्रमिवाचरति छात्रमित्यर्थे विवक्षिते पुत्रसादृश्यप्रकारकच्छात्रविशेष्यकज्ञानवानयमिति बोध: (आचारोत्र ज्ञान) अथवा, पुत्रपद पुत्रोद्देश्यकयोगक्षेमविधानपरं, अत्राचारशब्दोपि योगक्षेमविधानपर:, तथाच पुत्रोद्देश्यकयोगक्षेमविधानसदृशयोगक्षेमविधानकर्तेति बोध' । उपमानभूतकर्तृवाचकात्परत आचारे क्यङ्, कृष्णायते इत्यत्र कृष्णइवाचतीत्यर्थे विवक्षिते कृष्णपदं कृष्णस्वभावपरम्, तस्याचारेन्वय., आचारोत्र स्वभाव:, सोपि तद्वृत्तिसाधारणधर्मरूप एव, तथाच कृष्णस्वभावसदृशस्वभाववानिति बोध: । उपमानभूतकर्तृवाचकात्परत: क्विप्, कृष्णतीत्यत्र कृष्णइवाचरतीत्यर्थे विवक्षिते क्यङ्स्थलइव बोध' । एव कुदति कुमुदतीत्यादावपि बोध: ॥

## ❀ सकर्मकाकर्मकधातुस्थलेषु शाब्दबोधविचार: ❀

रामो विराजत इत्यत्र प्रकाशाश्रयो राम इति बोध: (अयमकर्मककर्तरिप्रयोग:) रामो भूमण्डलमपालयदित्यत्र भूमण्डलकर्मकपरिपालनानुकूलकृतिमान राम इति बोध: । योगक्षेमाविधानं परिपालनं, स्थितस्य परिपालन योग' अप्राप्यप्रापणं क्षेम: (अयं सकर्मककर्तरिप्रयोग:) (२) उपार्जिता च रामेण कीर्तिरन्यादृशी भुवीत्यत्र रामकर्तृकार्जनकर्मभूता कीर्तिरिति बोध: (अय कर्मणिप्रयोग:) (३) रामचन्द्रो दशग्रीव परलोकमनीनयदित्यत्र नय-

संयोगवान्वृक्षःमूलावच्छिन्न कपिसंयोगाभाव वान्वृक्ष इति बोधः। इहपर्वते नितम्बे हुताशनो न शिखरे इत्यत्रापि नितंबावच्छिन्नः पर्वतवृत्तिहुताशनः शिखरावच्छिन्नः पर्वतवृत्तिहुताशनाभाव इति बोधः। एव इह चत्वरे गौर्नास्तीत्यत्र चत्वरवृत्तिः गवाभाव एतत्कालावच्छिन्न इति बोध। केचित्तु, अत्र "देशे वृत्तौ कालस्येव काले वृत्तौ देशस्याप्यवच्छेदकत्वमङ्गीकृत्य एतत्कालवृत्तिगवाभावश्चत्वरावच्छिन्न इति बोधमङ्गीकुर्वन्ति। अतएव कपिसयोगकपि विभागादीनां सयोगेन द्रव्यमात्रस्य च दैशिकाव्याप्यवृत्तित्वमङ्गीक्रियते, जन्यद्रव्यगुणकर्मणां सर्वेषामपि कालिकाव्याप्यवृत्तित्वं निर्विवादम् अवच्छेदकदेशकालभेदेन तत्तदभावयोः परस्परसामानाधिकरण्य दैशिकाव्याप्यवृत्तित्व कालिकाव्याप्यवृत्तित्वमितिव्यवह्रियते। एव घटध्वंसप्रागभावयोरपि अवच्छेदककालभेदेन तत्तत्प्रतियोगिसमानाधिकरणतया कालिकाव्याप्यवृत्तित्वमक्षतम्। भेदस्य तु कालिकाव्याप्यवृत्तित्वं दैशिकाव्याप्यवृत्तित्वमपि वा न संभवति, तस्य व्याप्यवृत्तित्वमेव। "तदधिकरणधर्मस्यैव तद्वृत्तिधर्मावच्छेदकत्वम्, इति नियमानुसारेण तद्वृक्षवृत्तिकपिसयोगाभावाद्य वच्छेदकत्वं तद्वृक्षावयवभूतमूलादिदेशस्यैव सम्भवति नान्यमूलादीनां, अन्यमूलादेः तद्वृक्षावयवत्वासम्भवेन तद्वृक्षानधिकरणत्वात्॥

रक्तीभूतो घट इति च्विप्रत्ययस्थले आरक्तो रक्तीभवतीत्यर्थे पूर्वकालावच्छिन्नात्यन्ताभावप्रतियोगिरक्तत्वविशिष्टाभिन्नो घट इति बोधः। एव लोहितायते इतिक्यष्प्रयोगस्थलेऽपि अलोहितो लोहितो भवतीत्यर्थे पूर्वकालावच्छिन्नाभावप्रतियोगिलोहितत्ववानिति बोधः। इच्छायां क्यच्, पुत्रीयतीत्यत्र पुत्रमात्मनइच्छतीत्यर्थे विवक्षिते

आत्मीयत्व (स्वशरीरजन्यत्व) प्रकारकपुत्रविशेष्यकेच्छावान् इति बोधः। इच्छायां काम्यच्, पुत्रकाम्यतीत्यत्र पुत्रमात्मनइच्छतीत्यर्थे विवक्षिते क्यच्स्थल इव बोध । उपमानभूतकर्मवाचकात्परत आचारे क्यच्, पुत्रीयतीत्यत्र पुत्रमिवाचरति छात्रमित्यर्थे विवक्षिते पुत्रसादृश्यप्रकारकच्छात्रविशेष्यकज्ञानवानयमिति बोधः (आचारोत्र ज्ञान) अथवा, पुत्रपद पुत्रोद्देश्यकयोगक्षेमविधानपरं, अत्राचारशब्दोपि योगक्षेमविधानपरः, तथाच पुत्रोद्देश्यकयोगक्षेमविधानसदृशयोगक्षेमविधानकर्तेति बोध. । उपमानभूतकर्तृवाचकात्परत आचारे क्यङ्, कृष्णायते इत्यत्र कृष्णइवाचतीत्यर्थे विवक्षिते कृष्णपद कृष्णस्वभावपरम्, तस्याचारेन्वयः, आचारोत्र स्वभाव., सोपि तद्वृत्तिसाधारणधर्मरूप एव, तथाच कृष्णस्वभावसदृशस्वभाववानिति बोधः। उपमानभूतकर्तृवाचकात्परतः क्विप्, कृष्णतीत्यत्र कृष्णइवाचरतीत्यर्थे विवक्षिते क्यङ्स्थलइव बोध । एव कुदति कुसुदतीत्यादावपि बोधः ॥

## ❀ सकर्मकाकर्मकधातुस्थलेषु शाब्दबोधविचारः ❀

रामो विराजत इत्यत्र प्रकाशाश्रयो राम इति बोधः (अयमकर्मककर्तरिप्रयोग.) रामो भूमण्डलमपालयदित्यत्र भूमण्डलकर्मकपरिपालनानुकूलकृतिमान् राम इति बोधः। योगक्षेमविधानं परिपालन, स्थितस्य परिपालन योग अप्राप्यप्रापण क्षेमः (अय सकर्मककर्तरिप्रयोगः) (२) उपार्जिता च रामेण कीर्तिरन्यादृशी भुवीत्यत्र रामकर्तृकार्जनकर्मभूता कीर्तिरिति बोधः (अय कर्मणिप्रयोगः) (३) रामचन्द्रो दशग्रीव परलोकमनीनयदित्यत्र नय-

धातोः गत्यवच्छिन्नव्यापारार्थकतया गतेश्चोन्तरदेशासंयोगावच्छिन्नक्रियारूपतया परलोकस्याधेयत्वसम्बन्धेन तदेकदेशोत्तरदेशसयोगेऽन्वये दशग्रीवस्याधेयत्वसम्बन्धेन तदवच्छिन्नक्रियायाञ्च अन्वये आख्यातस्य कृत्यर्थकत्वे भूतकालीनत्वार्थकत्वे च परलोकनिष्ठसयोगावच्छिन्नदशग्रीवनिष्ठक्रियानुकूलव्यापारानुकूलकृतिमान्रामचद्र इति बोधः (अय द्विकर्मककर्तरिप्रयोगः) (४) बन्धयामासकपिभिस्सेतु सीतापतिस्स्वयमित्यत्र कपि कर्तृकसेतुकर्मकबन्धनानुकूलकृतिमान् सीतापतिरिति बोधः, अत्र कपीनां प्रयोज्यकर्तृत्वं सीतापते. प्रयोजककर्तृत्वमिति भेदोऽवगन्तव्यः (अयं द्विकर्तृककर्तरिप्रयोग ) (५) वायुपुत्रेण रामेण लङ्काऽकारि च भस्मसादित्यत्र रामकृत्यधीना या वायुपुत्रगतिः तत्प्रयोज्य यद्भस्मीभवन (भस्मरूपत्व) तद्विशिष्टा लङ्केति बोधः (अयं द्विकर्तृककर्मणिप्रयोगः) (६) दशास्यो जानकीशेन त्रिविष्टपमनायिचेत्यत्र रामनिष्ठकृतिप्रयोज्यव्यापाराधीनत्रिविष्टपनिष्ठसयोगावच्छिन्नक्रियावान् दशास्य इति बोधः (अय द्विकर्मककर्मणिप्रयोग) (७) वसुदेवेन देवर्षिर्हरिस्मस्मारितो गुणैः पूज्यते च स्वय राम इत्यत्र गुणनिमित्तकवसुदेववृत्तिस्मृतिविषयीभूतो हरिः इति बोधः अयं कर्मकर्तरिप्रयोग) (८) रामचद्रेण भूयत इत्यत्र रामचद्रवृत्ति भवनमिति बोधः (अयं भावेप्रयोगः) (९) .

## ❀ गुरुधर्मस्य अभावप्रतियोगितावच्छेदकत्वनिरासः ❀

"सम्भवति लघौ धर्मे गुरौ तदभावात्, इति नियमेन अतिप्रसङ्गानापादकलघुधर्मे अभावप्रतियोगितावच्छेदकत्वसम्भवे गुरुधर्मस्य तदवच्छेदकत्वं नाङ्गीकर्तव्यमिति सिद्धम्, तथाच समनियताभावानामैक्याङ्गीकारेण वन्ह्यभावप्रमेयवन्ह्यभावयो तत्प्रतीत्योश्च समनैयत्येन प्रमेयवह्निर्नास्तीतिप्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वं अतिप्रसङ्गानापादकवह्नित्वएव अङ्गीक्रियते। एव कम्बुग्रीवादिमान् नास्तीतिप्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वं अतिप्रसङ्गानापादके लघौ घटत्वएवाङ्गीक्रियते, ननु अनन्तघटीयसंयोगरूपकम्बुग्रीवादिमत्त्वे तदङ्गीक्रियते, तथाङ्गीकारे गौरवात्। ननु कम्बुग्रीवादिमान्नास्तीतिप्रतीतौ कम्बुग्रीवादिमत्त्वस्य प्रतियोगितावच्छेदकतया भानानङ्गीकारे कम्बुग्रीवादिमदंशे तस्य प्रकारतयापि भाव न स्यात्, घटाभावादिस्थले प्रतियोगितावच्छेदकघटत्वस्यैव प्रतियोग्यशे भासमानत्वात्, घटत्वस्यैवात्रापि प्रकारतया भानस्य समुचितत्वात् इति चेन्न, उल्लिख्यमानस्य कम्बुग्रीवादि मत्त्वादेः प्रकारताया गीर्वाणगुरुणाप्यशक्यपरिहारत्वात्। नच तर्हि "अभावविशिष्टबुद्धिः विशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेते, इति न्यायेन तत्प्रतीतौ कम्बुग्रीवादिमत्त्वविशिष्टवैशिष्ट्यावगाहित्वस्य अङ्गीकर्तव्यतया कम्बुग्रीवादिमत्त्वस्य अभावप्रतियोगितावच्छेदकत्वमपि दुर्वारमिति वाच्यम्, घटत्वेन पटो नास्ति द्रव्यत्वेन पटो नास्तीत्यादौ प्रति

योग्यंशे भासमानपटत्वादेः प्रतियोगितावच्छेदकत्वाभाव इव अत्रापि प्रतियोग्यंशे भासमानस्य कम्बुग्रीवादिमत्त्वादेः प्रतियोगितावच्छेदकत्वाभावस्य व्यधिकरणधर्मावच्छिन्नाभावस्थलइव कम्बुग्रीवादिमान्नास्तीत्यादावपि अभावविशिष्टबुद्धिरितिनियमानङ्गीकरणस्य च समुचितत्वात् । नच व्यधिकरणधर्मावच्छिन्नाभावादिस्थलेष्विव तद्विजातीयसामान्याभावस्थले तथा भानाङ्गीकरण तन्नियमानङ्गीकरणश्चायुक्तमिति वाच्यम्, एतादृशलघुधर्मप्रतियोगितावच्छेदककस्थलानामपि तत्सादृश्येनाङ्गीक्रियमाणत्वेन न काप्यनुपपत्तिः, तथाच कम्बुग्रीवादिमान्नास्तीत्यत्र घटत्वस्य तदभावप्रतियोगितावच्छेदकत्व कम्बुग्रीवादिमत्त्वस्य प्रतियोग्यंशे प्रकारत्व च निर्विवादमिति केषाञ्चिदाशयः । परेतु, सामान्याभावस्थले अभावविशिष्टबुद्धिः यद्वाशिष्टवैशिष्ट्यावगाहिनी सा तत्प्रतियोगितावच्छेदककैवेति व्यवस्थामङ्गीकृत्य कम्बुग्रीवादिमान्नास्तीत्यत्र कम्बुग्रीवापदस्य घटत्वावच्छिन्नाभावे लक्षणां इतरस्य तात्पर्यग्रहकत्वञ्चाङ्गीकृत्य तत्र कम्बुग्रीवादिमत्त्वस्य प्रकारत्वमप्यनङ्गीकृत्य घटत्वावच्छिन्नाभावविषयकत्वमेवाङ्गीकुर्वन्ति ॥

श्रीमत्त्रिलिङ्गदेशविराजमानगुंटूरुमण्डलान्तर्वर्तिश्रीकृष्णातटिनीसमीपवर्तिवेमूरुग्रामवास्तव्येन न्यायवेदान्ततन्त्रसमुपलब्धनिखधिकप्रज्ञाविशेषवेमूर्युपनामकरामब्रह्मसुधीन्द्रगुरुवरपदपङ्कजसेवासमधिगतविज्ञानेन गुंटूरुमण्डलान्तर्वर्तितेनालिसंस्कृतकलाशालाया तर्कलङ्कारशास्त्राध्यापकेनकुरुगंटयुपनामकसूर्यनारायणशास्त्रिद्वितीयतनूभवेन श्रीरत्नमाम्बागर्भसम्भूतेन वेङ्कटरामशास्त्रिणः कनिष्टसोदरेण

रसिहावधानिनो ज्येष्ठसोदरेण श्रीरामशास्त्रिणा विरचिते श्रीमदन्न भट्टविरचिततर्कसंग्रहदीपिकाव्याख्यानरूपे दीपिकासर्वस्वे भगवदर्पिते पारिभाषिकपदार्थसंग्रहस्समाप्तः ॥

अयं ग्रन्थस्समाप्तः

* सर्वं श्रीपरमेश्वरार्पणमस्तु *

श्लो* व्युत्पित्सुसुखबोधाय, प्रणीतेऽस्मिन् प्रमादतः ।
मुद्रणादिषु ये दोषाः, क्षन्तव्यास्तेऽखिला बुधैः ॥

श्रीः श्रीः श्रीः श्रीः श्रीः

कलियुगादिगताब्दाः ५०२९
हूणशकगताब्दाः १९२८
विभवनामसंवत्सरः

# मूले शुद्धाशुद्ध पत्रिका

47 पृष्ठे, आत्मनोभोगायतनमित्यतः पूर्वं 'प्रकारान्तरेण विभजते पुनरिति" इति वाक्यं प्रवेशनीयम्—

218 पृष्ठे, नन्वर्थज्ञानार्थत्वाच्छब्दस्ये त्यतः पूर्वं "द्वारमित्यादौ पिधेहीति शब्दाध्याहार, इति वाक्यं प्रवेशनीयम् ।

| शुद्धम् | अशुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| विधाय | विदाय | 8 | 13 |
| पार्थिवम् | पाथिवम् | 52 | 15 |
| द्रवत्व नाशप्रति बन्धकतया | द्रवत्वनाशकतया | 52 | 20 |
| व्यवह्रियते | व्यवह्यियते | 55 | 15 |
| गित्वं | गित्व | 66 | 18 |
| मूर्तत्वं | मूतत्वम् | 66 | 18 |
| अतिरिक्तचित्ररूप | चित्ररूप | 84 | 2 |
| उद्भूतम् | उद्भूत | 90 | 16 |
| असाधारणेति | साधारणेति | 111 | 2 |
| विशेषण-विशेष्य | विशेष्य विशेषण | 127 | 11 |
| इन्द्रियम् | इन्द्रिय | 127 | 13 |
| प्रत्यक्षप्रमाण | प्रत्यक्षज्ञान | 127 | 14 |
| साक्षात्करोमि | साक्षात्तरोमि | 134 | 11 |
| दाहकारण | दाहकरण | 135 | 11 |
| व्यापेरभिनयः | व्यापेभिनयः | 143 | 18 |
| नमपि | नमपि ग | 167 | 21 |
| उत्सन्नैवेति | उत्पन्नैवेति | 228 | 5 |